# सारस्वती सुषमा

## सम्पूर्णानन्दसंस्कृतविश्वविद्यालयानुसन्धानपत्रिका

[ त्रैमासिकी ]




५४ वर्षे
१-२ अङ्कौ

ज्येष्ठ-भाद्रपदपूर्णिमे
जून - सितम्बर, १९९९ ई.

# सारस्वती सुषमा

## सम्पूर्णानन्दसंस्कृतविश्वविद्यालयानुसन्धानपत्रिका

[ त्रैमासिकी ]


सम्पादकौ

**डॉ. राजारामशुक्लः**
निदेशकः, अनुसन्धानसंस्थानस्य

**डॉ. हरिश्चन्द्रमणित्रिपाठी**
निदेशकः, प्रकाशनसंस्थानस्य






५४ वर्षे
१-२ अङ्कौ

वार्षिकं मूल्यम् - १०० रूप्यकाणि
जून - सितम्बर, १९९९ ई.



---

*प्रकाशकः —*
**डॉ. हरिश्चन्द्रमणित्रिपाठी**
निदेशकः, प्रकाशनसंस्थानस्य
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये

*मुद्रकः —*
**श्रीजी-कम्प्यूटर प्रिण्टर्स**
नाटी इमली
वाराणसी - २२१००१

---

*प्राप्तिस्थानम्—*
**विक्रय-विभागः**, सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य, वाराणसी-२२१००२

---

# सम्पादकीयम्

तत्तच्छात्राणामध्ययनाध्यापनादिभिः सहैव तत्र नवनवतत्त्वानां गवेषणादिनापि शास्त्रपरम्परापरिरक्षणे चिरादात्मानं व्यापारयन् विराजतेऽयं विश्वविद्यालय इति नास्ति तिरोहितं कस्यापि। संस्कृतवाङ्मयं हि भगवतो वेदादारभ्य इदानीमपि नैकाभिर्विधाभिः परिपुष्टतामासादयद् एकतो गभीराभिः पाण्डितीभिरामण्डितम्, अपरतश्च कोमलाभिः कवितालतिकाभिरालिङ्गितं विराजते। तत्र निगूढानि कियन्ति हि तत्त्वानि प्रकाशितान्यस्माकं पूर्वाचार्यैः, इदानीमपि च प्रकाश्यमानानि सन्ति इदानीन्तनैराचार्यैः। तान्येव लोकस्य पुरस्तादुपस्थापयितुमेतद्विश्वविद्यालयस्य स्थापनाकालत एव **अनुसन्धानसंस्थानस्य** स्थापना, तन्माध्यमेन च विश्वविद्यालयीय**सरस्वतीभवनग्रन्थालये** विद्यमानानां दुर्लभपाण्डुलिपीनां सम्पादनकार्यमिव त्रैमासिकानुसन्धानपत्रिकायाः **सारस्वत्याः सुषमायाः** प्रकाशनमपि निरन्तरायं क्रियमाणमस्ति। तस्यां हि विशिष्टानां शास्त्रीयानां शोधनिबन्धानामिव उत्कृष्टानां लघुग्रन्थानाम् (विशिष्य सरस्वतीभवनस्थपाण्डुलिपिविशेषानाश्रित्य सम्पादितानाम्) अपि प्रकाशनं क्रियते।

इत ऊर्ध्वमस्यां **'विमर्शः', 'ग्रन्थसमीक्षा'** चेति नूतनं स्तम्भविशेष-युगलमारब्धुं समीहामहे। तत्रादिमे सुषमायां प्रकाशितचरान् निबन्धान् आश्रित्य भवदीयो विमर्शः (अनभिमतिः, परामर्शः, वक्तव्यान्तरं) प्रकाशयिष्यते, क्रमेण तदुपरि मूललेखकस्यान्येषां विदुषां वा आशयः प्रत्युत्तरं वा प्रकाशयिष्यते, येन मिथो विचारविनिमयस्य कश्चन अवसरः प्राप्तो भवेत्। द्वितीये हि नूतनतया प्राकाश्यं नीतस्य ग्रन्थस्य समीक्षा प्रकाशयिष्यते। तदर्थं ग्रन्थस्य प्रतिद्वयमत्र प्रेषणीयम्। स्वयं विलिख्य प्रेषितया समीक्षया सह ग्रन्थस्यैका प्रतिरवश्यं प्रेषणीया।

तदिदं समग्रमपि सारस्वतानुष्ठानं भवत्सहकारसाकाङ्क्षम्। भवन्तो हि स्वस्वविद्यापारङ्गता महनीयनिबन्धानां, लघुग्रन्थानां, भवद्विमर्शानां समीक्षार्थं ग्रन्थानाञ्च सम्प्रेषणेनावश्यमेवास्मानुपकरिष्यन्तीत्याशास्महे। भवदीया कृतिर्नातिगुरुशरीरापि विषयगुर्वी प्रायशो भवतीति दृढो नः प्रत्ययः। तत्तादृशी रचनाः सम्प्रेष्यास्मानुत्साहयिष्यन्ति तत्रभवन्त इति दृढं विश्वसिमः।

साम्प्रतमिमामङ्कयुगलीलालितां **सारस्वतीं सुषमां** विदुषां करकमलयो-रर्पयन्नपरिमितां मुदमुद्वहामि। अत्र हि नानाशास्त्रार्थभरिता नैके विशिष्टाः

प्रबन्धा विद्वद्भिर्निबद्धा विराजन्ते। प्रथमतो जीवब्रह्मणोर्बिम्बप्रतिबिम्बभावम् अद्वैत-सिद्धान्तसम्मतं सोक्तियुक्ति प्रकाशयन् सङ्काशते **आचार्यैः श्रीरामकिशोरत्रिपाठि-**भिराबद्धो निबन्धः। प्राच्यप्रतीच्योभयविधविद्वदुक्तिपरिशीलनपुरःसरं **डॉ. बनारसी-त्रिपाठि**भिर्विलिखितः 'अमूर्तदेवतातत्त्वविमर्शः' इति निबन्धविशेषोऽप्यत्र विशिष्टं पदमादधाति। भारतीयदर्शनेष्वप्यास्तिकनास्तिकभेदेन द्वैविध्यं निरूपयन् विमर्शकानां महान् विचारो नाद्यापि इदमित्थमिति प्रत्ययं प्रादुर्भावयितुं प्राभवत्। केचिद् बौद्धजैनादिदर्शनानाम् आस्तिककोटितो बहिर्भावम्, अन्ये चान्तर्भावमिच्छन्ति प्रमाणानि च प्रकटयन्ति स्वे स्वे पक्षे। सोऽयमपरः सत्प्रयासविशेषो **डॉ. हरिप्रसाद-अधिकारि**भिरनुष्ठितो विमर्शकानां पुरस्तादुप-स्थाप्यते। विधवाविवाहमीमांसामिषेण नैकान् मीमांसान्यायान् तत्सम्बन्धीनि च नैकान्यधिकरणानि विश्लेषयन् **डॉ. कमलाकान्तत्रिपाठिनां** निबन्धो रचयितुर्बहुवित्त्वं प्रकटयति। ज्योतिषशास्त्रदृष्ट्या कालस्वरूपं तत्प्रसङ्गेन चान्येषां दर्शनानां मतानि संक्षेपतः प्रस्तुवन् **डॉ. देवीप्रसादत्रिपाठिनां** लेखोऽपि स्तुतिमर्हति। एवञ्चान्येऽपि वैदुष्यपरिपूर्णा निबन्धा यथापरम्परमन्ते प्रकाशमानं लघुग्रन्थयुगलमपि च विदुषां मोदमवश्यमावहेयुरिति विश्वसन् प्रयासमस्माकं समस्तमपि सार्थकयितुमर्थयामि तत्त्वार्थदर्शिनो विपश्चिदपश्चिमान्—

**वाराणस्याम्**
कार्तिकपूर्णिमायाम्,
२०५८ तमे वैक्रमाब्दे

**राजारामशुक्लः**
निदेशकः, अनुसन्धानसंस्थानस्य
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये

# विषयानुक्रमणी

# सारस्वती सुषमा

## सम्पूर्णानन्दसंस्कृतविश्वविद्यालयानुसन्धानपत्रिका

| ५४ वर्षे | ज्येष्ठ-भाद्रपदपूर्णिमे, वि.सं. २०५६ | १-२ अङ्कौ |
|---|---|---|

# प्रतिबिम्बवादः

**प्रो. रामकिशोरत्रिपाठी**

दर्शनसङ्कायाध्यक्षः
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
वाराणसी



स्वच्छे निर्मलदर्पणे भ्रमवशाद्बिम्बच्छटाऽध्यस्यते
चैतन्ये प्रतिबिम्बरूपमखिलं मिथ्यैव सम्भासते ।
तेनाध्यस्तमिदं प्रपञ्चसहितं लोकप्रवृत्त्याशयं
ब्रह्मज्ञाननिवर्तितो हि सकलोऽध्यासप्रशस्तिः कुतः ।।

नित्यानित्यविभागशून्यविमतं सद्वस्तुवद् भासते
नीरूपप्रतिरूपमेव सकलं व्यासक्तिजन्यं सदा ।
अज्ञानप्रतिबिम्बभूतमखिलं ब्रह्मप्रभाबाधितं
सज्ज्ञानेन निवर्त्यते जगदिदं भ्रान्त्या समुत्साहितम् ।।

यद्वा ब्रह्मसमस्तलोकरचनाशक्त्या च बिम्बाश्रितं
नित्यं सत्प्रतिबिम्बितेन जगतोऽभिन्नं प्रपञ्चास्पदम्।
नीरूपं प्रतिरूपतां गतमहो व्योम्नोऽपि सद्रूपता
भिन्नाभिन्नमिदं विभाति विधिवशाद् बिम्बावसक्तं जगत् ।।

अज्ञानेनावृतज्ञानशक्तितया नित्यानित्यवस्तुभेदशून्यमिदं जगत् सद्वस्तुस्वरूपाद् भिन्नमप्यभिन्नतयाऽवभासते। तत्रावस्तुतया रूपहीनं रज्जौ प्रतिभासमानसर्पवद्वस्तुनो ब्रह्मणो रूपरूषितं सद्वस्तुवत् प्रतीयते। ननु नीरूपस्य ब्रह्मणः कथं प्रतिबिम्बत्वमत्रोच्यते नभोवत्। नीरूपस्याकाशस्यालोकाभावेन

रूपवत्त्वम्। तेनाज्ञानस्य व्यष्टितयाऽभास्वरशुक्लरूपमपि जलं तमोरूपोपाधिना श्यामतामापद्यते। अज्ञानस्य समष्टितया च तदेव जलाशयत्वेन महाकाशरूपरूषितं भासते। "न संदृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैकः"[१]।। "दिव्यो ह्यमूर्तः पुरुषः स बाह्याभ्यन्तरो ह्यजः"[२]। "वह्नेर्यथा योनिगतस्य भूतिर्न दृश्यते नैव च लिङ्गनाशः"[३] इति श्रुतिभिररूपत्वेनावबोधितमपि चैतन्यमज्ञानोपाधिनोपहितत्वेन रूपवदवभासते।

यथैक एव चन्द्रः स्वबिम्बासक्तजलादिभेदेन भिन्नः, तद्गतक्रियाशीलतया चञ्चलश्च भवति, तथैव "निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्" इति श्रुत्या नीरूपं क्रियाहीनमपि ब्रह्माज्ञानोपाधिनोपहितं सत् सक्रियं रूपवच्च भवति[४]। तत्र प्रतिशरीरं भासमानत्वेन च भिन्नमपि। तथा चोक्तम्—

"एक एव हि भूतात्मा भूते भूते व्यवस्थितः।
एकधा बहुधा चैव दृश्यते जलचन्द्रवत्"[५]।।

ननु निरवयवस्य परमात्मनो बिम्बत्वाभावात् कथं तस्य प्रतिबिम्बितमत्रोच्यते निरवयवस्याप्याकाशस्यालोकाभावसमवहितेन प्रतिबिम्बदर्शनात्। यथा नीरूपस्य निर्मलस्याकाशस्य यच्छ्यामरूपत्वं तदवलोकयितृनेत्रसामर्थ्यभावोत्पन्नतिमिरत्वादिना, न तु तत्र वास्तविकं श्यामरूपमस्ति, तथैवात्रापि प्रमातुरज्ञानोपाधिनोपहितत्वेन तथ्यातथ्यविवेचकत्वाभावे स्वाज्ञानस्य परमात्मन्यारोपात् परमात्मनः प्रतिबिम्बत्वेनात्मानं जानाति। "न बिम्बकृतं तत्त्वज्ञानाश्रयत्वम्; किन्तु भ्रान्तत्वकृतम्, तदप्यज्ञत्वकृतम्, तदपि जीवत्वनिमित्तम्"[६]।

वस्तुतो नीरूपमप्याकाशं जपाकुसुमगतलोहितत्वादिरागवशाद् रक्तो लोहितः स्फटिक इव पृथिवीसमवहितेन तद्गतरूपरूषितमिव भवति। एवं परमात्मापि नानाऽज्ञानोपाध्युपहितजीवात्मरूपाध्यासेन तद्रूपरूषित इव भाति। तथा चोक्तं भाष्यकारेण "परमार्थतोऽविकृतमेकरूपमपि सद्ब्रह्म देहाद्युपाध्यन्तर्भावाद् भजत इवोपाधिधर्मान्"[७]।

अयं प्रतिबिम्बः छायामात्रमन्यः कश्चिद्वा वस्तुविशेषः? नाद्यः, छाया हि प्रकाशातिरेकेण बिम्बमनुसरन्ती शरीरक्रियादिकमधिश्रित्य क्रियावतीव तमोरूपा

१. कठो. २।२।९; २. मुण्ड. २।१।२।
३. श्वेता. १।१३; ४. तत्रैव-६।१९।
५. पञ्चदशी-ब्रह्मानन्दे ९; ६. पञ्चपादिकाविवरणे।
७. शा. भा., ब्र. सू. ३।२।२०।

प्रत्याकृतिमात्रम्। प्रतिबिम्बस्तु स्वाश्रयजलाशयगतक्रियामपेक्षते। अधिष्ठानानेकत्वेनानेकरूपश्च भवति।

प्रतिबिम्बं यथाऽन्यत्र स्थितं तोयक्रियावशात्।
तत्प्रवृत्तिमिवान्वेति स धर्मः स्फोटनादयोः[१]।।

नापि द्वितीयः, प्रतिबिम्बो यदि वस्तुविशेषः स्यात्तदा बिम्बसमवधानाभावेऽपि उपलभ्येत। अतो विलक्षणोऽयं शुक्तिरूप्यवत् कश्चिदनिर्वचनीयपदार्थः प्रतिबिम्बः। "न छाया नापि वस्त्वन्यत् प्रतिबिम्बमसम्भवात्[२]"। अयमेव प्रतिबिम्बः सकलप्रपञ्चाध्यासे निमित्तम्।

अज्ञानस्यैव महिम्ना जीवेशविभागः, तथा हि सत्त्वशुद्ध्यविशुद्धिभ्यामज्ञानं मायाऽविद्यारूपतामापद्यते। तत्र मायायां प्रतिबिम्बितं चैतन्यमीश्वरः। अविद्यायां प्रतिबिम्बितं च जीव इत्युच्यते। तत्रैकजीववादेऽविद्याप्रतिबिम्बो जीवः, अविद्याया एकत्वेन तत्प्रतिबिम्बस्य जीवस्याप्येकत्वौचित्यात् "तद्यो यो देवानां प्रत्यबुद्ध्यत स एव तदभवत्तथर्षीणां तथा मनुष्याणाम्"[३]। "यथाग्नेः क्षुद्राविस्फुलिङ्गा व्युच्चरन्ति, एवमेवैतस्मादात्मनः सर्व एत आत्मानः"[४] इत्यादिश्रुतेः, "मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते"[५] इत्यादिस्मृतेः, "भागेन त्वितरे क्षपयित्वा सम्पद्यन्ते"[६] इत्यादिसूत्राच्च।

अनेकजीववादेऽन्तःकरणप्रतिबिम्बो जीवः। अविद्या हि जीवात्मनः स्थूलसूक्ष्मशरीरादिकारणम्। तस्यास्तमःप्रधानभूताया वियदादयः पञ्चभूतान्युत्पद्यन्ते। तेषां वियदादीनां पञ्चभिः सत्त्वांशैः सत्त्वगुणभागैरुपादानभूतैः श्रोत्रत्वगक्षिरसनघ्राणाख्यज्ञानेन्द्रियाणि पञ्च। तैः सत्त्वांशैः सह सम्भूय मनोबुद्ध्युपादानभूतमन्तःकरणरूपं द्रव्यमुपजायते। तस्यानेकत्वात्तत्प्रतिबिम्बितचैतन्यरूपस्य जीवस्याप्यनेकत्वं सिद्ध्यति।

ननु प्रतिबिम्बस्तैजसपदार्थ एव सम्भवति, न हि पृथिव्यादिमालिन्यप्रधाने द्रव्ये कदापि सूर्यः प्रतिबिम्बते, तत्र प्रतिबिम्बसामर्थ्यस्य तैजसपदार्थस्याभावात्। अविद्यायामपि तैजसत्वाभावात्प्रतिबिम्बासम्भव इति चेत्, न, तत्रोद्भूतसत्त्वांशतया तैजसांशस्योद्भूतत्वात्। मायाऽविद्ययो; सत्त्वांशस्य शुद्धाविशुद्धभावेन विद्यमानत्वात्।

"सत्त्वशुद्ध्यविशुद्धिभ्यां मायाऽविद्ये च ते मते।
मायाबिम्बो वशीकृत्य तां स्यात्सर्वज्ञ ईश्वरः"[७]।।

---

१. वाक्यपदीये-१।४९; २. सिद्धान्तलेशसङ्ग्रहः; ३. बृ. उप. १।४।१०।
४. बृ. उप. २।१।२०; ५. भग. गीता-७।१४; ६. ब्र सू. ४।१।१९।
७. पञ्चदशी-१।१६।

सत्त्वांशस्य शुद्ध्यविशुद्धिभेदेनाज्ञाने मायाऽविद्यारूपविभागः। तत्र सत्त्वांशस्य शुद्धितयाऽतिप्रकाशक्षमत्वात्तदंशभूतमज्ञानं मायेति व्यपदिश्यते। तत्र प्रतिबिम्बितं चैतन्यमीश्वर इति कथ्यते। अत एवेश्वरस्य सर्वज्ञत्वं सर्वशक्तिमत्त्वं सर्वनियन्तृत्वञ्च प्रतिपद्यन्ते। सत्त्वांशस्याविशुद्धित्वेन तदज्ञानमयविद्येति व्यपदिश्यते, तत्र प्रतिबिम्बितं चैतन्यं जीव इति कथ्यते।

प्रपञ्चस्याविद्याजन्यतया चैतन्येऽध्यस्तत्वेनावभासः। नानाऽज्ञानजन्यानेकवासनावासितचित्तवृत्तितयाऽनेकेषणाकल्पितवस्तुस्वरूपं परमात्मनि भासते। तत्र प्रतिभासमानवस्तुस्वरूपेषु ममेदम् अस्याहमिति मोहजनिकाऽविद्यैव कारणम्। तत्राज्ञानं प्रथमं मोहमुत्पादयति, उत्पन्नो मोहश्चेषणां प्रकटयति, मोहोत्पन्नेषणा हि वस्तुस्वरूपं कल्पयति, कल्पितवस्तुस्वरूपं प्रतिबिम्बत्वेन परमात्मनि तादात्म्येनाध्यस्यते। "अज्ञानकल्पितमनिर्वचनीयमस्मिन्नाबालवृद्धमविवादपदं प्रसिद्धम्"[१]।

पूर्वमविद्या चिदात्मन्यध्यस्यते, तत्राध्यस्ता सा चैतन्यांशरूपमावरणशक्त्याऽऽवृत्य विक्षेपशक्त्या प्रपञ्चमुद्भावयति। उद्भूतश्चायं प्रपञ्चश्चैतन्यमधिशेते। मालिन्यप्राधान्येन कलुषीभूतान्तःकरणवृत्तिरीप्सितकामनासञ्चितविषयत्वेन प्रपञ्चं सङ्गृह्णाति। अतो वियदादिसकलप्रपञ्चोऽन्तःकरणवृत्तावभासते। बाह्यघटादिविषयाश्चैतन्यप्रतिबिम्बा अन्तःकरणस्य वा। नाद्यः, अमूर्तचैतन्यस्य प्रतिबिम्बासम्भवात्, लोके हि मूर्तमन्मुखादेरेव प्रतिबिम्बदर्शनात्। नापि द्वितीयः, जडभूतस्याप्यन्तःकरणस्यामूर्तत्वात्। अत्रोच्यते बुद्धिस्थविषया एव वासनामयत्वेन बाह्यघटादिरूपेण प्रतिबिम्बन्ते, ते च चित्तपरिणामजायमानाः, न तु वास्तविकाः सन्ति। यदि बाह्यविषयसापेक्षप्रतिबिम्बस्थितिः स्यात्, तदा शुक्तिरजतादिप्रतीतिकरभ्रमस्थले स्वप्ने च विषयावभासो न स्यात्, तत्र विषयाणां व्यावहारिकसत्ताभावात्। तथा चोक्तम्—

"बहिर्न किञ्चिदप्यस्ति खाद्यब्ध्युर्वीदिगादिकम् ।
एतत्स्वचित्त एवास्ति पत्रपुञ्जमिवाङ्कुरे ।।
फलादिस्फारतामेति यथैव बहिरङ्कुरात् ।
बहिः प्रकटतां याति तथा पृथ्व्यादिचेतसः ।।
सत्यं पृथ्व्यादि चित्तस्थं न बहिष्ठं कदाचन ।
आबालमेतत्पुरुषैः सर्वैरिवानुभूयते ।
स्वप्नभ्रममदावेगरागरोगादिदृष्टिषु"[२] ।।

---

१. संक्षेपशारीरके-१।३३६; २. योगवा. ५।४८,४९,५३।

दर्पणस्थे मुखप्रतिबिम्बे मुखादिबुद्धिवदन्तःकरणस्य स्वच्छतया तत्र घटादिविषयाणां प्रतिबिम्बिते घटादिविषया बुद्धिर्भवति। जडेष्वन्तःकरणवृत्तिरूपेषु चैतन्यमपि सङ्क्रान्तमिव दृश्यते। तत्सङ्क्रमविशिष्टान्तःकरणवृत्तावपि घटादिविषयाणां न बाह्यविषयत्वेन प्रतिबिम्बप्रत्ययः। अत एवाह—"चित्तस्य द्रव्यरूपो वृत्त्याख्यः परिणाम इन्द्रियप्रणाल्या निर्गत्य विषयेण संयुज्य सूक्ष्मावस्थारूपविषयवासनावशात् तत्तद्विषयाकारेण परिणमते, न तु तस्यां संयुक्तबाह्यविषयप्रतिबिम्बः स्वप्नादौ बाह्यविषयासंयोगेन तत्प्रतिबिम्बासम्भवात्"[1]।

अन्तःकरणचैतन्यस्यैवानाद्यविद्यावशात् स्वरूपतिरोधाने बाह्यरूपेण मानम्। तद्यथा तडागोदकं छिद्रान्निर्गत्य कुल्यात्मना केदारान् प्रविश्य तद्वदेव चतुष्कोणाद्याकारं भवति, तथान्तःकरणमपि चक्षुरादिद्वारा घटादिदेशं गत्वा घटाद्याकारेण परिणमति। स एव परिणामो वृत्तिरित्युच्यते। यत्र च वृत्त्यवच्छिन्नचैतन्यविषयावच्छिन्नचैतन्ययोरैक्यं तत्र विषयस्य प्रत्यक्षत्वम्। नन्वन्तःकरणस्य निरवयवतया कथं परिणामरूपा वृत्तिरिति चेत्, न, अन्तःकरणस्य द्रव्यत्वेन सावयवत्वात्। एवं शुक्तिरजतादिस्थलेऽविद्यैव रजताकारेण परिणमति। रजतरूपेणाविद्यायाः परिणामे वेदान्तनये 'नेदं रजतम्' इत्यनेन लौकिकपरमार्थरजतं कथं निषिध्यत इति चेत्, अत्रोच्यते—पुरोवर्तिनि रजतार्थिनः प्रवृत्ति-दर्शनाल्लौकिकपरमार्थरजतत्वेनापरोक्षतया निषिध्यत इति तदाशयात्।

तदुक्तम्—'न हि तत्र रजतत्वावच्छिन्नप्रातिभासिकरजतप्रतियोगिताको व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावाभ्युपगमात्"[2], "अनिश्चिता यथा रज्जुरन्धकारे विकल्पिता। सर्पधारादिभिर्भावैस्तद्वदात्मा विकल्पितः"[3]।

**चैतन्ये प्रतिबिम्बाभासकत्वविचारः**

अथेदं विचार्यते यदयं प्रतिबिम्बः कुत्रावभासते, वृत्तौ शुद्धचैतन्ये वा? नाद्यः, वृत्तेरन्तःकरणस्य धर्मविशेषादविद्योपाधिनोपहितत्वाच्च। न हि पङ्कमृद-वालिप्तदर्पणादिषु कदाचित् प्रतिबिम्बः सम्भवति। शुद्धचैतन्य इति चेत्, न, तस्यावस्तुरूपत्वान्निरवयवद्रव्यत्वाच्चास्फटिकादिसावयवद्रव्यसन्निहित एव जपाकुसुमरागादिप्रत्ययः। अत्रोच्यते—उभयतादात्म्येनोभयत्रापि प्रतिबिम्बावभासः। तथा हि वृत्तिर्नाम चित्तस्य विषयाकारपरिणामविशेषः। सा च विषयाकारा सती विषयगतमज्ञानरूपमावरणमपाकरोति। अनावृत्तविषयाणां प्रकाशस्तु वृत्त्यवच्छिन्न-चैतन्येन क्रियते।

---

१. वैया. सि. लघुमञ्जूषा।

२. वेदान्तपरिभाषा-प्रत्यक्षखण्डे; ३. मा. का. २।१७।

वृत्तेर्जडरूपत्वेनाप्रकाशकत्वेऽपि विषयावरणभङ्गसमवहितकालमेव दग्धे काष्ठे निवृत्ताग्निरिव वृत्तेरविद्या निवर्त्यते। निवृत्ताज्ञानात्मिकायां स्वच्छदर्पण-वदवभासमानायां वृत्तौ बाह्यविषयाणां प्रतिबिम्बावभासः। वृत्तेश्चैतन्यतादात्म्येन विषयप्रकाशकत्वाद् वृत्तितादात्म्यमापन्नं चैतन्यमपि वृत्तिनिष्ठविषयप्रतिबिम्ब-वदवभासते। "तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति"[1], "सर्वस्य चाहं हृदि सन्निविष्टो मत्तः स्मृतिर्ज्ञानमपोहनं च"[2]।

इन्द्रियविशिष्टमेवान्तःकरणं विषयाकारेण परिणमति। अत एव रसनेन्द्रियगतपित्तान्वयेन गुडे कटुत्वप्रत्ययः, चक्षुरिन्द्रियगतचित्तान्वयेन च शङ्खे पीतत्वानुभवश्च भवतः। सा च भ्रमप्रमोभयरूपा वृत्तिश्चैतन्यतादात्म्यापन्ना पुरुषे प्रतिबिम्बते। ननु दोषविशेषाजन्यज्ञानं प्रत्येव बाधज्ञानस्य प्रतिबन्धकमिति तद्विशिष्टान्तःकरणपरिणामाभावेऽपि तादृशप्रतीतौ प्रतिबन्धकाभाव इति चेत्, न, इन्द्रियगतपित्तरूपदोषतारतम्येन विषयगतपीतत्वतारतम्यस्यानुभवसिद्धतया तत्र विषयविधया पित्तस्यैव हेतुत्वावश्यकत्वात्। पीतत्वविशिष्टशङ्खविषयाभावेन पीतः शङ्ख इति चित्तवृत्तिः कथम्? अत एवोक्तम्—"वृत्तिश्चेन्द्रियेण सहैव"[3]।

अयं भावः—क्षारपदार्थसंयोगेन यथा वस्तुमालिन्यमपसार्यते, तथेन्द्रिय-सन्निकर्षेण बौद्धं तमोऽपहन्यते। तथा च निर्मले वस्त्रे कुसुम्भयोगस्तद्वर्णतेव स्वच्छे बुद्धिसत्त्वे विषयाकारता सम्पद्यते। सैव बुद्ध्यवस्था वृत्तिरित्युच्यते।

यथा इदमाकारवृत्ते रजताकारवृत्तेश्च प्रत्येकमेकैकविषयत्व एव तदभाववन्निष्ठविशेष्यतानिरूपिततन्निष्ठप्रकारतानिरूपकत्वाभावेन शुक्तौ रजतज्ञानस्य भ्रमः, तथैवेहापि शङ्खावच्छेदेन प्रमात्वस्य पीतत्वावच्छेदेन भ्रमत्व-स्यैकस्मिन् वृत्तिप्रतिबिम्बितचैतन्ये सत्यमिथ्यावस्तुतादात्म्यावगाहित्वेनैव भ्रमोत्पत्तिः। अयःपिण्डस्य दग्धत्वाभावेऽविदग्धत्वाशयवह्नितादात्म्याध्यासाद् अयो दहतीतिवद् विषयाकारपरिणाम्यन्तःकरणैक्याध्यासादात्मनोऽपि सविषयत्वमिति विवेकः।

असौ वृत्त्यवच्छिन्नचैतन्यप्रतिबिम्बो ब्रह्मसाक्षात्कारं यावदवभासते, तावत् कालपर्यन्तं वृत्तेरवस्थितेः। ब्रह्मसाक्षात्कारे हि वृत्तिलयात्तत्र प्रतिभासमान-प्रतिबिम्बस्यापि लय उच्यते। ननु नित्यशुद्धबुद्धमुक्तस्वभावस्यात्मनः स्वतः प्रकाशशीलत्वात्तत्र वृत्तेः किं प्रयोजनम्? ब्रह्मणो हि आवरणहीनत्वात् स्वयं-प्रकाशत्वाच्च। तथा च श्रुतिः—"यतो वाचो निवर्तन्ते अप्राप्य मनसा सह"। अत्रोच्यते—सा च चित्तवृत्तिर्न शुद्धब्रह्मविषयिणी किन्त्वज्ञानविशिष्टप्रत्यगभिन्नपर-ब्रह्मविषयिणी। सा च चैतन्यप्रतिबिम्बसंवलिता सती चैतन्यगतमज्ञानं निवर्तयति।

१. कठो. २।२।१५; २. गीता-१५।१५; ३. तै. उप. २।४।

तस्याश्चैतन्यावरणकाज्ञाननिष्पत्तिरेव प्रयोजनम्। तत्त्वमस्यादिवाक्यश्रवणोत्पन्नाखण्डचैतन्यवृत्त्या सकलाविद्यानिवृत्तौ तत्कार्यस्य सकलप्रपञ्चस्य क्षयाददूद्वैतप्रत्ययः। तथा चोक्तम्—"पटकारणतन्तुदाहे पटदाहवदखिलकारणेऽज्ञाने बाधिते सति तत्कार्यस्याखिलस्य बाधितत्वात्तदन्तर्भूताखण्डाकाराकारिता चित्तवृत्तिरपि बाधिता भवति"[1]। वृत्तिनिवृत्तौ तत्प्रतिबिम्बितचैतन्यस्य बिम्बावभासनासमर्थत्वाद् वृत्त्युपाधिबाधितेन तत्प्रतिबिम्बितचैतन्यमपि चैतन्यमात्रतयाऽवशिष्यते। दर्पणोपाधिविगमे तत्प्रतिबिम्बितमुखावभासस्य बिम्बभूतमुखमात्रतयावशेषवत्।

सङ्क्षेपशारीरककारस्तु अज्ञानप्रतिबिम्बितं चैतन्यमीश्वरः, बुद्धिप्रतिबिम्बितचैतन्यं जीव इति मन्यते। अज्ञानोपहितं बिम्बचैतन्यं शुद्धमिति। शुद्धं हि जीवेशयोरनुस्यूतसाक्षिरूपम्। अत एवोपहितशब्देन निर्देशः। भास्यभासकभावरूपस्याज्ञानकृतसम्बन्धस्य च व्यवहारकाले सत्वात्। अनयोर्बिम्बप्रतिबिम्बावीशजीवौ, कार्यकारणौपाधिकौ च जीवेशौ। प्रतिबिम्बत्वविशिष्टरूपेण कल्पितत्वेऽपि प्रतिबिम्बस्य स्वरूपचैतन्यमकल्पितमिति भावः। तथा च श्रुतिः—"रूपं रूपं प्रतिरूपो बभूव"[2]। तत्तदज्ञानोपाधिविशिष्टजीवेशाद्यधिकरणेषु भासमानः प्रतिबिम्बश्चैतन्यतादात्म्येन ब्रह्मण्यध्यस्यते।

नानाज्ञानोपरागाद् विविधगुणरतो बिम्बरूपानुशक्तः
जीवेशादिप्रमोषात्तदनुगतकलो वस्तुभासावभासी।
लोके सर्वावभासो यदधिगतधिया बिम्बतेऽसौ प्रपञ्चः
चैतन्येऽध्यासहेतुर्भवति धृतिवशान्मायया प्रातिबिम्बः।।

नानाऽज्ञानजन्यप्रपञ्चाध्यासेन चैतन्यमपि प्रतिबिम्बते चेत्कोऽन्यश्चैतन्याद्यस्यायं प्रतिबिम्बः। विषया इति चेत्, न, तेषां चैतन्यमात्रावभासमानत्वेन प्रतिबिम्बासम्भवात्। चैतन्यमेव प्रतिबिम्बहेतुरिति चेत्, न, कार्यकारणयोरेकाधिकरण्येन स्वज्ञप्त्यधीनज्ञप्तिकत्वरूपान्योन्याश्रयप्रसङ्गात्।

अत्रोच्यते—विषया एव प्रतिबिम्बनिमित्तानि। यदुक्तं चैतन्यमात्रावभासकत्वं तदेव प्रतिबिम्बाध्यासे निमित्तम्। अज्ञानावृतं चैतन्यमेव विषयः। तत्राविद्याऽध्यस्तमालिन्याद् बिम्बत्वं चैतन्यांशप्रकाशेन बिम्बग्रहक्षयत्वेन च प्रतिबिम्बत्वमिति। ग्रीवास्थं मुखं बिम्बग्रहक्षयदर्पणादिसान्निध्यात् प्रतिबिम्बत्वेन भासमानं मुखगततैजसेन्द्रियेण गृह्यते। तथा चोक्तं सिद्धान्तलेशसङ्ग्रहे—

---

१. वेदान्तसारे २८ पृष्ठे;		२. कठो. २।५।९।

"दर्पणादिपरावृत्तैर्निजैर्नयनरश्मिभिः।
सन्निकृष्टं मुखं तत्रोपाध्यन्तः स्थितिविभ्रमः"[१]॥

ग्रीवास्थ एव मुखे दर्पणोपाधिसन्निधानदोषाद् दर्पणस्थत्वप्रत्यङ्मुखत्व-बिम्बभेदानामध्याससम्भवेन न दर्पणमुखस्याध्यासः कल्पनीयो गौरवात्।

अथवाऽस्तु चैतन्यमेव प्रतिबिम्बनिमित्तम्। तत्र कार्यकारणयोरेकाधिकरण्येऽपि अविद्ययाऽध्यस्तविषयाशक्तत्वेन बिम्बत्वम्, बिम्बग्रहक्षयतैजसांशेन प्रतिबिम्बत्वम्। यथा दर्पणादीनां मुखबिम्बाध्यासेन बिम्बत्वं तद्रूपरूषिततया च भासमानत्वेन प्रतिबिम्बत्वम्। तथा च पञ्चपादिकायाम्—'तदहङ्कर्तुरनिदमंशो बिम्बादिना प्रतिबिम्बं न ब्रह्मणो वस्त्वन्तरम्; किन्तु तदेव तत् पृथगवभासविपर्ययस्वरूपतामात्रं मिथ्येति दर्शयितुम्"[२]। तथा च श्रुतिः—'तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति"[३]।

तत्तदधिष्ठानभेदेन भिन्नमपि प्रतिबिम्बितचैतन्यमेकमेव। तथा चैकमेवाज्ञानं सत्त्वादिगुणोपाधिना स्वगतक्रियोपाधिना च भिन्नं विविधप्रपञ्चोत्पत्तिनिमित्तम्। नाना-जलाशयगतसूर्यप्रतिबिम्ब इवाज्ञानभेदेन भिन्नेष्वपि प्रपञ्चेषु चित्प्रतिबिम्ब एक एव। सर्वत्र प्रतिभासमानचैतन्यस्यैकत्वात्तत्र प्रतिबिम्बस्यैकत्वमव्याहतम्। अथ च ब्रह्मण एव सर्वप्रपञ्चस्याधिष्ठानतया, बिम्बप्रतिबिम्बावपि ब्रह्मनिष्ठावेव। अत्र पक्षे श्रुतिरपि मानम्—"एको वशी सर्वभूतान्तरात्मा एकं रूपं बहुधा यः करोति"[४], "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्"[५]। नास्त्यन्यत् किञ्चिद् यस्य बिम्बः प्रतिबिम्बो वा शक्यौ वर्णयितुम्। बिम्बात्मनः प्रतिबिम्बात्मनो वा सर्वत्र भासमानं ब्रह्मैव।

**प्रतिबिम्बस्य सत्यासत्यत्वविचारः**

चैतन्यसंश्लेषमवाप्य सत्यो वस्तुस्वरूपाभिरतोऽप्यसत्यः।
ब्रह्माश्रयेण प्रतिबिम्बतेऽसौ यद् दर्पणे तन्मुखमेव नान्यत्॥

चैतन्याध्यस्तमेकं विषयपरिवृतं वस्तुरूपानुरक्तं
बिम्बासक्तञ्च लोके भ्रमजनकमिदं प्रातिबिम्बस्वरूपम्।
सत्यं तच्चास्ति कश्चिद् विषयपरिमृषाद् वक्त्यसत्यं तदन्य
इत्थं व्याख्यातृवादैर्विविधमतमिदं भ्रान्तिमावर्तकं तत्॥

---

१. सिद्धान्तलेशसङ्ग्रहे प्रतिबिम्बवादे; २. पञ्चपादिकायां प्रतिबिम्बवादे।
३. मुण्ड. उप. २।२।१०; ४. कठो. २।२।१२।
५. छा. उप. ६।२।१।

दर्पणादिषु प्रतिभासमानमुखप्रतिबिम्बो ग्रीवास्थमुखमेवास्ति, न प्रतिबिम्बस्य पृथक् स्थितिरिति केचित्। तदन्ये असिमण्यादिस्थप्रतिबिम्बस्य बिम्बविपरीत-स्थितिदर्शनात्तस्य पृथक् स्थितिरिति मन्यन्ते। तथा हि एकमेव ग्रीवास्थमुख-मसिसन्निहिते तद्धाराधारितास्यताकारत्वेन प्रतिबिम्बते। तदेव च वर्तुलाकारमणि-दर्पणादिषु वर्तुलाकारतामधिगच्छति। अथ च जलाशयतीरद्रुमाणां प्रतिबिम्बा जलाशयेऽधोमुखा इवावभासन्ते। अतो बिम्बात् पृथक् सत्ता प्रतिबिम्बस्येति विवरणकाराः। ग्रीवास्थमुखमेवाधिष्ठानोपाधिनोपहितं भिन्नमेवावभासते, न बिम्बातिरिक्तः कश्चित् प्रतिबिम्बः। बिम्बावभासमात्रं स इति सर्वज्ञमुनिः।

तत्र पृथक् सत्तापक्ष इदं विचार्यते यदियं सत्ता प्रातिभासिकी व्यावहारिकी पारमार्थिकी वा। नाद्या, मुखादिसमवहितेऽधिष्ठाने नायं प्रतिबिम्ब इति बाधा-सम्भवात्। न द्वितीया, ग्रीवास्थमुखचेष्टया चेष्टितदर्पणस्थप्रतिबिम्बस्य चेष्टाश्रयत्व-मवलोक्य ग्रीवास्थमुखमेव दर्पणे नान्यदिति ब्रह्मप्रमातिरिक्तप्रमाबाधितत्वात्। पारमार्थिकी इति चेत्, न, ब्रह्मातिरिक्तस्य त्रिकालाबाधासहत्वात्। "अव्यक्तस्तु परः पुरुषो व्यापकोऽलिङ्ग एव च"[1], "क्रियागुणैरात्मगुणैश्च तेषां संयोगहेतुरपरोऽपि दृष्टः"[2], "स वा एष महानज आत्माऽजरोऽमरोऽमृतोऽभयो ब्रह्म"[3], "एकस्तथा सर्वभूतान्तरात्मा"[4] इत्यादिश्रुतिभिर्ब्रह्मातिरिक्तस्य सर्वस्यापि पारमार्थिकत्वनिषेधात्।

अस्तु तावत् प्रातिभासिकं सत् प्रतिबिम्बस्वरूपम्। भ्रमवशात् प्रतिभासमानं शुक्तौ रजतप्रतिबिम्बवत् प्रतिभासमानं जपाकुसुमादिलौहित्यादिकं प्रातिभासिकं जपाकुसुमाद्यपनयने रागहीनाधिष्ठानज्ञानेन तस्य बाधात्। एवं चैतन्ये प्रतिभासमानं प्रपञ्चप्रतिबिम्बरूपमपि सर्वविकल्पातीतचैतन्यज्ञानेन बाध्यते। विषयप्रतिबिम्बाश्चै-तन्याधिष्ठाने प्रतिभासमाना अपि चैतन्यस्वरूपं न दूषयन्ति। तथा च श्रुतिः—

"सूर्यो यथा सर्वलोकस्य चक्षुर्न लिप्यते चाक्षुषैर्बाह्यदोषैः।
एकस्तथा सर्वभूतान्तरात्मा न लिप्यते लोकदुःखेन बाह्यः"[5]।
भ्रमाद्धि सृष्टिः सचराचरस्य तदेव लोकस्य विधानमूलम्।
बिम्बानुसक्तं प्रतिबिम्बरूपं प्रबिम्बते वासनयाऽवलिप्तम्।।

अतः प्रातिभासिकमेव प्रतिबिम्बस्वरूपम्।

अथवाऽस्तु व्यावहारिकं प्रतिबिम्बस्वरूपम्। जपाकुसुमादिसंसर्गाल्लौहितोऽयं रक्तोऽयं स्फटिक इत्यत्र जपाकुसुमादिरागरञ्जितस्फटिकप्रतिबिम्बस्य सर्वव्यवहार-

१. कठो. २।३।८; २. श्वेता. उप. ५।१२।
३. बृ. उप. ४।४।२५; ४. कठो. २।५।१०; ५. तत्रैव-२।५।१०।

योग्यत्वात्। अथ च दूरदर्शनयन्त्रं कम्प्यूटरयन्त्रञ्च प्रतिबिम्बमहिम्नैव लोकव्यवहार-साधकम्। ननु व्यावहारिकसत्ताकस्य पारमार्थिकसत्ताकज्ञानेन बाधः। प्रतिबिम्बस्तु शुक्त्यधिष्ठानज्ञानेन नेदं रजतं मिथ्यैव रजतभ्रमादितिवद् दर्पणे मुखं नास्ति मिथ्यैवात्र दर्पणे मुखभ्रमाद् इत्यादिसर्वसिद्धबाधात् प्रतिबिम्बं न व्यावहारिकमिति चेत्, न, बिम्बसन्निधानापसारणेनाधिष्ठानस्वरूपावगतौ नात्यन्तिकविक्षेपांशस्य बाधः। पुनर्बिम्बसन्निहितेनोत्पत्तियोग्यत्वात्। तत्र यत्किञ्चिदंशस्यैव बाधो न सर्वांशरूपेण। ब्रह्मज्ञानेनैव सर्वांशरूपेण विक्षेपस्य बाधात्। तथा चोक्तम्—

बिम्बापसरणाध्यक्षाद्विक्षेपांशस्य बाधनम्।
विरोधादथवा ब्रह्मज्ञानेनैवास्य बाधनम्[1]।।

ननु यत्प्रतिबिम्बं पुरस्तात्प्रातिभासिकमुक्तं तदेवेदानीं कथं व्यावहारिक-मुच्यते। तन्निराकुर्वन्नाह, उभयतो हि प्रतिबिम्बस्वरूपनिर्णयः। तूलाविद्यायाः कार्यमिति पक्षे शुक्तिरजतादिवत् प्रातिभासिकम्। मूलाविद्यायाः कार्यमिति पक्षे ब्रह्मप्रमां यावज्जायमानतया व्यावहारिकम्। तथा हि शुक्तिरजतसम्बन्धिमिथ्यात्वं यद्यपि इदमर्थतादात्म्यापन्नमेव रजतं विषयीकरोति, तथापि तत्र तादात्म्यमात्रं न कल्पते; अपि चानिर्वचनीयरजतमपि, कल्पितरजतस्यैव तत्र प्रतीतेः।

तत्र कल्पितानिर्वचनीयरजतप्रतीतौ शुक्त्यधिष्ठानविषयकमज्ञानं कारणम्। अधिष्ठानविषयकाज्ञाने सति रजतप्रत्ययः, अज्ञानाभावे प्रतीत्यभाव इत्यन्वयव्यतिरेकभावेन रजतोद्भवः। शुक्तिरूपाधिष्ठानज्ञानेन नेदं रजतमिति ज्ञानमुदेति। तेन यदेतावन्तं कालं रजतं प्रतिपन्नं तन्नेति रजतस्वरूपमेव न बाध्यते, अपि च रजतमिथ्यात्वेन शुक्तिरजतसंसर्गोऽपि बाध्यते। अतो देशान्तरस्थहाटकीयरजतस्य तत्रासम्भवात्, तेन सह प्रत्यभिज्ञानासम्भवात् तद्रजतमिति प्रत्यभिज्ञाऽपि न भवति। तथा चोक्तम्—"तत्र नेदं रजतमिति रजतस्वरूपमेव बाध्यते, नात्र रजतं किन्तु तदिदं रजतमिति देशमात्रबाधया सत्यरजतेनैकतया न प्रत्यभिज्ञायते[2]"।

प्रतिबिम्बाध्यासविषये न तथा, प्रतिबिम्बाधिष्ठानज्ञानेऽपि प्रतिबिम्बप्रत्ययात्। रजताध्यासो ह्यधिष्ठानज्ञानेन निवर्तते। प्रतिबिम्बाध्यासस्त्वधिष्ठानसमकालमेव प्रवर्तते। अधिष्ठानावगमे प्रतिबिम्बावगतिः, अधिष्ठानाभावे प्रतिबिम्बाभाव इति शुक्तिरजतावगतेर्विपरीतान्वयव्यतिरेकभावेन प्रतिबिम्बाध्यासस्य सम्भवात्। प्रतिबिम्बस्थले दर्पणादौ न किमप्यनिर्वचनीयं मुखं कल्प्यते। अपि च ग्रीवास्थ एव

१. सिद्धान्तलेशसङ्ग्रहे; २. पञ्चपादिकाविवरणे।

मुखे दर्पणोपाधिसन्निधानदोषाद् दर्पणस्थत्वप्रत्यङ्मुखत्वबिम्बभेदानामध्याससम्भवेन दर्पणे मुखं नास्तीत्यादिना दर्पणसंसर्गमात्रस्य बाधः। "तत्र हि बाधदर्शनाद् मिथ्याभावः, नेह स बाधो दृश्यते। यत्पुनर्दर्पणापगमे तदपगमः, न स बाधः, दर्पणेऽपि तत्प्रसङ्गात्"[१]।

शुक्तिरजतस्थले शुक्तिरजतसंसर्गोऽप्यनिर्वचनीयस्तत्र रजतमप्यनिर्वचनीयं तद्द्वयमपि बाध्येते। प्रतिबिम्बस्थले हि बिम्बाधिष्ठानसंसर्गमात्रं बाध्यते। अतो न प्रतिबिम्बस्य वास्तविकं प्रातिभासिकत्वम्। अत्र मूलाविद्याया आवरणांशस्यैव नाशः, विक्षेपांशस्तु वर्तत एव। अतः पुनर्दर्पणसन्निधाने प्रतिबिम्बस्य प्रत्ययस्तु भवत्येव। तत्र मिथ्यात्वं केन रूपेण? तत्रोच्यते—बिम्बादिदोषजन्यत्वेन दर्पणे मम मुखं भातीति संसर्गाध्यासेन जायमानग्रीवास्थदर्पणस्थमुखयोरभेदप्रत्ययस्य बाधः। तथा चाह—

"मूलाविद्याऽथवा हेतुर्विक्षेपांशेन संस्थिता ।
बिम्बादिदोषजन्यत्वान्मिथ्येत्यन्ये प्रचक्षते[२]" ।।

प्रतिबिम्बविषयकव्यवहारोऽपि घटपटादिविषयकव्यवहाराद्विलक्षणः। घटपटादिविषयाणां ब्रह्मप्रमातिरिक्तप्रमाबाधायोग्यत्वेन व्यवहारयोग्यता। प्रतिबिम्बन्तु दर्पणादौ मुखसंसर्गाभावेन प्रतीत्ययोग्यत्वेऽपि व्यवहारयोग्यतां भजते। अथ च शुक्तिरजतादिकं तदुपमं चैतज्जगत् अविद्याजन्यम्। प्रतिबिम्बप्रत्ययस्तु नाविद्याजन्यः, ज्ञातमेव दर्पणादिकं प्रतिबिम्बप्रबोधनिमित्तम्।

मायामात्रविजृम्भितं जगदिदं शुक्तिस्थरूप्योपमं
कृत्स्नं व्याप्य तनोति विश्वमखिलं रज्जौ यथाहेर्भ्रमः।
बिम्बो हि प्रतिबिम्बरूपमसकृद् मोहात्प्रपञ्चाश्रयं
नाविद्या न च कार्यमेव तदिह ज्ञानाश्रितं बिम्बनम्।।

**प्रतिबिम्बस्य पारमार्थिकत्वविचारः**

बिम्बात्मनस्तत्पदवाच्यमेतच्चैतन्यमेकं विषयावसक्तम्।
जीवात्मनस्त्वंपदबोध्यतां गतं तत्त्वन्त्वभिन्नं परमार्थरूपम्।।
तद् ब्रह्मबिम्बः प्रतिबिम्बजीवो द्वावेव तत्त्वंपदवाच्यताश्रयौ।
औपाधिकं भेदमुपेत्य सर्गस्तत्त्वन्त्वभेदेन चिदेव शिष्टम्।।

---

१. पञ्चपादिकाप्रतिबिम्बवादे; २. सिद्धान्तलेशसङ्ग्रहे।

बिम्बप्रतिबिम्बयोर्न प्रातिभासिकं रूपं दर्पणाद्यधिष्ठानज्ञानेनापि तत्प्रत्ययात्। नापि व्यावहारिकं ब्रह्मप्रमातिरिक्तदर्पणाद्यपसारणेन तत्प्रत्ययाभावात्। खपुष्पवदलीकमिति चेत्, न, लौकिकप्रतीत्याश्रयात्। अत आह पारमार्थिकत्वं तयोः। चैतन्यमेव बिम्बप्रतिबिम्बभावेन भिन्नं जगद्रूपम्। तत्त्वमस्यादिमहावाक्यस्याखण्डार्थबोधाद् भेदक्षये चैतन्यमात्रावशेषान्मोक्षः। तथा च श्रुतिः—"अदृष्टमव्यवहार्यमग्राह्यमलक्षणमचिन्त्यमव्यपदेश्यमेकात्मप्रत्ययसारं प्रपञ्चोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते"[१]। यथैको विवश्वान् नानाजलान्तर्गतप्रतिबिम्बात्मनो विभज्यत इव। तथैकश्चिदात्मा नानाजीवोपाधिना प्रतिबिम्बितो भिन्न इवास्ते। स च प्रतिबिम्बो जीवान्तर्गतः सन्नात्मन्यध्यस्ततयाऽवभासते। यथा सूर्यबिम्ब एव जलान्तर्गतो जलाशयप्रतिबिम्बात्मनाऽवभासते। तथैव चैतन्यमेव बिम्बप्रतिबिम्बोपाधिनोपहितं सकलप्रपञ्चाश्रयतामाकलयति। बिम्बप्रतिबिम्बोपाधिभिश्चैतन्यं नैव विभज्यते। विधेयानान्वितस्यैवोपाधेर्व्यावर्तकत्वात्। उक्तञ्च भाष्ये—

यथा ह्ययं ज्योतिरात्मा विवश्वानपो भिन्ना बहुधैकोऽनुगच्छन्।
उपाधिना क्रियते भेदरूपो देवः क्षत्रेष्वेवमजोऽयमात्मा[२] ।।

प्रथममविद्यावृते मनस्येव प्रतिबिम्बरूपावगतिस्तदनन्तरं सर्वत्र दृश्येऽवभासते। तच्च प्रतिबिम्बं परमात्मरूपत्वेन ब्रह्मादिस्तम्बपर्यन्तेषु देहेषु प्रविष्टः प्रतिबिम्बते। "स एष इह प्रविष्ट आनखाग्रेभ्यः"[३], एवमतीन्द्रियार्थेष्वपीश्वरीयमायावृत्तिविशिष्टरूपेषु प्रतिबिम्बत्वरूपप्रवेशः। ननु बिम्बरूपचैतन्यस्य कथं प्रतिबिम्बात्मनः प्रवेशः? बिम्बप्रतिबिम्बोपाधिना प्रवेश्यत्वसम्भवात्। "तत्सृष्ट्वा तदेवानुप्राविशत्"[४]।

निरवयवस्य परमात्मनः प्रवेशासम्भवात् प्रतिबिम्बरूपत्वमवगम्यते। यथा स्वसजातीयविजातीयस्वगतभेदशून्यतया त्रिकालाबाधसत्ताकत्वेन ब्रह्मणः पारमार्थिकत्वम्, तथैव तद्रूपत्वेन भासमानस्य प्रतिबिम्बस्यापि। परमात्मनः पारमार्थिकत्वसाधकानि नैकानि श्रुतिवाक्यानि। यथा—"सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्याद्वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्"[५], "एतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि"[६]।

बिम्बात् प्रतिबिम्बं भिन्नमभिन्नं वा? नाद्यः, बिम्बसमवहितेनैव प्रतिबिम्बप्रत्ययात्। प्रतिबिम्बो यदि बिम्बातिरिक्तं किमपि वस्तु स्यात्तदा बिम्बसमवधानाभावेऽपि प्रतीयेत। नापि द्वितीयः, विविधाधिष्ठानाधिष्ठितमहिम्नाऽऽश्रयगतधर्मा-

---

१. माण्डूक्यो. ६।७; २. शा.भा., ब्र.सू. ३।२।१८।
३. बृ.उप. १।४।७; ४. तै.उप. २।६।
५. छान्दो. ६।१।४; ६. तत्रैव-६।८।७।

ध्यासेन प्रतिनियतरूपस्यापि दीर्घत्ववर्तुलत्वादिना प्रतीतेः। अथवाऽस्तु भिन्नं पूर्वाभिमुखबिम्बसमवधाने प्रतिबिम्बस्य पश्चिमाभिमुखत्वेन प्रतीतेः। तथा च कृपाणमण्याद्यधिष्ठानेषु बिम्बभिन्नमेव आयतवर्तुलत्वादिना बिम्बावभासात्। अस्तु चाभिन्नमपि, यदुक्तमाश्रयगतधर्माध्यासेन भिन्नमिति तन्न, धर्माध्यासस्याज्ञानजन्यत्वात्। अतो बिम्बप्रतिबिम्बयोराध्यासिको भेदः। परमार्थतस्त्वभिन्नावेवोभौ। आध्यासिकभेदस्य हि परमार्थतोऽभिन्नवस्तुभेदेऽप्रयोजकत्वात्।

यत्तु जलाशयादिषु भयप्रदप्रतिबिम्बावलोकेन बालानां भीतिः। शान्तं सुन्दरं प्रतिबिम्बं दृष्ट्वा प्रीतिं चावगत्य बिम्बात् प्रतिबिम्बं भिन्नमभिमन्यन्ते तन्न, यदि प्रतिबिम्बं बिम्बाद्भिन्नं स्यात्तदा मुखबिम्बवैशिष्ट्यावलोकनाय दर्पणस्थे प्रतिबिम्बे प्रवृत्तिर्न स्यात्। भवति च प्रवृत्तिः, अतो बिम्बाभिन्नं प्रतिबिम्बमिति। यथैक एव चन्द्रबिम्बो जलमालिन्यादिदूषितः क्वचिदस्पष्टः, स एव निर्मले जले स्पष्टः प्रतिभाति। एवमेकं ब्रह्मतत्त्वमज्ञानोपाधिना जीवेशादिपदव्यवहारयोग्यं सद्भिन्नं बिम्बप्रतिबिम्बाभेदेनाभिन्नमिव भाति। तथा चोक्तम्—

"जले प्रविष्टश्चन्द्रोऽयमस्पष्टः कलुषे जले।
विस्पष्टो निर्मले तद्वद् द्वेधा ब्रह्मापि वृत्तिषु"[१]।।

निष्कलनीरूपस्फाटिकादेर्जपाकुसुमादिरागसन्निधाने प्रतीतिवन्निर्गुणनिर्विकारनीरूपस्य ब्रह्मणोऽविद्यावच्छिन्नजीवेशादिबिम्बाध्यासेन प्रतिबिम्बात्मरूपेण प्रत्ययः। शब्दशास्त्रे स्फोटात्मकशब्दस्य ब्रह्मरूपत्वं स्वीकुर्वद्भिर्वैयाकरणैर्ज्ञानस्वरूपस्यापि स्फोटस्य कत्वगत्वादिवर्णधर्मरूषितेन राम इत्यादिपदरूषितेन 'रामो ग्रामं गच्छति' इत्यादिवाक्यरूषितेन वा प्रत्ययोऽभिमतः। एवमात्मनोऽपि व्यञ्जकबिम्बसमवहितप्रतिबिम्बरूपेण प्रत्ययः।

शान्तविद्यात्मकं योंऽशस्तदु हैतदविद्या।
तया ग्रस्तमिवाजस्रं या निर्वक्तुं न शक्यते[२]।।

एकमेव ब्रह्मज्ञानोपाधिनोपहितबिम्बात्मना व्यञ्जकं तदेवाधिष्ठानरूपेण व्यङ्ग्यप्रतिबिम्बमित्यौपाधिकभेदेऽपि चित्स्वरूपमभिन्नमेव। चित्स्वरूपस्य पारमार्थिकत्वात् प्रतिबिम्बस्यापि पारमार्थिकत्वं सिद्ध्यति।

अयं भावः—सकलप्रपञ्चस्य ब्रह्मण्यध्यस्ततया चिदचिद्विशिष्टेन प्रत्ययः। तत्राचिदंशो बिम्बात्मना शरणम्, चिदंशस्तु बिम्बसङ्घातावधानेन प्रतिबिम्बरूपत्वमाधत्ते। प्रतिबिम्बस्य पारमार्थिकत्वं स्मृतिकारैरप्यभिमतम्। यथा—

---

१. पञ्चदशी-३।८; २. वाक्यपदीये हरिवृषभवृत्तिः।

"नेक्षतोद्यन्तमादित्यं नास्तं यत्तं कदाचन ।
नोपरक्तं न वारिस्थं न मध्यं नभसो गतम्"[१] ।।

ननु सकलप्रपञ्चस्य बिम्बरूपेण चेतनस्य च प्रतिबिम्बरूपेण सर्वैः प्रत्ययोऽभिमतः, तत्कथं भवद्भिश्चिदंशस्य बिम्बत्वं चिदंशस्य च प्रतिबिम्बत्वमुक्तम्, तत्रोच्यतेऽचेतनप्रयुक्तावगतेरदर्शनात्। यथाऽवदातस्यापि प्रतिबिम्बस्योपाधिदोषा-दन्यथात्वम्। एवं चेतनत्वेऽपि प्रतिबिम्बस्योपाधिजाड्याज्जडत्वमिति। वस्तुतस्तु प्रपञ्चप्रतिबिम्बनं चेतनांशसहितमेव भवति। तत्र प्रतिबिम्बनिमित्तं श्यामत्वादिः। अधिष्ठानं चेतनमेव। अविद्यावच्छेदेन सकलप्रपञ्चस्य प्रत्ययाच्छ्यामत्वं निमित्तमुक्तम्। "स चेतनांशस्यैव वा प्रतिबिम्बत्वे प्रतिबिम्बहेतोः श्यामादिधर्मेणैव जाड्येनाप्यास्कन्दितत्वात्"।

अपरिच्छिन्नस्वरूपस्य व्यापकस्वभावस्यैव ब्रह्मणः पारमर्थिकत्वमुक्तम्। बिम्बप्रतिबिम्बयोः परिच्छिन्नदेशतयाऽव्यापकस्वभावात् तत्कथं पारमार्थिकत्वमत आह—भेदोऽध्यासिकोऽभेद एव वास्तविकः। तथा चोक्तम्—"न वयं विच्छेदावभासं पारमार्थिकं ब्रूमः, किन्त्वेकत्वम्? विच्छेदस्तु मायाविजृम्भितः"[३]। एकदेशस्थमेव मुखं सम्भ्रमाद्भिन्नं भिन्नदेशस्थमिवावभासते।

यद्यपि जीवब्रह्मणोर्बिम्बप्रतिबिम्बभावेन भिन्नत्वम्, तथापि 'सोऽयं देवदत्तः' इत्यत्र भिन्नप्रवृत्तिनिमित्तयोः सोऽयंपदयोरेकस्मिन् देवदत्तपिण्डे तात्पर्यसम्बन्धवत् तत्त्वमसीति महावाक्ये बिम्बप्रतिबिम्बभावेन भिन्नप्रवृत्तिनिमित्तयोस्तत्त्वं-पदयोरेकस्मिंश्चैतन्ये तात्पर्यात्सामानाधिकरण्यम्।

अज्ञानसन्ध्येश्वरजीवभेदः स एव बिम्बप्रतिबिम्बहेतुः ।
तत्त्वंपदेऽखण्डधिया प्रबोधादुपाधिहीनो विभुरेव शिष्टः ।।
बिम्बाद्भिन्नमिदं विभाति सततं यावद्धि मायावृतं
तन्नाशात् प्रतिबिम्बबिम्बरहितं चैतन्यमेकञ्च तत्।
भेदोपाधितमोनिरावृतमिदं नित्यन्नु केचिद् बुधाः
ब्रह्मैवैकमशेषकारणमिदं तच्चास्ति सत्यं परे।।इति।



१. मनुस्मृतिः-४।३७।

# अमूर्त्तदेवतातत्त्वविमर्शः

**डॉ.बनारसीत्रिपाठी**
उपाचार्यः, संस्कृतविभागस्य
दीनदयाल-उपाध्यायगोरखपुरविश्वविद्यालये



वैदिकदेवशास्त्रवित्सु कैश्चिदिदं स्वीक्रियते यत्पुराकाले नैसर्गिक्यो घटना एव विग्रहवत्यो भूत्वा देवरूपेण विकसिताः सञ्जाताः। तदानीन्तने समये नैसर्गिकीभिर्घटनाभिः परिचयमात्रमेव लक्ष्यं नासीत्। आसीत्तासां सम्बन्धो मानवानां व्यष्टिजीवनेन सामूहिकजीवनेनापि। नासन् सकला घटनाः समानरूपिण्यः। काश्चन भीतिजनका आसन्, काश्चन च प्रसादजनकाः। स्वाभाविकरूपेण मनुष्यो हितावहाभिर्घटनाभिरेव स्वसम्बन्धं स्थापयितुं प्रयत्नमकरोत्। एतदर्थमुपासनाः स्तुतयो वा केवलं साहाय्यमासीत्। परिणामतः कासाञ्चिद् घटनानां प्रशंसा कासाञ्चिच्च दूरेऽवस्थातुं प्रार्थना च सम्पद्यमानाभूत्। तानि सर्वाणि वस्तूनि, सर्वाश्च घटना या अस्मदर्थं भयोत्पादकानि सुखोत्पादकानि वाऽऽसन्, अथवा प्रियप्रभावमप्रियप्रभावं वोत्पादयितुं समर्थानि आसन्, तानि सर्वाण्यपि पूजार्हाणि अभूवन्। आकाश-पृथिव्यादयो ये भौतिकपदार्थास्सन्ति, तेषां दिव्यशक्तिरूपेण स्तुतयो विहिता विद्यन्ते। निश्चयेनात्रेदं प्रति दृढो विश्वास एवासीद् यन्मानवान् परित उत्पद्यमानाः सर्वा अपि घटनाश्चेतनवत्यो दिव्याश्च सन्ति। मानवनिर्मितानि वस्तूनि सहायोपकरणान्यपि च आराधनविषया अभूवन्। परं त्वत्रावश्यमवधेयमस्ति यदिमानि नेह वास्तविका देवाः; परन्त्विमानि परिव्याप्य एष्वेवावस्थिता वर्तन्ते।

अग्न्यादयो भौतिकपदार्था नैव स्तुतिविषयाः। तत्रास्ति काचिददृश्या शक्तिः, या एभिः स्थूलवस्त्वादिभिः कर्म करोति। आदौ तु प्राकृतिकतत्त्वान्येव पूजार्हाणि आसन्, परन्तु पश्चात्ताः सूक्ष्मशक्तय एव देवरूपेण मन्यमाना विलोक्यन्ते, याश्चैतेषु व्यक्तीभवन्ति। अस्यानुभूतिः सहजमेव सम्पद्यमानाऽभवद् यदेतादृशान्यपि अदृश्यतत्त्वानि सन्ति, येषां शक्तीनामभिव्यक्तिः प्रकृतौ जायते। इमाः शक्तय एव देवास्सन्ति।

मैक्डोनेलमहोदयस्य मतमस्ति यद् वेदेषु वर्णिता देवास्तु विशिष्टीकृताः मानवा एव सन्ति, ये तत्सदृशीभिराकाङ्क्षाभिः प्रेरणाभिश्च परिपूरितानां मानवानामिव अजनयन्, किन्तु ते सन्त्यमराः। सर्वेऽप्यमी गोचरीकृतघटनानां तत्त्वानां वा दिव्याः प्रतिनिधयस्सन्ति[१]।

**देवो देवता च—**

देवशब्दस्य पुँल्लिङ्गे देवताशब्दस्य च स्त्रीलिङ्गे प्रयोगः समुपलभ्यते। दिव्धातोर्देवशब्दस्य व्युत्पत्तिः। धातोरस्य क्रीडाविजिगीषाव्यवहारद्युतिस्तुति-मोदमदस्वप्नकान्तिगतिषु व्यवहारो दृश्यते। यास्काचार्यस्तु देवो दानाद् दीपनाद् द्योतनाद् द्युस्थानीयो भवतीति निर्वक्ति[२]। अवेस्ताभाषायामस्य सजातीयः शब्दः 'देउस्' इत्युपलभ्यते। देवताशब्दं शक्तेः पर्यायं मत्वा स्त्रीत्वस्य व्याख्यानं विदधाति। तन्मतानुसारं विशिष्टवैदिकपरम्परावशात् स्त्रीवाचकेन देवताशब्देन सह इन्द्रादीनां संसर्गो विहितः, यथा—'इन्द्रो देवता' इत्यादिरूपेण। मन्त्रैः सह यत्रैषामुल्लेखो विधीयते तत्र तस्यार्थस्तु तत्तच्छक्तय एवेति। अत एव मन्त्रविशेष-पाठेन देवताविशेषस्य किं वा शक्तिविशेषस्यावबोधो जायते। इदं चात्र कथयितुं शक्यते यदग्निवाय्वादित्यादयो न केवलां व्यक्तिं संज्ञां वा, अपि तु शक्तीरपि बोधयन्ति[३]। यास्कः पाणिनिश्चोभावपि देव एव देवता इति मन्वाते[४]।

शौनकमते तु मन्त्रार्थज्ञानायेदमावश्यकं यद् पूर्वमिदमवगन्तव्यं यन्मन्त्रस्य का देवता[५]? कस्मिंश्चिद्देवताविषये अयमिमं दातुं समर्थ इति जानन् स्तोता येन मन्त्रेण तं स्तौति, प्राधान्येन स्तुतो देव एव तस्य मन्त्रस्य देवता भवति[६]। यास्कदिशा तु "यत्काम ऋषिर्यस्यां देवतायामार्थपत्यमिच्छन् स्तुतिं प्रयुङ्क्ते, तद्दैवतः स मन्त्रो भवति"[७]। कात्यायनस्त्वेह प्रतिपादयति यदृषिवर्णितो विषय एव तन्मन्त्रस्य देवता भवति[८]।

---

१. वैदिक माइथॉलोजी, अनु. रामकुमाररायः, पृष्ठम्-३।

२. निरुक्तम्-७/१५।

३. हिन्दू देव परिवार का विकास, पृ. ६१-८३।

४. निरुक्तम्-७/१५—'यो देवः सा देवता', पा.सू. ५/४/२७-देवात्तल्।

५. बृहद्देवता-१/२-३; ६. तदेव-१/६।

७. निरुक्तम्-७/१।

८. सर्वानुक्रमणी २/४-५ 'यस्य वाक्यं स ऋषिः। या तेनोच्यते सा देवता'। द्रष्टव्यात्रैव षड्गुरुशिष्यस्य वेदार्थदीपिका—'तेन वाक्येन यत्प्रतिपाद्यं वस्तु सा देवता'।

**देवसंख्या—**

ऋग्वेदे (३।६।९) अथर्ववेदे चोभयत्रापि देवानां संख्या त्रयस्त्रिंशन्निर्दिष्टा। अनेकत्र संख्येयमेकादशेन वारत्रयं प्रगुणीकृत्य व्यक्तीकृता दृश्यते[1]। अन्यत्र (ऋग्वेदे-१।१३९।११) स्वर्गे एकादशानां, पृथिव्यामेकादशानां जलेऽप्येकादशानां निवसतां स्तुतयः कृता विलोक्यन्ते। अथर्ववेदेऽपि (१०।९।१२) किञ्चिदेतादृशमेव वर्गीकरणं कृतं विद्यते। अत्रेदं बोध्यं यद्देवानां त्रयस्त्रिंशत्परिमिता संख्या सदैव नोपलभ्यते[2]। वाजसनेयिसंहितायां देवानां संख्या ३३३९ विद्यते। ब्राह्मणेष्वपि देवानां संख्या ३३ प्रतिपादिता। अर्वाचीनसाहित्ये तु संख्येयं कोटिमधिगता।

**देवानां वर्गीकरणम्—**

अध्ययनसौविध्याय कतिपयान् हेतूनाधृत्य वैदिकानां देवानां वर्गीकरणं कर्त्तुं शक्यते। ऋषिः परुच्छेपः स्तौति यद् द्युस्थानीयाः, पृथिवीस्थानीयाः, जलस्थानीया विश्वेदेवाः (११+११+११+=३३) सर्वेऽप्यत्र यज्ञे समुपस्थिताः स्युः[3]। एतदनुसृत्य यास्कोऽपि विभिन्नान् देवान् अथवैकस्य देवस्य विभिन्नरूपाणि त्रिष्वेव लोकेषु निदधाति—

(१) पृथिवीस्थानीया अथवा पार्थिवाः (निरुक्तम्-७।५)

(२) अन्तरिक्षस्थानीया अथवा माध्यमिकाः (निरुक्तम्-१०।१।११,५०)

(३) द्युस्थानीया अथवा दिव्याः (निरुक्तम्-१२।१-४६)

शौनकोऽप्येवमेव वर्णयति[4]। पूर्वेषां नैरुक्तानां मते तिस्र एव देवताः— पृथिव्यामग्निः, अन्तरिक्षे वायुरिन्द्रो वा, स्वर्गे सूर्य इति निरुक्तकृद् वर्णयति[5]। तन्मते एक एव पुरुषो होता, अध्वर्युः, ब्रह्मा, उद्गाता चेति रूपेण भिन्नं कर्म करोति, तथैव एषु त्रिषु प्रत्येकं देवतायातत्कर्मानुसारं विभिन्नान्यभिधानानि

१. ऋग्वेदः, ८/३५/३।
२. द्र. ऋग्वेदः, १/३४/११. १/४५/२, ८/३५/३, ३९/९।
३. ऋग्वेदः १/३९/११, द्रष्टव्यम्-७/३५/११, १०/४९/२, १०/६५/९;, अथर्ववेदः, १०/ ९/१२।
४. बृहद्देवता-१/६९-७३।
५. निरुक्तम् ७/५—'तिस्र एव देवता इति नैरुक्ताः—अग्निः पृथ्वीस्थानो वायुर्वेन्द्रो वाऽन्तरिक्षस्थानः सूर्यो द्युस्थानः। द्र. ऋग्वेदः १/१३९/११, १०/१५८/१, तैत्तिरीयसंहिता ६/६/८/३. अथर्ववेदः १०/९/१२, कात्यायनसर्वानुक्रमणीप्रस्तावना २/८—तिस्र एव देवताः क्षित्यन्तरिक्षद्युस्थाना अग्निर्वायुः सूर्य इति।

प्रकल्पितानि सन्ति; परन्त्वत्र यास्को नास्ति पक्षपाती यत्सर्वेऽपि देवाः त्रयाणामेषामेव देवानां स्वरूपभूताः। अन्यत्र देवगणनाप्रसङ्गेऽल्पैश्वर्यान् देवान् तथा च दैवीकृतान् पदार्थानपि देवताकोटौ परिगणयति[१]।

कात्यायनस्तु एकामेव देवतां सर्वेषां मूले मनुते। कर्मपार्थक्येनैषां कृते पृथक् पृथग् नाम्नां स्तुतीनाञ्च विधानं विद्यते[२]।

शुनःशेपर्षिः सापेक्षिकं माहात्म्यमवलम्ब्य वृद्ध-युवरूपेण च विभज्य देवानर्चयति[३]; परन्त्वन्यत्र वैवस्वतो मनुर्विश्वेषां देवानां स्तुतौ विभेदमेवं नैव स्वीकरोति—

न हि वो अस्त्यर्भको देवासो न कुमारकः।
विश्वे सतो महान्त इत्। (ऋग्वेदः-८।३०।१)

(हे देवाः! युष्माकं मध्ये शिशुर्नास्ति, कुमारोऽपि नास्ति। यूयं सर्वे सतो महान्त इत्युच्यन्ते)।

अत्रेदमपि पश्यामो यत् तुल्यशक्तिसमन्वितानामपि देवतानां तासां विशिष्ट-गुणैः पृथक् पृथग् वर्णनं कृतमुपलभ्यते, यथा योद्धृरूपेणेन्द्रस्य, सत्यपालकत्वेन वरुणस्य, अतः परमग्निः सोमश्चायाति। प्रत्येकं देवाय समर्पितानां सूक्तानां संख्यादृष्ट्या ऋग्वेदे तन्नामावृत्त्या च देवानां पञ्च वर्गान् विधातुं शक्यते—

१. इन्द्रः, अग्निः, सोमश्च,
२. अश्विनौ, मरुतः, वरुणश्च,
३. उषा सविता बृहस्पतिः सूर्यः पूषा च,
४. वायुः द्यावापृथिवी विष्णुः रुद्रश्च,
५. यमः पर्जन्यश्च।

मैक्डोनेलमहोदयो मनुते यद्देवानामीदृशं सापेक्षिकं महत्त्वख्यापनं सर्वथा निर्दुष्टं सन्देहरहितञ्च भवितुन्नार्हति। पुराकथाशास्त्रीयाणां प्रत्ययानां सापेक्षिकत्व-मनुसृत्य तत्र सर्वथा भारतीयेरानीं भारोपीयं वा मत्वा कालक्रमेण पूर्वयुगीनं पूर्वावस्थं वा वक्तुं शक्यते; परन्तु तन्मते वर्गीकरणमीदृशमपि संशीतिगर्ते पतिष्यति[४]।

---

१. निघण्टुः, ५/२-३।
२. सर्वानुक्रमणी-प्रस्तावना—२-११,१२,१३,१४।
३. ऋग्वेदः-१/२७/१३।
४. वैदिक माइथॉलोजी, अनु. रामकुमाररायः, पृ. ३६-३७।

प्रख्यातो वैदिको भाष्यकारो महीधरः कर्मदेवाजानदेवाविति द्विधा देवान् विभजति—"द्विविधा देवाः कर्मदेवा आजानदेवाश्च। कर्मणोत्कृष्टेन देवत्वं प्राप्ताः कर्मदेवाः। सृष्ट्यादावुत्पन्ना आजानदेवाः। ते कर्मदेवेभ्यः श्रेष्ठाः। ये शतं कर्मदेवानामानन्दाः, स एक आजानदेवानामानन्दाः (बृहदारण्यकोपनिषद्-४।१।३५) इति श्रुतेः सूर्यादय आजानदेवाः"[१]। आजानदेवा एव साध्यदेवा अप्यभिधीयन्ते। इमे नाके (स्वर्गे) निवसन्ति। तपस्विनो मनुष्या देवत्वमवाप्यात्र महतीरनुभूतीः प्राप्नुवन्ति[२]। यत्र पूर्वे साध्याः सन्ति देवा इत्यत्र 'पूर्वे' इत्यनेन कालानुगतविभाजनस्यापि सङ्केतस्समुपलभ्यते। निरुक्ते (१२।४१) यास्केन वर्णितं यन्नैरुक्तानां मते साध्या द्युस्थानीया देवता इति।

सायणाचार्यः ऋग्वेदस्य १।१६४।५० मन्त्रव्याख्यानावसरे प्रतिपादयति—यज्ञादिसाधनवन्तः कर्मदेवाः, अथ च छन्दसामधिष्ठातारो देवा इति। विल्सनमहोदयस्तु 'धार्मिककृत्यानामधिष्ठातारः अथवेमे सम्पादका देवा इति रूपेण स्वीकरोति।

देवतानां वर्गनिर्धारणे यद्यप्यन्यान्यपि कारणतत्त्वानि सन्ति; परन्तु न तान्यधिकं महत्त्वमावहन्ति—

१. युग्मा अयुग्माश्च,
२. पुंल्लिङ्गाख्याः स्त्रीलिङ्गाख्याश्च,
३. विश्वरूपाः स्वरूपाश्च,
४. सर्वशक्तिमत्यः (यथादितिः) तदितरा वा,
५. निरुक्ता अनिरुक्ताश्च (अनिरुक्तः प्रजापतिः),
६. अमृतो मृतश्च (मृताः पितरः),
७. उपकारका अपकारकाश्च,
८. पुरुषविधा अपुरुषविधाश्च,
९. देवोऽसुरश्च (असुरवर्गे—रक्षांसि, राक्षसाः, असुराः, विनायकाः)
   (क) अभीष्टोऽनभीष्टश्च
   (ख) मृदुस्वभावो भयङ्करः
   (ग) देव उग्रदेवश्च।

---

१. वाजसनेयिसंहिता-३१/७, द्रष्टव्यं तदुपरि महीधरभाष्यम्।
२. द्रष्टव्यम्, ऋग्वेदः-१/१६४/५०, १०/९०/१६—'ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः'।

ब्राह्मणेषु देवा असुराश्चान्योन्यस्य प्रतिस्पर्धिरूपेणोपवर्णितौ दृश्येते, द्वावपि मूले समानावास्ताम्। तैत्तिरीयसंहितायाः—'ये देवा यज्ञहनो यज्ञमुषः पृथिव्यामध्यासते। अग्निर्मा तेभ्यो रक्षतु गच्छेम सुकृतो वयम् (३।५।४।१)'' तथा अथर्ववेदस्य—'तन्मे भूयो भवतु मा कनीयोऽग्ने सातघ्नो देवान् हविषा निषेध-३।१५।५'' इति कथनेन च सिध्यति यद् दुरात्मानोऽपि देवता भवितुमर्हन्ति।

पाश्चात्त्यविद्वत्सु ब्लूमफील्डमहोदयो देवान् पञ्चधा विभजति[1]—

१. प्रागैतिह्यकालस्य देवताः—यासामुल्लेखो दृश्यतेऽन्येष्वार्यमण्डलेषु तथा चावेस्तायाम्, यथा—द्यौः, वरुणः, मित्रः, अर्यमा।

२. स्वरूपे पारदर्शिन्यो विस्पष्टा देवता वा—यासां देवतानां मानवीकरणमपूर्णं विद्यते याश्च देवतातिरिक्तं प्रकृतेः किमपि विशिष्टं तत्त्वं प्रकटयन्ति, यथा—अग्निः, उषा, वायुः, सूर्यः।

३. अल्पपारदर्शिन्यः, अर्धस्पष्टस्वरूपवत्यो देवताः—यासां व्यक्तित्वं स्वकारण-भूतविशिष्टप्रकृतितत्त्वात् पृथग्भूय विकसितं परन्तु नैवादृश्यं जातम्, केनचिदन्वेषणेनैव ज्ञातुं शक्यते, यथा—विष्णुः।

४. अपारदर्शिन्यः स्वरूपप्रकाशनेऽविस्पष्टा वा देवताः—या अनेकैरुपाख्यानैः संयुज्य स्वमूलरूपाद् बहुदूरमपगताः, यासां प्रभवमधिगन्तुं नास्त्यस्माकं पार्श्वे कोऽप्युपायः, यथा—इन्द्रः, वरुणः, अश्विनौ च।

५. अमूर्त्ताः, भावात्मकाः प्रतीकात्मकाश्च देवताः—या देवताः, कमपि क्रियाविशेषं भावं वा सूचयन्ति, देवतारूपेण राक्षसरूपेण वा कामपि कामनां भावं वा कमपि अभिव्यञ्जयन्ति, यथा—प्रजापतिः, विश्वकर्मा, बृहस्पतिः, पुरुषः, कालः, श्रद्धा, कामः, निर्वृतिर्मन्युर्वा।

इह तु चरमवर्गीयाणां देवानां प्रामाणिकं विवरणं दातुं प्रयासो विधास्यते। ऋग्वेदे केषाञ्चिद्देवानां प्रकृतिरमूर्त्तधारणास्वाधृतास्ति। वर्गद्वये तन्निधाय विचारयितुं शक्यते—

१. देवानाममूर्तीकरणम्,

२. अमूर्त्तसंज्ञानाञ्च दैवीकरणम्।

---

१. वैदिक देवता : उद्भव और विकास, गयाचरण त्रिपाठी, पृ. १९६।

**देवानाममूर्त्तीकरणम्—**

ऋग्वेदस्य अधिकभागेषु अग्नीन्द्रसूर्यादयो देवताः परस्परं पृथक् पृथग् रूपेण स्तुतास्सन्ति। कुत्रचिद् भिन्नं वैशिष्ट्यमावहन्तोऽपि पर्जन्य-विष्णु-सवितृ-पूषादयो देवा एभिः सह प्रशंसिता विलोक्यन्ते। एकस्याः सर्वव्यापिन्या दिव्यशक्तेः प्रकल्पनवशादग्निर्विष्णुना, वरुणेन मित्रादिभिश्च सह तथेन्द्रो वरुणेन सह समीकृतो दृश्यते—'अहमिन्द्रो वरुणः'[१]। प्रवृत्त्यानया शनैः शनैरुपाधयोऽपि सरलीकृताः, तथा किञ्चिदंशेषु परस्परमन्योन्यकृते व्यवहृता अभूवन्। एषु दिव्यशक्तिसम्पन्नायाः सर्वव्यापिदेवताया लक्षणान्यपि प्रतीतिमवाप्नुवन्। जे० मूइर-महोदयमतमस्ति यद्यदैकवारं कस्या अपि देवताया धारणा समीकृतरूपेण विस्तृता भूत्वा तस्यामेव देवतायां समस्तानपि दिव्यगुणानारोपयति, तदूर्ध्वं सोपानं प्रजापतिविश्वकर्मादिनूतनाभिधानैर्देवताया अभिव्यक्तीकरणं भविष्यति, यतो हि इमान्यभिधानानि प्रकृतेः केनाप्येकेन क्षेत्रेण सह समाश्रितं कार्यं यावत् परिमितानि नैव तिष्ठन्ति; अपि तु अपेक्षयाधिकं सामान्यममूर्त्तञ्च प्रत्ययमभिव्यञ्जयन्त ईदृशीं दिव्यशक्तिमभिकल्पयन्ति या विश्वसृष्टौ शासने च सक्रियं भवितुं शक्नोति। प्रजापतिर्विश्वकर्मा चोभे ऋग्वेदे (४।५३।२,८।९८।२) सवितुरिन्द्रस्य विशेषणे स्तः, देवते अभूताम्[२]।

मैक्डोनेलमहोदयेन येषां देवानां प्रकृतिरमूर्त्तधारणासु समाश्रिता विद्यते, तेषां वर्गद्वयं विनिर्मितम्। एकस्मिन् वर्गेऽमूर्त्तधारणानां भावानां वा यथा कामादीनां प्रत्यक्षं मूर्त्तीकरणमायाति। एतदुत्तरवर्तिषु मण्डलेषु द्रष्टुं शक्यते। द्वितीयो वर्गस्त्वतिविस्तृतः। अस्मिन् 'तृ'प्रत्ययान्तैर्धातुभिर्व्युत्पन्ना धातृकर्त्रादिरूपाः संज्ञाः सन्त्यथवा कस्यापि गुणविशेषस्य प्रजापत्यादिरूपस्य द्योतकाः सन्ति। वर्गस्यास्य देवता आदावेकस्मै अधिकेभ्यो वा देवेभ्य उपाधिरूपेण व्यवहृता आसन्, येनोपाधिना कस्यचिद् व्यवहारस्य चरित्रस्य वा अभिव्यक्तिर्जायते स्म।

ईदृशाश्चोपाधयः क्रमेण विशेष्यं विहाय पृथग्भूय चान्ततो गत्वा स्वतन्त्रं स्थानं गृहीतवन्तः। यथा रोहितः (स्त्रीलिङ्गे रोहिणी), योऽस्ति सूर्यस्योपाधिरेकः सृष्टिकर्त्तृरूपेणाथर्ववेदे एकः स्वतन्त्रो देवता अभूत्[३]।

इह तावत् 'तृ'प्रत्ययान्तानां देवानां विवेचनं विधीयते—

---

१. ऋग्वेदः-४/४२/३।

२. मूल संस्कृत-उद्धरण, अनु. रामकुमारराय:, पञ्चमो भागः, पृ. ३४८।

३. अथर्ववेदः, १३/१/६, २/३९, ३/२३, द्र. वैदिक माइथॉलोजी, अनु. रामकुमारराय: पृ. २१८-२१९।

**धाता**—

(धा+तृ) धातुर्देवतात्वेन स्वतन्त्रोल्लेखो दशमे मण्डलेऽवाप्यते[1]। ऋग्वेदे विभिन्नानां देवानामुपरि लोकानां धारणात्मिकाया घटनाया आरोपः कृतो विद्यते। आरोपस्येदृशी धारणैव क्रमेणैकस्यैवम्भूतस्य देवस्य धारणां समुदपादयत्, यो देवः स्वयमपीदं विशिष्टं कार्यं कर्त्तुं प्रभवति।

ऋग्वेदस्य १०।१९० सूक्तेऽयं सूर्यस्य, चन्द्रमसः, आकाशस्य, पृथिव्याः, वायोश्च जनिकर्त्ता निगदितः। अन्यत्रास्योल्लेखो दृष्टिप्रदातृत्वेन (ऋग्वेदः-१०।१५८) तथा च सन्तानप्रदातृत्वेन (ऋग्वेदः-१०।१८४) कृतो विद्यते। निघण्टौ (५।५) माध्यमिकदेवेषु धातुगणनोपलभ्यते। अनन्तरञ्च प्रजापतेर्ब्रह्मणः समकक्षमेव धाता अपि विश्वस्रष्टा विश्वपालकश्चाभूत्।

**त्राता**—

(त्रा+तृ) अस्यार्थोऽस्ति रक्षकः। प्रायशोऽयमग्नेरिन्द्रस्यादित्यानां वोपाधिरूपेण व्यवहृतो जातः। ऋग्वेदस्य पञ्चसु स्थलेषु रक्षकदेवस्यार्थेऽयं स्वतन्त्ररूपेण प्रयुक्तो विद्यते[2]।

**देवनेता**—

(<देव+नेतृ <√नी+तृ) अयमस्ति नायको देवता। ऋग्वेदस्य ५।५० सूक्ते देवनेतुरावाहनं जीवने समृद्ध्यर्थं पथप्रदर्शकत्वेन कृतं विद्यते।

**त्वष्टा**—

(<त्वष्टृ <√तक्ष्+तृ) 'तृ'प्रत्ययान्तर्गतिष्वमूर्त्तदेवेषु सवित्रपेक्षया त्वष्टुरल्पोल्लेखः प्राप्यते। प्रायशो बाहुल्येन अस्योल्लेखः प्रथमे सप्तमे च मण्डले जातः। अयञ्च पञ्चषष्टिवारं प्रयुक्तोऽस्ति; परन्त्वस्य कस्याप्यङ्गस्योल्लेखो नास्ति। देवोऽयं सुगभस्तिः सुपाणिश्चास्ति। अयं शिल्पीति वर्णितः। सर्वरूपो विश्वरूपश्चायम्। त्वष्टा सोमस्याभिभावकोऽस्ति। मैक्डोनेलमहोदयस्तु त्वक्ष्-धातोर्व्युत्पन्नं मत्वा अस्यार्थो निर्माणकर्त्तेति शिल्पी वेति मनुते[3]। वैदिकदेवेष्वस्त्ययमत्यन्तमविस्पष्टो देवः। ओल्डेनबर्गमहोदयस्य विश्वासोऽस्ति यदयं कस्याश्चिद् विशिष्टक्रियाया अभिव्यञ्जकोऽमूर्त्तः शब्दः[4]।

---

१. ऋग्वेदः-१०/८२, १२८, १६७, १९०।
२. तदेव-१/१०६/७, ४।५५/५,७, ८/१८/२०, १०/१२८/७।
३. वैदिक माइथॉलोजी, अनु. रामकुमाररायः, पृ. २२३।
४. तदेव।

**सविता—**

(सवितृ < √सु+तृ) ऋग्वेदस्य महत्त्वपूर्णेषु देवेषु अद्वितीयोऽस्ति देव: सविता। सु < सू-धातोर्वायं व्याख्यात:। प्रसवितृ-प्रसवादिशब्दानां प्रयोग: सवित्रा सहोपलभ्यते। धातावस्मिन् प्रेरणादानस्योद्दीप्तकरणस्य जागृतिकरणस्यैश्वर्य-प्रदानस्योत्पत्तिकरणस्य रससवनादिकस्याशया निहितास्सन्ति। मैक्डोनेलमहोदयस्य मतं यत्—मूलतो भारत एव व्युत्पन्न उपाधिरेकोऽस्ति सविता, यश्च विश्वस्यान्यासु सर्वासु गतिषु प्रधानानां महत्त्वपूर्णानां गतीनां प्रतिनिधित्वेन जीवनस्य गतीनां च महत्प्रेरकत्वेन सूर्याय प्रयुक्तो विद्यते। ऋग्वेदे यजुर्वेदेऽथर्ववेदे ब्राह्मणेषु च सवितुर्वर्णनं प्राचुर्य्येणोपलभ्यते। नास्त्यत्र सवितुर्मूर्त्तरूपस्य वर्णनमुद्देश्यमपि तु लक्ष्यमस्ति यत् 'तृ'प्रत्ययान्तोऽयं सविता देव: परिस्थितिविशेषेषु कथममूर्त्तो जात इति।

अयमस्ति प्रेरकत्वेन सूर्यस्यैवोपाधिरिति पूर्वं वर्णितम्; परन्तु सूर्यात् पृथक्त्वे सति अपेक्षाकृतमाधिक्येनामूर्त्तो देव:। ओल्डेनबर्गमहाशयो भणति—'वास्तविकरूपेण प्रेरणाया एव एकस्या धारणाया: प्रतिनिधित्वं भजते। एतच्चरित्रे सूर्योऽथवा कस्यामपि दशायां सूर्यसम्बन्धिनी धारणा प्रायशो गौणरूपेणैव संयुक्ता विद्यते'[1]। ऋग्वेदे सन्त्यनेके सन्दर्भा ईदृशा ये सूर्यात् सवितारं विस्पष्टरूपेण पृथक् कुर्वन्ति (१।३५।९, १२३।३, ५।८१।४)।

सायणमते तूदयात्पूर्वभावी सविता, उदयास्तमयवर्ती सूर्य इति[2]। यास्कमते तु स एवास्ति समय: सवितुर्प्राकट्यस्य यदान्धकारोऽपसृतो भवति प्रकाशरश्मयश्चाकाशे विकीर्णा भवन्ति[3]; परन्तु ऋग्वेदस्यान्येष्वनेकेषु सन्दर्भेषु (यथा—७।३५।८,१०, ६६।४, १०।१३९।१,१८१।३) सूर्योदयात् प्राक् स्तोतृनभिप्रेरयितुं मित्रेणार्यम्णा भगेन च सहास्यार्चनमवाप्यते (७।६६।४-'यदद्य सूर उदितेऽनागा मित्रो अर्यमा। सुवाति सविता भग:')। ऋग्वेदस्य १०।१८१।३ मन्त्रे सूर्यसवित्रो: पार्थक्यमेवाभिमतम् (द्र. १।१५७।१), तथाप्यन्यस्थलेषु उभयोरप्येकदेवतात्वेन प्रयोगो जात:[4]।

---

१. वैदिक माइथॉलोजी, अनु. रामकुमारराय:, पृ. ६३-६४।

२. ऋग्वेदभाष्यम्-५/८१/४।

३. निरुक्तम्-१२/१२—'तस्य कालो यदा द्यौरपहततमस्काकीर्णरश्मिर्भवति'।

४. द्र. ऋग्वेद:, ४/१३/२, १०/१५८/१ तथा च १/३५/७, १२४/१, ७/६३/१-४।

सवितुः समीकरणं मित्रेण पूष्णा सहापि दृश्यते; परन्तु ऋग्वेदस्य ३।५४।११-१२, ६।४९।१४, ५०।१, १३, ८।१८।३, ९।१।६, १०।१३९।१ ईदृशेषु स्थलेषु एभ्यस्तथा चान्येभ्योऽपि देवेभ्यः सवितुर्व्यक्तो भेदः परिलक्ष्यते। इदमत्रावधेयं यत् सवितुः प्रयोगो व्यक्तिवाचकनाम्ना सहैवोपाधावपि कृतो दृश्यते (ऋग्वेदः-२।३०।१, ३।५५।१९, १०।१०।५)।

**अदितिः—**

उपाधिरूपेऽदितिरेकामूर्त्ता धारणास्ति। ऋग्वेदस्य १।११३।१९ मन्त्रेऽदित्या सहोषसः समीकरणं कृतं विद्यते। निरुक्ते (४।२२) देवमातारूपेणेयं प्रख्यापिता—'अदीना देवमाता'। जे॰ मूइरमहाशयानां मते तु अदितिर्नित्यत्वे नित्ये वा रूपे एवंभूतं तत्त्वमस्ति यदादित्यं धारयति यच्चादित्या धारयन्ति। स्वप्रकृतिवशाद् वेदेष्वियं धारणा निश्चयेन मूर्त्तीकरणपर्यन्तं नैव नीता दृश्यते। यद्यप्येतद्विषयकप्रयासानामभावो नैवास्ति[1]।

ऋग्वेदे (१।२४।१) अदितेरमूर्त्तीकृतोऽर्थः स्वतन्त्रतेति प्रतिभाति; परन्त्वनन्तरमस्य मूर्त्तीकरणमनुष्ठितम्।

डॉ. गयाचरणत्रिपाठिमते 'अदितिस्वरूपस्य मूलाधारविषये निश्चयेन किमपि वक्तुमतीव कठिनमस्ति। प्रायः सर्वेऽपि विद्वांसोऽनेन सह सम्मतिं प्रदर्शयन्ति यद् अदितिरस्ति मूलत एकाऽमूर्त्तस्वरूपा भावात्मिका देवी' तथा प्रकृतेः केनचित्तत्त्वेन नास्ति तस्याः सम्बन्धो विशेषः[2]।

**विश्वकर्मा प्रजापतिर्वा—**

ऋग्वेदस्य दशमे मण्डले विश्वकर्मणो देवतात्वेनोल्लेखः प्राप्यते। आदाविन्द्रस्योपाधिरेक आसीद् विश्वकर्मा। ऋग्वेदे (१०।१७०।४) प्रयुक्तोऽयं दृश्यते सूर्योपाधिरूपे। अयमस्ति परमा संदृक्, धाता, विधाता चापि। स्वीयविशेषगुणनिर्मित्या 'अयमस्ति विश्वकर्मा', यश्च ब्राह्मणेषु प्रजापतिर्निगदितः। ऋग्वेदस्य ४।५३।२ मन्त्रे प्रजापतिः सवितुरुपाधिरूपेण व्यवहृतः। देवतासु सर्वोत्कृष्टत्वेन प्रजापतिः स्तुतः। अयमन्वर्थेऽस्ति प्रजापतिः प्रजानां पालकत्वात्। वस्तुतो ब्राह्मणेष्वेव देवतारूपेणायं प्रथमं प्रकल्पितः।

---

१. मूल संस्कृत उद्धरण, पञ्चमो भागः, पृ. ४१।

२. वैदिक देवता : उद्भव और विकास, पृ. ७०३, विस्तरेण द्रष्टव्यम् Aditi and other Dities in the Veda—M.P. Pandit

संहिताब्राह्मणयोरनेकेष्वाख्यानेष्वस्योल्लेखो विद्यते। प्रजापतेरुपाधिरूपे 'कस्मै' इत्यस्य प्रयोगो बहुधोपलभ्यते। ऋग्वेदस्य १०।१२१ सूक्ते स्तुतो हिरण्यगर्भो देवः तैत्तिरीयसंहितायां (५।५।१) प्रजापतिना साकं समीकृतो दृश्यते। पश्चात्त्वस्य ब्रह्मणैव सह सम्बन्धो जातः[१]।

**ब्रह्मणस्पतिः—**

ऋग्वेदस्य १०।७२ सूक्तानुसारं देवसृष्टिर्ब्रह्मणस्पतिदेवानुग्रहेणैव जाता, तथापीतरान् सन्दर्भानधिकृत्य वयं जानीमहे यद् वस्तुतोऽदितिदेवताया अनन्तरमेव सत्तायां देवगणो दृश्यते। दक्षोऽदितिश्च मिथः प्रजनेन समुत्पन्नौ स्तः।

**वास्तोष्पतिः—**

इदञ्च नाम ऋग्वेदे सप्तवारं प्रयुक्तं विद्यते। ऋग्वेदस्य ७।५४ सूक्तेऽस्य प्रशस्तिर्वर्तते। तस्यैव ७।५५।१ मन्त्रेऽयं व्याधीनां हर्त्ता कामरूपा व्यक्तिश्चेति रूपेण वर्णितः।

सोमेन त्वष्ट्रा च सह समीकृतोऽयम्। ऋग्वेदस्य ८।१७।४४ मन्त्रेऽस्य समीकरणमिन्द्रेण सहोपलभ्यते। ऋग्वेदे (१०।६१।७) देवनिर्मितविधानानां परिपालकत्वेनायं वर्णितः। गेल्डनरमहोदयमते तैत्तिरीयसंहितायां (३।४।१०।३) अयमस्ति रुद्रस्योपाधिः। अन्वर्थेऽयमस्ति निवासानां रक्षक इति मन्यते।

**स्कम्भः—**

अथर्ववेदेऽस्य स्तुतिः सर्वदेवरूपेणोपलभ्यते[२]। अयं पुरुषेण ब्रह्मणा च सह समीकृतः प्रतिभाति। अस्याङ्गेषु मूर्तिमतो जगतो विभिन्नांशैः समं तपः श्रद्धा सत्यं कालः' इत्यादिरूपा अमूर्त्तधारणा अपि निहिता विद्यन्ते।

गोल्डस्टुकरमते तु एकस्यैव धातोर्विभिन्नरूपे स्तः स्कम्भधातुः स्तम्भधातुश्च। स्कम्भः स्तम्भ एवास्ति। अयमस्ति सम्पूर्णस्य विश्वस्यालम्बः।

**रोहितः—**

अयमस्त्यग्नेः सूर्यस्य वैकं रूपम्। अथर्ववेदे (१३।१, १३।२।३९) आकाशस्य पृथिव्याश्च प्रकटयितृरूपेण रोहितो वर्णितः। स तु यज्ञस्य प्रकाशको

---

१. वैदिक माइथॉलोजी, अनु. रामकुमाररायः, पृ. २२४-२२६ तथा जे.मूइर-मूल संस्कृत उद्धरण, पृ. ३५०-३५१।

२. अथर्ववेदः, १०/७/२,८।

मुखञ्चास्ति। अयं सर्वत्र विचरणशीलः सर्वेषां रक्षकः। एकत्र रोहितस्य सम्भवो देवेभ्य एव वर्णितः (अथर्ववेदः-१३।२।२३)।

**मन्युः—**

मन्युर्क्रोधो वैका भावात्मिका अमूर्त्तसंज्ञा। ऋग्वेदस्य सूक्तद्वयेऽस्यावाहनं कृतं विद्यते। अयमस्ति वृत्रघ्नः, दुर्जेयः प्रकाशमानो बलस्य देवता। अयं तपसा सह मिलित्वा स्वीयान् स्तोतॄन् रक्षति।

**उच्छिष्टः—**

(बलम्) अथर्ववेदे (११।७) उच्छिष्टस्य स्तुतिर्विहिता विद्यते। अस्मादेव सर्वेऽपि प्राणिनो देवता ऋचः पितरो मात्रादयश्च प्रजायन्त इति वर्णितम्।

**प्राणः—**

प्राणस्यापि दैवीकरणं कृतम्। अयं प्रजापतिना तथा केषुचिन्मन्त्रेषु पर्जन्येन सहापि समीकृतो विद्यते। (द्र. अथर्ववेदः, ११।४)

**मनः—**

ऋग्वेदस्य १०।५८ सूक्ते मनसो महिमा वर्णितः। यथोक्तसूक्तस्य समेष्वपि द्वादशमन्त्रेषु 'मनो जगाम दूरकम्' इत्यस्य पौनःपुन्येनावृत्तिरुपलभ्यते। याज्ञवल्क्येनर्षिणाऽपि (वाजसनेयिसंहिता ३४ अध्यायः) मनसस्स्तुतिः कृता।

**कामः—**

ऋग्वेदस्य १०।१२९।४ सूक्ते कामो मनसः प्रथमं बीजमुपवर्णितः। अथर्ववेदे (९।२, १९।५२) अस्य मूर्तीकरणमपि दृश्यते। अयमस्तीच्छायाः पूरयिता देवः। अथर्ववेदे (३।२५।१) अस्य बाणानामप्युल्लेखो विद्यते।

**कालः—**

अथर्ववेदे (१९।५३,५४।७) कालस्य मूर्तीकरणं विश्वस्य निर्माता काल एवेत्येवंरूपेण विहितं विद्यते।

**मृत्युः—**

ऋग्वेदस्य १०।१८।१-४ मन्त्रेषु देवतारूपेणास्य स्तुतिः कृतोपलभ्यते।

**ज्ञानम्—**

ऋग्वेदस्य १०।७१ सम्पूर्णं सूक्तं ज्ञानदेवतायै समर्पितम्। ऋत्विक्कर्मणां विभागवर्णनपरो मन्त्रः 'ऋचां त्वं पोषमास्ते' सूक्तस्यास्य चरमो मन्त्रः।

**दानम्—**

ऋग्वेदस्य सूक्तद्वये (१।१२५,१०।११७) दानक्रियाया दैवीकरणं कृतं विद्यते।

**श्रद्धा**

श्रद्धायाः प्रशस्तिः ऋग्वेदस्य १०।१५१ सूक्ते विहिता वर्तते। अस्यावाहनं प्रातः, मध्याह्ने सायं रात्रौ च क्रियते। अग्नेर्प्रज्वालनं घृतार्पणञ्च अनयैवानुष्ठीयते। इयं च सम्पत्तिदात्री।

**अनुमतिः—**

अग्नेः स्तवनमनुग्रहाय, येन स्तोतारो बहुकालपर्यन्तं सूर्यावलोकने समर्थाः स्युः, सम्पाद्यते। (द्र. ऋग्वेदः, १०।५९।६,१०।१६७।३)। अथर्ववेदे (७।२०) प्रेम्णः प्रजननस्य वाजसनेयिसंहितायां (३४।८,९) सुख-शान्ति-समृद्धीनामधिष्ठात्री देवी भूत्वा परिदृश्यमाना लक्ष्यते।

**अरमतिः (भक्तिः)—**

इयमपि देवतात्वेन वर्ण्यमाना दृश्यते[1]। एवं प्रतिभाति यदवेस्तायाः 'आर्मैति' अस्या एव प्रतिच्छाया।

**सुनृता (उदारता)—**

अस्योपाधेरपि देवतारूपेण मूर्तीकरणं कृतं विद्यते।

**असुनीतिः—**

ऋग्वेदे (१०।५९।५-६) अस्या देवतात्वेन वर्णनमुपलभ्यते। दीर्घजीवनाय, शक्त्यर्थं परिपोषणाय चास्याः स्तुतिः सम्पद्यमाना वर्तते।

**निर्ऋतिः (रोगः, दुर्भाग्यम्)—**

ऋग्वेदस्य १०।५९ सूक्तेऽस्या मूर्तीकरणं मृत्योरधिष्ठातृत्वेन क्रियमाणं विद्यते। अस्यामपगतायां सत्यां यजमानः परमायुषा यौवनेन च युक्तो भूत्वाभिवर्धते।

**रतिः—**

ऋग्वेदस्य १।१७९ सूक्ते अस्या देवतात्वेन स्तुतिरुपलभ्यते।

---

१. ऋग्वेदः २/३४/८, ५/४३/३, ५४/६, ७/१/६, ३४/२१, ३६/८, ४२/३, ८/३१/१२, १०/६४/१५, १२/४/५।

**श्रीः—**

वाजसनेयिसंहितायां (३१।२२) श्रीर्लक्ष्मीश्चादित्यस्य पत्न्याविति वर्णितम्। शतपथब्राह्मणे चेयं सौभाग्यस्य सौन्दर्यस्य च मूर्तीकृतं रूपमस्ति।[१]

संक्षेपेणात्र वैदिकदेवेष्वमूर्त्तदेवतानां वैशिष्ट्यमधिकृत्य पर्यालोचनं प्रवर्तितम्। उपर्युक्तदेवताभ्यो भिन्ना इतरा वा देवता विद्यन्ते, यासां चारित्रिकं वैशिष्ट्यं स्वरूपं वा नैव व्यक्ततरं प्रतीयते; परन्तु विहितस्तुतिकर्मणा एतासु देवत्वाधानं कर्त्तुं शक्यते। बृहस्पतिः सुखमायुरित्यादयो देवता अस्यामेव कोटावायान्ति, यासां देवतात्वमथर्ववेदे स्वीकृतमिति।



१. शतपथब्राह्मणे (११/४/३/१-४)—प्रजापतिर्वै प्रजाः सृजमानोऽतप्यत। तस्माच्छ्रान्तात्तेपानाच्छ्रीरुदक्रामत्। सा दीप्यमाना भ्राजमाना लेलायन्त्यतिष्ठत्। ता दीप्यमानां भ्राजमानां लेलायन्तीं देवा अभ्यध्यायन्।।१।। ते प्रजापतिमब्रुवन्। ह नामेमाम् आ इदमस्या ददामहा इति। स होवाच स्त्री वा एषा यच्छ्रीः। न वै स्त्रियं घ्नन्ति। उत त्वा अस्या जीवन्त्या एवाददत इति।।२।। तस्या अग्निरन्नाद्यमादत्त। सोमो राज्यम्। वरुणः साम्राज्यम्।

# दर्शनानामास्तिकनास्तिकत्वविमर्शः

**डॉ.हरिप्रसाद-अधिकारी**
उपाचार्यः
तुलनात्मकधर्मदर्शनविभागस्य
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालये
वाराणसी



भारतीयदर्शनेषु मुख्यतः षड्दर्शनान्यास्तिकदर्शनत्वेन प्रसिद्धानि सन्ति। तानि च सांख्य-योग-न्याय-वैशेषिक-पूर्वोत्तरमीमांसापदवाच्यानि वर्तन्ते। एवमेव चार्वाक-जैन-बौद्धदर्शनानि नास्तिकत्वेन परिगण्यन्ते। भारतेऽन्यत्रापि च प्रायः सर्वेषु विश्वविद्यालयेषु महाविद्यालयेषु चेत्थमेवाध्ययनमध्यापनञ्च क्रियते। दर्शनानामास्तिकत्वनास्तिकत्वयोर्निर्धारणे किं मानमित्यत्र न तावत्स्पष्टतया साम्प्रदायिकदृष्ट्या च केनापि चिन्तितमिति धिया विषयमिममाश्रित्य विवेचनात्मकदिशा शास्त्राण्यनतिक्रम्य किञ्चित् प्रस्तूयते। प्रायशो विद्वद्भिरास्तिकनास्तिकयोर्निर्धारणे मनुप्रोक्तं पद्यमिदं प्रमाणत्वेनोपस्थाप्यते—

योऽवमन्येत द्वे मूले हेतुशास्त्राश्रयाद् द्विजः।
स साधुभिर्बहिष्कार्यो नास्तिको वेदनिन्दकः।।

परं व्याकरणशास्त्रसमुन्नायकः पाणिनिमुनिस्तु "अस्ति नास्ति दिष्टं मतिः"[२] इति सूत्रं सूत्रयन् परलोकमतियुक्तायुक्तयोरेवास्तिकत्वं नास्तिकत्वञ्च प्रोवाच। सूत्रमिदं व्याख्यातृभिस्तत्परवर्तिवैय्याकरणैरेवं व्याख्यातम्—

(क) अस्ति परलोके मतिर्यस्य स आस्तिकः।

(ख) नास्ति परलोके मतिर्यस्य स नास्तिकः।

एवमेव लोकप्रसिद्धिमाश्रित्येदमपि कल्पयितुमुचितम्—

(क) अस्तीश्वरे विश्वासो यस्य स आस्तिकः।

---

१. मनुस्मृतिः-२।११; २. पाणिनीयाष्टाध्यायी।

(ख) नास्तीश्वरे विश्वासो यस्य स नास्तिकः।

एवं रीत्याऽऽस्तिकनास्तिकत्वयोर्निर्धारणे मानदण्डत्रयं सुस्थितम्—

१. वेदप्रामाण्यम्, २. परलोके विश्वासः, ३. ईश्वरे विश्वासश्च।

वैदिकपरम्परायां वेदानां सर्वोत्कृष्टं स्थानं स्वीक्रियते। वेदा धर्ममूलत्वेन स्मृतिमूलत्वेन च सम्यक् प्रतिष्ठिताः। वेदविरुद्धं किमप्यत्र सोढुं न शक्यते। वेदस्य सर्वज्ञानमयत्वं प्रतिपादयता स्वयमेवोक्तं मनुना—

य: कश्चित् कस्यचिद्धर्मो मनुना परिकीर्तितः।
स सर्वोऽभिहितो वेदे सर्वज्ञानमयो हि सः[१]।।

अत्र तावदिदमवधेयं यद् वेदप्रामाण्यमधिकृत्य प्राक्कालत एव दार्शनिकेषु विवादो दृष्टिपथमायाति। चार्वाक-जैन-बौद्धैः स्वस्वदृष्ट्या वेदानां समालोचनं खण्डनञ्च कृतं वर्तते। बौद्धविदुषा धर्मकीर्तिना जडतायाः पञ्चलिङ्गानि वर्णितानि, तेषु प्रथमं लिङ्गं वेदप्रामाण्यमेव वर्णितम्। तद्यथा—

वेदप्रामाण्यं कस्यचित् कर्तृवादः स्नाने धर्मेच्छा जातिवादावलेपः।
सन्तापारम्भः पापहानाय चेति ध्वस्तप्रज्ञानां पञ्चलिङ्गानि जाड्ये[२]।।

ख्यातनामा नैय्यायिको धर्मकीर्तिः किमर्थं वेदप्रामाण्यं जाड्यलक्षणत्वेनोपवर्णयामास, तथ्यस्यास्यावबोधाय किञ्चिद् बौद्धसिद्धान्तपरिशीलनमावश्यकं प्रतीयते। समासतो बौद्धदर्शनस्य वैशिष्ट्यचतुष्टयमवलोकयितुं शक्यते। यथा हि—

१. अनीश्वरवादः, २. अनात्मवादः, ३. स्वतःप्रामाण्यनिरासः (ग्रन्थस्य), ४. पुनर्जन्मनि विश्वासः।

अत्र तावत्प्रसङ्गोपात्तं वेदप्रामाण्यसिद्धान्तमेव विवेचयितुमुपक्रम्यते— बौद्धनये कस्याप्येकस्य स्वतःप्रामाण्यस्वीकरणं बुद्धेरुपेक्षाकरणमस्ति, पुनश्चैतेन जगतीतले पूर्णमतैक्यासम्भवाद् बहूनां धर्म-सम्प्रदायानाञ्च सत्त्वात्, तत्तद्धर्म-सम्प्रदायानाञ्च पृथक् पृथग् धर्मग्रन्था भविष्यन्ति। ते च सर्वे यदि स्वस्वधर्मीयं ग्रन्थं स्वतःप्रमाणं स्वीकुर्युस्तदा जगति सर्वधर्मसमभावकल्पनमेव व्यर्थं भविष्यति।

स्वतःप्रामाण्यविरुद्धं बौद्धा इत्थं चिन्तयन्ति—बुद्धिसाहाय्यं विना वेदप्रामाण्यस्य प्रमाणीकरणं कर्तुं न शक्यते। अतो बुद्ध्यधीनत्वाद् ग्रन्थस्वतः-

१. मनुस्मृतिः-२।६।
२. प्रमाणवार्तिकं स्ववृत्तिः-१।३४२ बौद्धदर्शने राहुलसांकृत्यायनेनोद्धृतम्।

प्रामाण्यवादः स्वीकर्तुं नैव शक्यते। प्रसिद्धो बौद्धविद्वान् राहुलसांकृत्यायनमहोदयो वेदप्रामाण्यखण्डनप्रसङ्गे लिलेख—

"कस्यापि ग्रन्थस्य स्वतःप्रामाण्यस्वीकरणं नाम तत्रोक्तविषयेषु सन्देहाभावो भवति, सन्देहाभावाच्च जिज्ञासाहानिर्जायते। जिज्ञासाहानेः कस्यापि नवीनचिन्तनस्य समाप्तिः, नवीनचिन्तनसमाप्तिश्च प्रगतेर्बाधिका भवति। एवमेव ग्रन्थस्य स्वतःप्रामाण्यस्वीकारेण तत्कर्तुरपि सर्वज्ञत्वं स्वीकर्तव्यं भविष्यति। अस्यामवस्थायां मनुष्यस्तु केवलं तस्य सर्वज्ञस्य सर्वशक्तिसम्पन्नस्य क्रीडासाधनमात्रं भविष्यति। एवं क्रीडासाधनभूतैः स्वस्य कृते शुभाशुभयोश्चयनं कथं कर्तुं शक्येत? परतन्त्रमानवस्य बहुषु धार्मिकविषयेषु ग्रन्थेषु च प्रवृत्तेः किं प्रयोजनम्?

अतो मुक्तिहेतोर्मनुष्यस्य कर्मस्वातन्त्र्यं परमावश्यकमस्ति, कर्मस्वातन्त्र्यार्थं बुद्धिस्वातन्त्र्यमावश्यकम्, बुद्धिस्वातन्त्र्यार्थं कस्यापि ग्रन्थस्य स्वतःप्रामाण्यमनावश्यकमनपेक्षितञ्च। वस्तुतो ग्रन्थप्रामाण्यं बुद्ध्यधीनं भवति, न तु बुद्धिप्रामाण्यं ग्रन्थाधीनम्[१]।

इत्थं विवेचनाधारेणास्तिकनास्तिकयोर्निर्धारणे केवलं वेदा न प्रमाणम्; अपि तु वस्तुतः पुनर्जन्मनि विश्वास एवास्तिकत्वसाधक इति। अत एव मूलमाध्यमिककारिकाप्रसन्नपदाटीकायां बौद्धविदुषाऽऽचार्यचन्द्रकीर्तिना कथ्यते—"अत्रैके परिचोदयन्ति—नास्तिकविशिष्टा माध्यमिका यस्मात् कुशलाकुशलं कर्म कर्तारं च फलं च सर्वं च लोकं भावस्वभावशून्यमिति ब्रुवते। नास्तिका अपि हि एतन्नास्तीति ब्रुवते। तस्मान्नास्तिकविशिष्टा माध्यमिका इति?

नैवम्, कुतः? प्रतीत्यसमुत्पादवादिनो हि माध्यमिकाः, हेतुप्रत्ययान् प्राप्य प्रतीत्यसमुत्पन्नत्वात् सर्वमेवेहलोकपरलोकं निःस्वभावं वर्णयन्ति। यथास्वरूपवादिनो नैव नास्तिकाः प्रतीत्यसमुत्पन्नत्वाद् भावस्वभावशून्यत्वेन न परलोकाद्यभावं प्रतिपन्नाः। किं तर्हि? ऐहलौकिकं वस्तुजातमुपलभ्य स्वभावतस्तस्य परलोकादिहागमनम्, इहलोकाच्च परलोकगमनमपश्यन्त इहलोकोपलब्धपदार्थसदृशपदार्थान्तरापवादं कुर्वन्ति। तथापि वस्तुस्वरूपेण अविद्यमानस्यैव ते नास्तित्वं प्रतिपन्ना इत्यमुना तावद्दर्शनेन साम्यमस्तीति चेत् नहि, कुतः संवृत्या माध्यमिकैरस्तित्वेनाभ्युपगमान्न तुल्यता वस्तुतस्तुल्यतेति चेत्, यद्यपि वस्तुतोऽसिद्धिस्तुल्या तथापि प्रतिपत्तृभेदात्तुल्यता। यथा हि कृतचौर्यं पुरुषमेकः सम्यगपरिज्ञायैव तदमित्रप्रेरितस्तं मिथ्या व्याचष्टे—चौर्यमनेन कृतमिति, अपरस्तु

१. बुद्धदर्शने पं. राहुलसांकृत्यायनस्य, ९-१० पृष्ठयोः।

साक्षाद्दृष्ट्वा दूषयति। यद्यपि वस्तुतो नास्ति भेदस्तथापि परिज्ञातृभेदादेकस्तत्र मृषावादीत्युच्यते, अपरस्तु सत्यवादीति, एकश्च अयशसा चापुण्येन च सम्यक् परीक्ष्यमाणो युज्येत नापरः, एवमिहापि यथावद्विदितवस्तुस्वरूपाणां माध्यमिकानां ब्रुवतामवगच्छतां च वस्तुस्वरूपाभेदेऽपि यथावदविदितवस्तुस्वरूपैर्नास्तिकैः सह ज्ञानाभिधानयोर्नास्ति साम्यम्। यथैव हि उपेक्षासामान्येऽपि अप्रतिसंख्याय प्रतिसंख्याय उपेक्षकयोरिव पृथग्जनार्हतोर्जात्यन्धचक्षुष्मतोश्च विषमप्रपातप्रदेश-विनिश्चितसामान्येऽपि यथास्ति महान् विशेषः, तथा नास्तिकानां माध्यमिकानाञ्च विशेषो भविष्यतीति पूर्वाचार्याः''[१]।

एतेनेदं सुसिद्धं यद् बौद्धा नास्तिकत्वं नाङ्गीकुर्वन्ति। पाणिनिपरिभाषया चैते भवन्त्यास्तिकाः। एवमेव पुनर्जन्मकर्मफलस्वीकाराज्जैना अपि भवन्त्यास्तिकाः। किं तर्हि प्राचीनकालात्प्रवर्तमानो नास्तिकास्तिकयोर्विभागो विवादश्च समाप्तिं यास्यतः? प्रश्नस्यास्य समाधानाय गभीरं शास्त्रचिन्तनमपेक्ष्यते। यदि निराग्रहदृष्ट्या कार्यमिदं प्रारभ्यते चेदवश्यमेव किमपि सौहार्दकरं समाधानमासादयितुं शक्यते। वस्तुतो बौद्धाः किमपि प्रमाणप्रमेयादिकं न स्वीकुर्वन्तीति कृत्वा तन्नास्तिकत्वं साध्यते, परं वर्तमानकाले बहूनां लुप्तबौद्धग्रन्थानां प्राप्त्या तत्तत्त्वप्रियत्वं प्रमाणयितुं शक्यते। तत्त्वलक्षणं प्रतिपादयताऽऽचार्यनागार्जुनेनोट्टङ्कितं मध्यमकशास्त्रे—

अपरप्रत्ययं शान्तं प्रपञ्चैरप्रपञ्चितम् ।
निर्विकल्पमनानार्थमेतत्तत्त्वस्य लक्षणम्[२] ।।

एतत्पद्यतात्पर्यं प्रकाशयन्नाह चन्द्रकीर्तिः—परमार्थसत्यं कतमत्? यत्र ज्ञानस्याप्यप्रचारः कः पुनर्वादोऽक्षराणामिति? तत्त्वज्ञानफलं वर्णयता तेन पुनरलेखि—एतद्धर्मतत्त्वामृतप्रतिपन्नानां श्रावकाणां श्रुतचिन्ताभावनाक्रमात् प्रवर्तमानानां शीलसमाधिप्रज्ञात्मकस्कन्धत्रयामृतरसस्य उपयोगान्नियतमेव जरामरण-क्षयस्वभावनिर्वाणाधिगमो भवति[३]।

एतस्माद् बौद्धानां निर्वाणाभिमुखत्वं सिद्ध्यति। तेषां तत्त्वमप्यवाङ्मनस-गोचरमस्तीति 'यत्र ज्ञानस्याप्यप्रचारः' इति पूर्वकथनात् प्रमाणीभवति। अतः परलोकस्वीकरणादपि बौद्धा न चार्वाकवन्नास्तिककोटावागच्छन्तीति स्वतः

१. मध्यमकशास्त्रे प्रसन्नपदाटीकायाम् (बौद्धभारतीसंस्करणे १५६-१५७ पृष्ठ।
२. तत्रैव आत्मपरीक्षाप्रकरणे नवमं पद्यम्।
३. तत्रैव आत्मपरीक्षाप्रकरणे एकादशश्लोके (प्रसन्नपदा)।

परिस्फुटति। एवमेव जिनानुयायिनोऽपि कर्मफलं मुक्तिं चाङ्गीकुर्वन्ति। यथोक्तं स्याद्वादमञ्जर्याम्—

मुक्तोऽपि वाभ्येतु भवं भवो वा
भवस्थशून्योऽस्तु मितात्मवादे ।
षड्जीवकायं त्वमनन्तसंख्य-
माख्यस्तथा नाथ यथा न दोषः[1] ।।

श्लोकस्यास्य व्याख्यायां लिखितम्—न च क्षीणकर्मणां भवाधिकार इति।

अपि च—

दग्धे बीजे यथाऽत्यन्तं प्रादुर्भवति नाङ्कुरः ।
कर्मबीजे तथा दग्धे न रोहति भवाङ्कुरः[2] ।।

अथ चास्तिकत्वनिर्धारणे यदीश्वरप्रामाण्यं स्वीक्रियेत तदा सांख्या मीमांसकाश्च नास्तिकतामाप्नुयुः। यतो हि सांख्यदर्शनोक्तपञ्चविंशतितत्त्वेषु ईश्वरतत्त्वं न विद्यते। जगतः समुत्पत्तिलयकार्याणि प्रकृतिरेव सम्पादयति। यथोक्तं सांख्यकारिकायाम्—

इत्येष प्रकृतिकृतो महदादिविशेषभूतपर्यन्तः।
प्रकृतिपुरुषविमोक्षार्थं स्वार्थ इव परार्थ आरम्भः।।

कारिकामिमां सुस्पष्टयन्नाह वाचस्पतिमिश्रमहोदयः कौमुद्याम्—इत्येष इति। आरभ्यत इति 'आरम्भः' सर्गो महदादिभूतान्तः प्रकृत्यैव कृतो नेश्वरेण, न ब्रह्मोपादानः, नाप्यकारणः। अकारणत्वे ह्यत्यन्तभावोऽत्यन्ताभावो वा स्यात्। न ब्रह्मोपादानः। चितिशक्तेरपरिणामात् नेश्वराधिष्ठितप्रकृतिकृतः, निर्व्यापारस्याधिष्ठातृत्वासम्भवात्। न हि निर्व्यापारस्तक्षा वास्याद्यधितिष्ठति। ईश्वराभावेऽचेतना प्रकृतिः कर्मणि कथं प्रवर्तते? इति शङ्कायां समुपस्थितायां समादधातीश्वरकृष्णः —

वत्सविवृद्धिनिमित्तं क्षीरस्य यथा प्रवृत्तिरज्ञस्य ।
पुरुषविमोक्षनिमित्तं तथा प्रवृत्तिः प्रधानस्य ।।

पद्यस्यास्य तात्पर्यमित्थं प्रकाशितं सांख्यतत्त्वकौमुदीकारेण—''न ह्यवाप्तसकलेप्सितस्य भगवतो जगत् सृजतः किमप्यभिलषितं भवति। नास्ति कारुण्याद्

१. स्याद्वादमञ्जर्याः २९ तत्र पद्यम्; २. तत्रैव व्याख्यायाम्।

अस्य सर्गे प्रवृत्तिः, प्राक्सर्गाज्जीवानामिन्द्रियशरीरविषयानुत्पत्तौ दुःखाभावेन कस्य प्रहाणेच्छा कारुण्यम्? सर्गोत्तरकालं दुःखिनोऽवलोक्य कारुण्याभ्युपगमे दुरुत्तरमितरेतराश्रयदूषणम्, कारुण्येन सृष्टिः सृष्ट्या च कारुण्यमिति[१]। अनया रीत्या सांख्याः स्पष्टत ईश्वरकारणवादं निराकुर्वन्ति। अत ईश्वरदृष्ट्या सांख्यानामास्तिकत्वं साधयितुं न शक्यते।

अत्रेदमप्यवधेयं यद् वेदनिन्दाकारणात् चार्वाक-जैन-बौद्धदर्शनानि नास्तिकानि मन्यन्ते चेत् सांख्या अपि वैदिकं मार्गं दृष्टवन्मन्यन्ते—

दृष्टवदानुश्रविकः स ह्यविशुद्धिक्षयातिशययुक्तः।
तद्विपरीतः श्रेयान् व्यक्ताव्यक्तज्ञविज्ञानात्।।

श्लोकस्यास्य तात्पर्यं प्रकटयता पण्डितश्रीवाचस्पतिमिश्रेणोक्तं कौमुद्याम्—"तदेतत् सर्वमभिप्रेत्याह—'तद्विपरीतः श्रेयान्' इति। तस्माद् आनुश्रविकाद् दुःखापघातकोपायात् सोमपानादेरविशुद्धाद् अनित्यसातिशयफलात्, विपरीतो विशुद्धो हिंसादिसङ्कराभावाद् नित्यनिरतिशयफलः असकृद् अपुनरावृत्तिश्रुतेः[२]। इत्थं वैदिकोपायानां प्रतिषेधानन्तरमपि सांख्या नास्तिककोटौ न परिगणिता इति विचारणीयो विषयः।

एवमेव परम्परायामास्तिकत्वेन समादृतं मीमांसादर्शनमपि कदाचिदीश्वर-सृष्टिकर्तृत्वनिषेधकत्वात् तस्याफलदत्वसाधनाच्च नास्तिकत्वमापद्येत। वस्तुतस्तु सृष्टिकर्तृत्वेन कर्मफलदातृत्वेन चेश्वरप्रतिष्ठा सर्वदर्शनेषु दृश्यते। एतत् कार्यद्वयं विनेश्वरस्य प्रामाणिकत्वं प्रभुत्वञ्च कथं सिद्ध्येत्? यथोक्तं द्वादशदर्शन-सङ्ग्रहे—

नेश्वरममंसतैते फलदं किन्तु प्रमाणचिन्तायाम्।
प्रामाणिकं पुराणं जगुरीशं सावतारं च[३]।।

अत्र तथ्यस्यास्योल्लेखस्येदमेव कारणमस्ति यद् नास्तिकास्तिकयोर्निर्धारणे ईश्वरस्वीकरणमनिवार्यं नास्ति। अथ च कथङ्कारं वेदतात्पर्यनिर्णयपरायणे मीमांसाविषये नास्तिकतायाः प्रश्नः समुत्थाप्यते? इत्याश्चर्यं न विधेयं यतो हि कुमारिलभट्टपादसमयेऽपि मीमांसादर्शनसम्बन्धे विप्रतिपत्तयः समुत्थिता अवर्तन्त। तदुद्दिश्य श्लोकवार्तिकभूमिकायां स्पष्टीकरोत्याचार्यः कुमारिलः—

---

१. सांख्यतत्त्वकौमुदी-५६-५७ श्लोकौ; २. तत्रैव द्वितीयं पद्यम्।
३. द्वादशदर्शनसङ्ग्रहे मीमांसादर्शनप्रकरणे ९२ तमं पद्यम्।

प्रायेणैव हि मीमांसा लोके लोकायतीकृता।
तामास्तिकपथे कर्तुमयं यत्नः कृतो मया[१]॥

एतद्विवेचनानन्तरमिदं निर्गलितं यद् नास्तिकास्तिकानां निर्धारणे नेश्वरो मानदण्डायते, न च कर्मफलम्, केवलं वेदप्रामाण्यं तत्र हेतुर्दृश्यते। प्रामाण्यमेव नापि तु वेदनिन्दनाभाव एवास्तिकसाधकत्वं वर्तते। यतो हि वेदबाह्योऽवैदिको वा नास्तिक इति नोच्यते, किन्तु 'नास्तिको वेदनिन्दकः' इति मनुप्रोक्तपद्येन वेदनिन्दकस्यैव नास्तिकत्वं वर्णितम्।

अत्र तावत् कैर्दर्शनैर्वेदाः कियन्मात्रं निन्दिताः? कियती कीदृशी वा निन्दा सोढव्या? कीदृशी चासोढव्येति बोधोऽप्यावश्यकः। प्रथमं तावच्चार्वाककृतं वेदनिन्दनमुपस्थाप्यते[२]—

अग्निहोत्रं त्रयो वेदास्त्रिदण्डं भस्मगुण्डनम्।
बुद्धिपौरुषहीनानां जीविकेति बृहस्पतिः॥

त्रयो वेदस्य कर्तारो भण्डधूर्तनिशाचराः।
जर्फरी-तुर्फरीत्यादि पण्डितानां वचः स्मृतम्॥

ततश्च जीवनोपायो ब्राह्मणैर्विहितस्त्विह।
मृतानां प्रेतकर्माणि न त्वन्यद्विद्यते क्वचित्[३]॥

एभिः पद्यैर्विज्ञायते यत् चार्वाकाणां खण्डनं सुस्पष्टं वर्तते, तत्र सामान्यमतीनामपि सन्देहो न जायते। साक्षाद्वा परम्परया वा वेदस्य कमप्यंशं न स्वीकुर्वन्ति चार्वाकाः। वेदे किमपि सत्यं तथ्यं वा नास्ति तन्मते। इत्थं वेदस्य पूर्णरूपेणास्वीकारात् वैदिकैस्ते नास्तिकसंज्ञया सम्बोधिताः। यथा चार्वाका रुक्षवचसा वेदं निन्दन्ति न तथा निन्दन्ति जैनाः। ते मुख्यतो वेदविहितहिंसा-विषयमेव खण्डयन्ति। जैनसांख्ययोः खण्डनं प्रायः समानमेव वर्तते। तद्यथा—

न धर्महेतुर्विहितापि हिंसा नोत्सृष्टमन्यार्थमपोद्यते च।
स्वपुत्रघाताद् नृपतित्वलिप्सा सब्रह्मचारिस्फुरितं परेषाम्[२]॥

श्लोकस्यास्य व्याख्याप्रसङ्गे स्याद्वादमञ्जर्यां हिंसाविषयो बहुविवेचितः। तत्र जैनैः सांख्यसहयोगोऽपि गृहीतो वेदविहितहिंसाप्रतिषेधाय। सांख्यमतत्वेन पद्यमिदमुद्धृतम्—

---

१. श्लोकवार्तिकप्रस्तावनायाम्।
२. सर्वदर्शनसङ्ग्रहे, चार्वाकदर्शनप्रकरणे, २०-२१ पृष्ठयोः; ३. स्याद्वादमञ्जर्यां ११ पद्यम्।

यूपं छित्वा पशून् हत्वा कृत्वा रुधिरकर्दमम् ।
यद्येवं गम्यते स्वर्गे नरके केन गम्यते[१] ।।

वेदान्तिनां मतमपि तत्रोद्धृतम्—

अन्धे तमसि मज्जेम पशुभिर्ये यजामहे।
हिंसा नाम भवेद्धर्मो न भूतो न भविष्यति।।

महाभारते व्यासेनाप्युक्तम्—

प्राणिघातात् तु यो धर्ममीहते मूढमानसः।
स वाञ्छति सुधावृष्टिं कृष्णाहिमुखकोटरात्।।

इत्थं प्रायो जैना न चार्वाकवद् वेदं खण्डयन्ति, न च परुषवचोभिर्निन्दन्ति, तेषां खण्डनं तु सयुक्तिकं, सतर्कं, सर्वदर्शनविमर्शनपूर्वकञ्च वर्तते। सर्वमाहत्य जैनखण्डनं सांख्यखण्डनं नातिशेते, तथापि सांख्या आस्तिका जैनाश्च नास्तिकाः समभवन्। एतद्रहस्यं सुधिय एवावगन्तुं प्रभवन्ति। एवमेव बौद्धानां वेदखण्डनस्य मूलेऽपि वैदिकी हिंसैवासीत्। गौतमबुद्धेन वेदमाश्रित्य प्रवर्तमानहिंसाकर्मणामथ च ब्राह्मणनामधारकजनवञ्चनपरायणानां जनानामेव निन्दा कृता, ब्राह्मणेन सह तस्य मनागपि विरोधो नासीत्। ब्राह्मणत्वनिर्धारणे कर्मणो महत्त्वं स्वीकुर्वता बुद्धेन कथितम्—

न जच्चा वसलो होति न जच्चा होति ब्राह्मणो ।
कम्मुना वसलो होति कम्मुना होति ब्राह्मणो[२] ।।

ब्राह्मणवर्गेऽग्निहोत्रकर्मकर्तुर्ब्राह्मणस्य प्रशंसापि कृता बुद्धेन—

यम्हा धम्मं विजानेय्य सम्मासं बुद्धदेसितं।
संक्कच्चं तं नमस्सेय अग्निहुत्तं व ब्राह्मणो।।

ब्राह्मणत्वं न बाह्यचिह्नेष्ववतिष्ठत्यपि तु यस्मिन् जने सत्यं धर्मश्च भवति, स एव वस्तुतो ब्राह्मण इति सुस्पष्टं निगदितं बुद्धेन—

न जटाहि न गोत्तेन न जच्चा होति ब्राह्मणो।
यम्हि सच्चं च धम्मो च सो सुची सो च ब्राह्मणो।।

---

१. स्याद्वादमञ्जर्यां ११ श्लोकव्याख्यायाम्।

२. बुद्धवचनम्।

ब्राह्मणस्योच्चतां वर्णयन् पुनराह गौतमो बुद्धः—

उसभं पवरं वीरं महेसिं विजिताविनं ।
अनेजं नहातकं बुद्धं तमहं ब्रूमि ब्राह्मणं[१] ।।

[ संस्कृतानुवादः—

ऋषभं प्रवरं वीरं महर्षिं विजितेन्द्रियम् ।
अनेजं स्नातकं बुद्धं तमहं ब्रवीमि ब्राह्मणम् ।। ]

एतदवलोकनेनेदं सिद्ध्यति यद् बुद्धेन वेदनाम्ना विहितहिंसाया विरोधः कृतः, ब्राह्मणस्य वास्तविकी परिभाषा च प्रदर्शिता, न तु चार्वाकवत् तत्खण्डनं विहितम्। बौद्धनैय्यायिकधुरन्धरो धर्मकीर्तिरपि न चार्वाकवद्वेदं खण्डयत्यपि तु तदपौरुषेयत्वनिराकरणे दत्तावधानो भवति। यथोक्तं तेन प्रमाणवार्तिके[२] —

गिरां मिथ्यात्वहेतूनां दोषाणां पुरुषाश्रयात् ।
अपौरुषेयं सत्यार्थमिति केचित् प्रचक्षते ।।

अत्र प्रतिप्रश्नं कुर्वन्नाह सः —

गिरां सत्यत्वहेतूनां गुणानां पुरुषाश्रयात् ।
अपौरुषेयं मिथ्यार्थं किं नेत्यन्ये प्रचक्षते ।।

वेदापौरुषेयत्वविचारप्रसङ्गे बहवो विरोधाभासाः समुपस्थापिता धर्मकीर्तिना। यथा हि—

अवस्तुनि कथं वृत्तिः सम्बन्धस्यास्य वस्तुनः।
अपौरुषेयतापीष्टा कर्तॄणामस्मृतेः किल।।
सत्यस्याप्यनुवक्तार इति धिग् व्यापकं तमः।।

इत्थं बौद्धानां वेदविषयकविचाराः समासेन प्रदर्शिताः। आपाततः सांख्य-जैन-बौद्धानां वेदखण्डनं समानमेव। परमेभिश्चार्वाकवद् मूलोच्छेदस्तु नैव कृतः। अतः परलोक-कर्मफलस्वीकारदृष्ट्या जैना बौद्धाश्चास्तिककोटौ परिगणयितुं शक्यन्ते, न तावदत्र कापि शास्त्रीया बाधा परिलक्ष्यते।

अत्रेदमप्यविस्मर्तव्यं यदस्ति नास्ति-व्यवहारः पारमार्थिकदशायां न सम्भवति। आस्तिकनास्तिकविवादशून्यतायां सत्यामेव निर्वाणमधिगम्यत इति साधयतोक्तमाचार्यनागार्जुनेन मध्यमकशास्त्रीयधातुपरीक्षाप्रकरणे—

१. धम्मपदे ब्राह्मणवर्गेऽवलोकनीयम्।
२. प्रमाणवार्तिके स्वार्थानुमानपरिच्छेदे २२५ श्लोकतः परिच्छेदान्तम्।

अस्तित्वं ये तु पश्यन्ति नास्तित्वं चाल्पबुद्धय:।
भावानां ते न पश्यन्ति द्रष्टव्योपशमं शिवम्।।

पद्यमिदमित्थं व्याख्याति चन्द्रकीर्ति:—द्रष्टव्योपशमं विलक्षणं सर्वकल्पना-जालरहितं ज्ञानज्ञेयनिवृत्तिस्वभावं शिवं परमार्थस्वभावम्। परमार्थममरमजरमप्रपञ्चं निर्वाणं शून्यतास्वभावं तें न पश्यन्ति मन्दबुद्धितया, अस्तित्वं नास्तित्वं चाभिनिविष्टा: सन्त इति। यथोक्तमार्यरत्नावल्याम्—

नास्तिको दुर्गतिं याति सुगतिं यात्यनास्तिक:।
यथाभूतपरिज्ञानान्मोक्षमद्वयनिश्रित:।।

आर्यसमाधिराजसूत्रे चोक्तं भगवता—

अस्तीति नास्तीति उभेऽपि अन्ता, शुद्धी अशुद्धीति इमेऽपि अन्ता।
तस्मादुभे अन्तविवर्जयित्वा, मध्येऽपि स्थानं न करोति पण्डित:।।

अनया रीत्यायं नास्तिकास्तिकविवाद: प्राक्कालिकविद्वद्वरै: सम्यग्विवेचि-तोऽपि सम्प्रति कालप्रभावात् लुप्तप्रायो दृश्यते। लोका: सम्यक्शास्त्रालोडनं विनैव कांश्चनास्तिकत्वेन परिचिन्वन्ति, अन्याँश्च नास्तिकान् भावयन्ति। सामान्यतो नास्तिकशब्देन सम्प्रत्यधार्मिकजनो बुद्ध्यते। बौद्धा जैनाश्चापि धार्मिका मन्यन्ते। तर्हि धार्मिकत्वं नास्तिकत्वञ्च कथमेकत्र सङ्गच्छते? विचारणीयोऽयं विषयो विद्वद्वरै:।

एवमेव गौतमबुद्धोऽद्वयवादीत्युच्यते[1], आचार्यशङ्करस्त्वद्वैतवादी। अनयोर्वादयो: किमस्ति वैशिष्ट्यम्? येन शङ्कराचार्य: सम्प्रत्यास्तिकशिरोमणिरिव स्मर्यते। बौद्धास्तु नास्तिककलङ्कपङ्कादिदानीमपि न मुक्ता:। वस्तुतो गम्भीरतया निराग्रहबुद्ध्या विचार्यमाणे श्रुतिमत-बौद्धमतयोराश्चर्यकरं साम्यं समासाद्यते। शाङ्कराद्वैतमिव परमार्थतो निर्वाणस्योपदेशोऽसम्भव:, बुद्धेरविषयत्वात्। अतो बुद्धेन न किमपि देशितमुपदिष्टं वेति। तद्यथा—

सर्वोपलम्भोपशम: प्रपञ्चोपशम: शिव:।
न क्वचित् कस्यचित् कश्चिद् धर्मो बुद्धेन देशित:।।

अपि च—

अनिर्वाणं हि निर्वाणं लोकनाथेन देशितम्।
आकाशेन कृतो ग्रन्थिराकाशेनैव मोचित:[2]।।

---

१. षडभिज्ञो दशबलोऽद्वयवादी विनायक:—अमरकोशे स्वर्गवर्गे।
२. मध्यमकशास्त्रे निर्वाणपरीक्षायां २४ तमं पद्यम्।

एवमेव माण्डूक्योपनिषच्छ्रुतिरपि ब्रूते—

न निरोधो न चोत्पत्तिर्न बुद्धो न च साधकः।
न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता[१]।।

प्रायेण बौद्धाः शून्यवादिनः किमपि प्रमाणप्रमेयादिकं नाङ्गीकुर्वन्त्यत एव ते नास्तिका इति सनातनी धारणाऽस्ति, परं धारणेयं बौद्धप्रयुक्तशून्यशब्दतात्पर्य-बोधाभावादेव समुद्भूतेति मन्यन्ते बौद्धविद्वांसः। शून्यशब्दमाश्रित्य लिखितमाचार्य-नागार्जुनेन—'अपि च निःस्वभावं हि तथागतं व्याचक्षाणेन अविपरीतार्थाभिधित्सुना योगिना सता सर्वथा—

शून्यमिति न वक्तव्यमशून्यमिति वा भवेत्।
उभयं नोभयं चेति प्रज्ञप्त्यर्थं तु कथ्यते[२]।।

अस्य तात्पर्यं प्रकाशयँल्लिलेख प्रसन्नपदाकारः[३]—

सर्वमेतन्न वक्तव्यमस्माभिः किन्त्वनुक्ते यथावदवस्थितं प्रतिपत्ता प्रतिपत्तुं न समर्थ इत्यतो वयमपि आरोपतो व्यवहारसत्य एव व्यवहारार्थं विनेय-जनानुरोधेन शून्यमित्यपि ब्रूमः, अशून्यमित्यपि, नैव शून्यं नाशून्यमित्यपि ब्रूमः। अत एवाहते—'प्रज्ञप्त्यर्थं तु कथ्यते' इति।

बौद्धैर्व्यवहारदशायामेव शून्यशब्दप्रयोगो विधीयते, परमार्थतस्तु तेऽपि—

न शून्यं नापि चाशून्यं तस्मात् सर्वं विधीयते।
तथा सत्त्वादसत्त्वाच्च मध्यमा प्रतिपच्च सा[४]।।

एतच्च शून्यनिरूपणमद्वैतप्रतिष्ठापकैराचार्यशङ्करैरपि दशश्लोक्यां तद्वद्विहितमिति महदाश्चर्यकरो विषयः। तत्पद्यमप्यवलोकनीयमत्र—

न चैकं तदन्यद् द्वितीयं कुतः स्याद्
न वा केवलत्वं न चाकेवलत्वम्।
न शून्यं न चाशून्यमद्वैतकत्वात्
कथं सर्ववेदान्तसिद्धं ब्रवीमि[५]।।

---

१. सगौडपादीयकारिकाथर्ववेदीयमाण्डूक्योपनिषद् द्वितीयप्रकरणे ३२ तमं पद्यम्।
२. मध्यमकशास्त्रीयतथागतपरीक्षायामेकादशं पद्यम्।
३. तत्रैव श्लोकव्याख्यायाम्।
४. तत्रैव; ५. वेदान्तसन्दर्भे (दशश्लोक्या अन्तिमं पद्यम्)।

अद्वैततत्त्वं वाणीविषयो नास्तीति मधुसूदनसरस्वतीमुनिनालेखि सिद्धान्तबिन्दौ—"अद्वैतकत्वेन वागविषयत्वात्। अवचनेनैव प्रोवाच"[1]। एवमेव माध्यमिकैरप्युक्तम्—"वस्तुनिबन्धना हि प्रपञ्चाः स्युः, अवस्तुकश्च तथागतः। कुतः प्रपञ्चानां प्रवृत्तिसम्भवः। अतः प्रपञ्चातीतस्तथागतः[2]"।

वैदिकबौद्धयोस्तत्त्वसाम्यस्य दिङ्निर्देशमात्रमेतत्। सम्यक्परिशीलने कृते न जाने कियन्ति परस्परसम्बद्धानि तत्त्वानि प्रकटीभविष्यन्ति। अत्रैकमपरमपि तथ्यमवधेयं यद् बहव आधुनिककालिका विशिष्टा विश्वविश्रुताश्च विद्वांसो वैदिकबौद्धयोः साम्यं परस्पराश्रयत्वञ्च प्रतिपादयन्ति। यदि बौद्धाः परोक्षतया वेदानुयायिन एव तर्हि तन्नास्तिकत्वं कथं सिद्ध्यति? मनीषिप्रवरो दार्शनिकः डॉ. राधाकृष्णन्महोदयो भारतीयदर्शने लिलेख—"बुद्धस्य लक्ष्यमासीद् उपनिषदः श्रेष्ठविज्ञानवादं स्वीकृत्य तस्य मानवजातेर्दैनन्दिनव्यवहारे यथावश्यकं सुलभीकरणम्। ऐतिहासिकबौद्धधर्मस्य तात्पर्यमुपनिषत्तत्त्वानां जनसमूहे प्रचारः[3]"।

एवमेव बौद्धदर्शने वेदान्ते च कृतभूरिपरिश्रमः प्रो.चन्द्रधरशर्ममहोदयोऽपि बौद्धसिद्धान्तं श्रुतिमूलकमेव मन्यते—

अद्वैतवादस्य हि पूर्वभूमिं
मन्येऽहमेतं ननु बौद्धवादम्।
अयुक्तमेवास्त्यनयोर्विरोधो
यतः श्रुतिः सा जननी द्वयोर्हि।।[4]

एतद्विवेचनाधारेणेदं वक्तुं शक्यते यद् दर्शनानामास्तिकनास्तिकत्वयोर्निर्धारणं न तथा सुकरं यथा लोकैर्व्यवह्रियते। विषयेऽस्मिन् नवीनदृष्ट्या चिन्तनं प्रचलेदिति धिया लघुलेखोऽयं निबद्धः। अत्र विदुषां विवेचकानाञ्च सत्परामर्शा अपेक्ष्यन्ते।

।। इति शम् ।।

●

---

१. वेदान्तसन्दर्भे (दशश्लोक्या अन्तिमं पद्यम्)।

२. मध्यमकशास्त्रम्, तथागतपरीक्षायां १५ श्लोके प्रसन्नपदा।

३. Indian philosophy, part-1, page-471।

४. बौद्धदर्शन और वेदान्त (प्रस्तावनायाम्)।

# कार्यकारणभावमीमांसा

**डॉ. वृजकिशोरत्रिपाठी**

प्रवक्ता (संस्कृतस्य)
राजकीयमहाविद्यालय:, फतेहपुरम्-आलापुरम्
अम्बेडकरनगरम्



शास्त्रं सांख्यं नयवादीदतिकरुणमना मातुरर्थे पुरस्तात्
काणादीमक्षपादीञ्च गहनविषयां व्याकरोत् तर्कधीभ्य:।
व्यातेने जैमिनीयान्तदनु च परमां व्यासप्रोक्तां सुविद्यां
बौद्धं व्याभाष्य लोके स खलु विजयते लोकनाथोऽद्वितीय:।।

कार्यकारणभावोऽयं सर्वशास्त्रेषु वर्णित:।
तेभ्य उपाहरन् किञ्चिन्नवं व्याकुर्वेऽन्वहम्।।

इहानीदृशि जगति परिणमद्रूपे समेऽपि संस्कृता धर्मा उत्पादव्ययधर्मिण:, ते हि उत्पद्यन्ते क्षण एकस्मिन् विनश्यन्ति चापरस्मिन्। यथाहु: सौगतनयवादिन: सर्वे चित्तचैत्ता: प्रतीत्यसमुत्पन्ना उत्पादविनाशशालिन इति। अपि चाह भगवान् तथागत:—सर्वं दु:खं दु:खं, सर्वं स्वलक्षणं स्वलक्षणं, सर्वं क्षणिकं क्षणिकं सर्वं शून्यं शून्यमिति। ये श्रुतिप्रमाणाभिधायिनो नैयायिकादयस्ते काञ्चन पदार्थान्नित्यत्वेन पराञ्चानित्यत्वेनोरीकुर्वन्ति। तत्रानित्या: कार्या: कारणाल्लब्ध-सत्ताका नित्याश्चोत्पादविनाशरहिता: कार्यभावमननुभवन्त इति नास्त्येकेषामपि विमति:। भवति कारणात्कार्योत्पत्तिरिति समानमतयोऽपि तीर्थका भिन्नदर्शनदृष्टय: कार्यकारणभावे तु विवदन्ते। तेषां हि कियन्तो ब्रह्मवादिन: 'एकस्य सतो विवर्त: कार्यजातं न वस्तुसदि'ति स्वीकुर्वन्ति। अन्ये तु 'सत असज्जायते' इति। 'सत: सज्जायते' इत्यपरे। 'असत: सज्जायते' इति च प्रमाणपटवो बौद्धा आमनन्ति। अथेदानीमेषाभभिमता अनुक्रमेण विचार्यन्ते।

तत्र कार्यकारणभावविचारे वैदिकदर्शनपरम्परायामस्ति पद्धतिर्द्वयी। तत्रैका सत्कार्यवाद इत्यभिधाऽसत्कार्यवाद इति चापरा। सत्कार्यवादोऽपि विवर्तवाद:

परिणामवादश्चेति द्वौ सिद्धान्तौ स्तः। असत्कार्यवाद एक एव। इदानीं प्रथमं तावत्सत्कार्यवादं मीमांस्यते खण्डनाय। तथा हि—

विवर्तवादः (वेदान्तिमतम्)—एकस्याद्वितीयस्य सतो त्रैकालिकबाधरहितस्य ब्रह्मणो विवर्तोऽतात्त्विकोऽन्यथाभावः, रज्ज्वा सर्प इव कार्यजातं यावज्जगद्रूपं कार्यमिति भावः। न वस्तुसदित्यस्य वस्तुतः परमार्थतः सद् नास्तीति भावः।

**अद्वैतवेदान्तिनः** 'सतो ब्रह्मणः' असन्मिथ्यात्मकमिदं जगद्विवृतं जायत' इति, तेषाञ्चेत्थमभिप्रायः—'सदेव सोम्येदमग्र आसीत्', 'नित्यं ज्ञानमनन्तं ब्रह्म' इत्यादिश्रुतिप्रमाणकं संसारप्राक्समये परं ब्रह्म एव व्यापकं नित्यः विज्ञानात्मकमस्ति, (तच्च सदासीत् सृष्टिसमये च 'स ऐक्षत बहु स्यां प्रजायेय' 'स ईक्षाञ्चक्रे' इति श्रुतिभिस्तस्यैव ब्रह्मण ईक्षापूर्वकं जगत्कर्तृत्वमवगम्यते। इह जगत्सृष्टौ एकमेव ब्रह्म अभिन्ननिमित्तोपादानकारणमस्ति। यद्यपि लोक एकस्य निमित्तत्वमुपादानत्वञ्च न प्रायेण दृश्यते। मृदादेरचेतनत्वात् कुलालादेश्च घटाद्याकारेण विचित्रपरिणामशक्तेरभावान्नैकस्य तत्त्वम्, तथापि सर्वज्ञस्य सर्वशक्तिमतः परमेश्वरस्योभयं घटते। ईक्षापूर्वककर्तृत्वश्रवणान्निमित्तत्त्वम्, प्रतिज्ञादृष्टान्तानुपरोधादित्यादिहेतुभिश्च तस्य प्रकृतित्वं सिद्धम्। प्रकृतित्वञ्चास्य ब्रह्मणो न विकाराभिप्रायेण, अपि तु विवर्ताभिप्रायेण बोध्यम्। यथा सर्पोपादानं रज्जुर्यथा वा रजतस्योपादानं शुक्तिरिति।

ननु 'तस्माद्वा एतस्मादात्मनः आकाशः सम्भूतः' इत्यादिश्रुतिभिर्ब्रह्मणः परिणामोऽयं संसार इत्यवगम्यते, तदा कथं जगद्विवर्तो ब्रह्मण इति चेन्न, नित्यस्य परिणामत्वेऽनित्यत्वापत्तेः, 'अस्थूलमनणु' (बृहदारण्यकोपनिषद्-३।८।८) इत्यादिभ्यश्च कूटस्थनित्यत्वावगमात्। 'देवात्मशक्तिं स्वगुणैर्निगूढाम्' (श्वे. १।१) इत्यादिश्रुतिभिर्ब्रह्माधिष्ठानकमायाया एव जगतः परिणाम्युपादानत्वं सिद्ध्यति। न च जगतो ब्रह्मभिन्नमायोपादानकत्वे प्रतिज्ञादृष्टान्तोपरोधः स्यादेवेति वाच्यम्, ब्रह्मणि मायाया कल्पितत्वात्। ब्रह्मविषयायास्तदाश्रयायास्तस्यास्तदतिरिक्तसत्ताया अभावात्। न हि आरोपितस्याधिष्ठानातिरिक्तसत्ता सम्भवति। न च मायायाः स्वतन्त्रकर्तृत्वम्। तस्या जडत्वात् परमात्माधीनत्वात्, चेतनाधिष्ठानं विना जडस्य प्रवृत्त्ययोगात्। तस्माद् मायायाः कल्पितत्वाद् अधिष्ठानातिरिक्तत्वाभावाद् ब्रह्मणः सत्तया सत्तावत्त्या परिणाम्युपादानत्वे तदाश्रयस्य ब्रह्मणो वितर्तोपादानत्वं न विरुद्धम्, मायाया अपि प्रपञ्चोपादानभूताया अधिष्ठानत्वाद् ब्रह्मणः। एवञ्चाभिन्न-निमित्तोपादानत्वं ब्रह्मणो दृष्टान्तेनापि श्रूयते—

यथोर्णनाभिः सृजते गृह्यते च,
यथा पृथिव्यामोषधयः सम्भवन्ति।
यथा सतः पुरुषात् केशलोमानि
तथाक्षरात् सम्भवतीह विश्वम्।। (मु.उ. १।१।७)

एवञ्चास्य ब्रह्मणो विवर्तोपादानत्वं सिद्धम्। तच्च विवर्तकारणाज्ञान-विषयत्वम्। यथा शुक्तिविषयकमज्ञानं शुक्त्यधिष्ठानकं तदनतिरिक्तसत्ताकं रजतरूपेण परिणमते तथा ब्रह्मविषयिका माया ब्रह्मातिरिक्तसत्ताका जगद्रूपेण परिणमते। यथा लूता तन्तुकार्यं प्रति स्वप्रधानतया निमित्तं स्वशरीरप्रधानतयोपादानं च भवति, तथा मायोपहितं चैतन्यं स्वप्रधानतया निमित्तं स्वशरीरप्रधानतयोपादानं च भवति, उपाध्युपहितयोरनतिरिक्तत्वात्।

**विवर्तवादे कार्यकारणयोस्सम्बन्धः**

नन्वेवं ब्रह्माधिष्ठितमायापरिणामभूतं जगद् ब्रह्मानतिरिक्तं स्यात्, यतो हि—मायायाः परिणामभूतमिदं जगन्मायिकं मायाऽभिन्नं, माया च ब्रह्मानतिरिक्ता तथा च जगतोऽपि ब्रह्मानतिरिक्तं सिद्धम्। अथ च कार्यकारणयोर्भेद एव युक्तः। अभेदे सति कारणत्वं न स्यात्। न ह्येकं स्वयं स्वं प्रति कारणं कार्यञ्च दृष्टम्, कारणस्य कार्याव्यवहितप्राक्क्षणवर्तित्वात्। व्यवहारादपि भेद एव तयोः सिद्ध्यतीति चेत्, अत्रोच्यते—कार्यकारणयोर्वा भेद उच्यते वेदान्तिभिः; अपि तु कार्यस्य कारणादनन्यत्वमुच्यते। अनन्यत्वं तदव्यतिरेकेणाभावः। एवञ्चोभयोर्भेद एव निषिध्यते। यथा रज्जुविवर्ताः सर्पादयो न रज्जुव्यतिरेकेणोपलभ्यन्ते। एवं ब्रह्मविवर्ता माया तत्कार्यसमूहा न तद्व्यतिरेकेण सन्ति। एवञ्च, कार्यकारणयोरभेदः सूचितः। अभेदस्तु कार्यस्य कारणेन सह तद्व्यतिरेकेणानुपलब्धत्वम्। उक्तञ्चा-रम्भाधिकरणे भामत्यां श्रीवाचस्पतिमिश्रेण—'तस्मात् कारणात् परमार्थतोऽनन्यत्वं व्यतिरेकेणाभावः कार्यस्यावगम्यते' इति भाष्यप्रतीकमादाय 'न खलु अनन्त्यत्व-मित्यभेदं ब्रूमः; किन्तु भेदं व्यासेधामः। ततश्च नाभेदाश्रयदोषप्रसङ्गः; किन्त्वभेदं व्यासेधद्भिर्वैशेषिकादिभिरस्मासु साहायकमेवाचरितम्' इति। अनेनेदमायाति अभेदमनुक्त्वा, भेदञ्च व्यासेधद्भिर्वेदान्तिभिः कार्यकारणयोराध्यासिकः सम्बन्धः स्वीक्रियत इति।

**विवर्तवादनिरासः**

ब्रह्मणो विवर्तभूतमिदं जगदिति सिद्धान्तो न युक्तः। यतो हि नित्यं शुद्धं बुद्धं मुक्तस्वभावं ब्रह्म, तस्माद् दृश्यमानमनित्यमशुद्धमबुद्धमयुक्तं जीवजाता-

कुलीभूतं जगत्कथं प्रादुर्भवेत्, तत्र तिरोभवेच्च, विरुद्धधर्मकयोर्भेदव्याप्तत्वात्। न हि चेतनाज्जडं जडाद्वा चेतनं प्रादुर्भूतं तिरोभूतं च दृष्टम्, व्यवस्थाविरोधात्। यथा कारणं तथोपादेयं भवेदिति नियमो दृश्यते लोके। न हि ब्रह्मणि दुःखमोहादिकं केनचिदपि वेदान्तवाक्येनावधारितम्, मोहदुःखतत्साधनात्मकञ्चेदं जगत् तदभिन्नतया सुखमात्रावलिप्तस्याऽऽनन्दस्वरूपस्य ब्रह्मणो दुःखमोहतत्साधनात्मकत्वमापद्येत। तथा सति 'हेयं दुःखमनागतमि'ति योगोपदेशमनुसृत्य ब्रह्म सर्वैर्मुमुक्षिभिर्दूरादेवानभिलषितं सदुपेक्षितं स्यात्, तदा किं मोक्षसाधनमवशिष्येत। यद्यत्रोच्येत न हि ब्रह्म सच्चिदानन्दं जगद्रूपेण परिणमते, किन्तु तदाश्रिता मायेति। मायाया अधिष्ठानत्वात्, तस्याश्च तदनतिरेकाद् ब्रह्मणो विवर्तत्वेन जगदुच्यत इति। तत्रापि ब्रूमः—तमोरूपा अविद्या प्रकाशरूपं ब्रह्म कथमावृणोति, न हि सहस्रवर्षपार्यन्तिकमपि तमस्तरणिं तनुरपि तनूकरोति किम्पुनरावृतिकरणम्। यदि चाविद्यया ब्रह्मणस्तिरोधानम्, तदा निर्विशेषप्रकाशैकरसता न घटेत। निर्विशेषप्रकाशैकरसं चेद् ब्रह्म, तदा तस्याविद्यया तिरोधानं न घटेत।

ननु न ब्रह्मस्वरूपतिरोभावः; किन्तु तत्प्रकाशः तिरोभाव इति चेत्, किमयं प्रकाशस्तदभिन्नो भिन्नो वा? प्रथमे ब्रह्मस्वरूपनाशः प्रसज्येत। यतः प्रकाशप्रतिरोधो द्विधा—उत्पत्स्यमानप्रकाशस्योत्पत्तौ प्रतिरोधः, सतः प्रकाशस्य विनिवर्तनं वा। सतो ब्रह्मणोऽनतिरिक्तप्रकाशप्रतिरोधेन निवृत्तिरूपेण भाव्यम्, तथा ब्रह्मणो नाश एव पर्यवसानमिति। न द्वितीयः, सविशेषत्वापत्तेरिति। किञ्च माया ब्रह्म सर्वात्मनाऽऽवृणोति एकदेशेन वा? नाद्यः, परिच्छिन्नाया मायाया अपरिच्छिन्नस्य ब्रह्मणोऽनावरकत्वात्। नापि द्वितीयः, तथा सति सावयवत्वेऽनित्यापत्तेरिति।

**विवर्तवादे कार्यकारणयोस्सम्बन्धनिरासः**

न च कारणे कार्यमपि अध्यस्तमपि किं न स्याद् विकारस्य वाचारम्भणत्वादिवेदान्तिसम्मतं कार्यकारणयोरध्याससम्बन्धोऽपि युक्तिसहः। तथा हि—कार्यस्याध्यस्तत्वे व्यवहारासम्भवात्, न हि अध्यस्तेन रजतादिना अलङ्कारादिः सम्भवति। न च व्यावहारिकमपि घटादिकार्यजातमध्यस्तमेव स्वस्मिन् कारणे, न च व्यवहारसम्भवः सर्वस्य व्यवहारस्याप्यध्यस्तत्वात्। अत एव मोक्षकाले सर्वस्य बाध इति वाच्यम्, तथा सति अध्यस्तस्य सर्वस्य कार्यस्य कारणेन सहाभेदो न स्यात्। न हि शुक्तौ भासमानस्य रजतस्य शुक्त्या सह अभेदो युज्यते। न वा अद्वैतमते ब्रह्मणि विवर्तितस्य प्रपञ्चस्य ब्रह्मणाऽभेदोऽङ्गीक्रियते। तस्मात् कारणे कार्याध्यासपक्षे न भेदः, अध्यस्तस्याभावाद् नाऽभेदस्तस्मादेवापि तु कश्चिदन्य एव सम्बन्धो मृग्यः कार्यकारणयोः।

**परिणामवादः**

'सतः सज्जायते' इति सांख्याः कपिलादयः। अस्यायमर्थः—सतो भावात्मकनित्यप्रकृतितः, सद् अव्यक्तावस्थामापन्नं कारणे विद्यमानमेव कार्यम्, जायते कारकव्यापारेणाभिव्यक्तं भवति। सांख्यमते सत्त्वरजस्तमोमय्या पुरुषसंयोग-माप्तया सुखदुःखमोहात्मिकया मूलप्रकृत्या महदाद्यारभ्य पञ्चमहाभूतपर्यन्तं व्यक्तमिदं कार्यजातं जगदाविर्भवति, न विवर्तते, न चोत्पद्यते। यथा कच्छपशरीरे विद्यमानान्येवाङ्गानि आविर्भवन्ति तथा तिरोभवन्ति, तथैव मूलप्रकृतिस्वरूपे कारणे विद्यमानमेव जगदाविर्भवति सर्गावस्थायाम्, प्रतिसर्गावस्थायाञ्च तत्रैव समवलीयते। अपि च यथा परिणतावस्थामापन्नं पयो दधि इति निगद्यते, तथैव सत्त्वरजस्तमसां साम्यावस्थारूपा मूलप्रकृतिरेव सत्त्वरजस्तमस्सु असाम्या-वस्थामापन्नेषु सत्सु महत्तत्त्वमिति कथ्यते। एवं सृष्टिरग्रेऽग्रे त्रयाणां गुणानां गौणप्रधानभावं प्राप्तानां सताम् अहङ्कारादिक्रमेण जायत इति। न चास्मिन् उत्पत्तेः प्राक् कार्यस्य कारणे विद्यमानत्वात् कारकव्यापारो व्यर्थतामेष्यतीति वाच्यम्, पृथुबुध्नोदरादिकार्याकारेण कारणं व्यवस्थापयतः कारकव्यापारस्यावैयर्थ्यात्।

**सांख्यनये कार्यकारणयोस्सम्बन्धः**

उत्पत्तेः पूर्वं सदेव कार्यं कारणादाविर्भवतीति सांख्यमतानुसारेण कार्यकारणयोरवस्थामात्रं भिद्यते, अतस्तयोस्तादात्म्यमेवोरीकर्त्तव्यम्। न हि सर्पन्ती गोधा अहिर्भवति; किन्तु गोधैव तथा नहि घटावस्थायां (पृथुबुध्नोदराकृतिं) प्राप्तं मृद्धेमत्वमाप्नोति; किन्तु मृदेव। सत्कार्यवादस्योपपत्तये कारिकेयमतीव व्युत्पादनकरी। सा च—

असदकरणादुपादानग्रहणात् सर्वसम्भवाभावात्।
शक्तस्य शक्यकरणात् कारणभावाच्च सत्कार्यम्।। (सां.का.९)

एते चावीतहेतवः। यद्यसत्क्रियते शशविषाणाद्यपि क्रियेत, न तु क्रियते, तस्मात्सदेव कार्यम्। यदि च तत्त्वादिषु पटादिकार्यं नास्ति, तदा पटाद्यर्थिनस्तन्त्वाद्युपादानं न गृह्णीयुः, तत्कार्यशून्यत्वाद्वीरणादिवत्। यदि चासन्नेव पटस्तन्तुभ्यो भवति, ततः सर्वं कार्यं भवेदसत्त्वाविशेषात्, न तु भवत्यतः सर्वसम्भवाभावान्निश्चीयते—यदेव यत्रास्ति, तदेव ततो भवतीति।

शक्तस्य च कर्तृत्वं सर्वैरेवेष्यते। न च शक्तिविकलं शक्तं युक्तम्। शक्तिञ्च न कार्यादन्यां पश्यामः। शक्यञ्च क्रियते तेन नासतः शक्यत्वं युक्तम्। किञ्च

यद्यस्य कारणम्, तत्ततो भवति। न चासति कार्येऽस्येदं कारणमित्युपपद्यते। तस्मात्सदेव कार्यमिति मन्तव्यम्।

**सांख्याभिमतसत्कार्यवादनिरासः**

जगतः कारणं प्रधानमिति सांख्यानां मतं न युक्तमित्यतिविस्तरेणोक्तं भगवत्पादेन शङ्कराचार्येण ब्रह्मसूत्रशाङ्करभाष्ये ईक्षतेर्नाशब्दमिति (ब्र.सू. १।१।५) सूत्रादारब्धे ईक्षत्यधिकरणे, तत एव जिज्ञासुभिर्द्रष्टव्यम्, विषयविस्तरभयान्नेह प्रतन्यते।

यत्तावत्सत्कार्यवादोपपत्तये कारिकायां हेतव उपन्यस्तास्त अत्र विशीर्यन्ते। तथा हि—यत्तावदसदकरणादित्युक्तं, तन्न, प्रतिबन्धासिद्धेः। यदि नाम शशविषाणाद्यसत् क्रियमाणं न दृष्टम्, पटाद्यप्यसन्न क्रियत इति कुतः? यथैव हि शशविषाणादीनामसत्त्वमक्रियमाणत्वं सर्वलोकाविसंवादिना प्रत्यक्षादिना प्रमाणेन सिद्धम्, तथैव पटादीनां प्रागसत्त्वं क्रियमाणत्वञ्च सिद्धं किं नेष्यते? किं चासदकरणादसत्कार्यं नेष्टम्? तत्राप्येवं शक्यते वक्तुम्—यदि सत् क्रियते पुरुषाद्यपि क्रियेत? न तु क्रियते। तस्मादसत्कार्यमिति।

यत्तूक्तमुपादानग्रहणादिति, तदप्ययुक्तम्, निरुद्धत्वात्। यदि हि प्रागप्यस्ति कार्यम्, ततस्तदर्थं तत्कारणेषु न कश्चित्प्रवर्तेत, वैयर्थ्यात्। नहि लोके यस्य यदस्ति, स तदर्थं यतत इति। निष्पन्नस्य निष्पादनासम्भवः, तत्रानर्थको हेतुः स्यात्। यद्यसन्नेव पटस्तन्तुभिः क्रियते, वीरणादिरपि किं किं न क्रियत इति चेत्, न, वीरणादीनां तत्रासामर्थ्यात्। सामर्थ्यमेव कारणमिति चेत्, न, शक्तेः कारणधर्मत्वात्ततः पश्चाद्भवत्कार्यं कथं तदात्मकं स्यात्? योग्यतां विज्ञाय च प्रतिनियतकारणोपादानम्, न तु कार्यदर्शनान्न ह्यनिष्पन्नः पटो द्रष्टुं शक्यते। किं च सर्वं सर्वात्मकमित्येवंवादिनां वीरणादिष्वपि पटोऽस्तीति किं न तैः पटः क्रियते? कस्माच्च न तानि पटार्थिभिरुपादीयन्त इति। एतेन सर्वसम्भवाभावोऽपि प्रत्युक्तः। यथोक्तम्—शक्यं च क्रियते नासत्कर्त्तुं शक्यमिति, सत्कथं शक्यम्? न हि प्रधानं पुरुषो वा केनचित्कर्त्तुं शक्यते।

यच्चोक्तम्—कारणभावादिति, तदपि विरुद्धत्वादयुक्तम्। यदि हि प्रागप्यस्ति कार्यम्, तदा कारणेन किं कर्त्तव्यम्? अकिञ्चित्करं च कथं कारणम्? कार्यस्याभिव्यक्तिः कारणेन क्रियत इति चेत्, सा यद्यसती क्रियते ततोऽसत्कार्यं स्यात्। सती चेदभिव्यक्तिः, तदवस्थं कारणानर्थक्यम्। अभिव्यक्तेरप्यभिव्यक्तिः,

क्रियत इति चेत्, सापि सती स्यादसती वेत्यपर्यवसानम्। सर्वत्र सत्त्वाभ्युपगमे सर्वं सर्वदैवाभिव्यक्तमित्यानर्थक्यमेव कारणानाम्। यत्किञ्चित्प्रयोजनं कारकाणामुच्यते, तत्सर्वं सर्वाकारेण प्रागेवास्तीत्यानर्थक्यमेव कारकाणाम्। येन वाकारेण प्रागस्ति स तस्याकारः प्रागसन्नेव पश्चाद्धेतुभ्यो भवतीति कथन्नासत्कार्यम्।

**कार्यकारणयोस्तादात्म्यनिरासः**

न च कार्यकारणयोस्तादात्म्यसम्बन्धो युक्तः। स चासौ आत्मा तदात्मा तस्य भावस्तादात्म्यम्। यदि कार्यकारणयोरभेदश्चेद् घटस्येव रूपस्यापि स्पर्शेन्द्रिय-ग्राह्यत्वापत्तिः, कार्यकारणयोस्तुल्ययोगक्षेमतापत्तेः। स्पर्शादेश्च चक्षुर्ग्राह्यत्वापत्तिः स्यात्। किञ्च कपालघटयोरभेदे कारकव्यापारवैयर्थ्यं पूर्वमुक्तमस्त्येव। न हि कारणादन्यत् कार्यं किञ्चिदुत्पद्यत इति कारकादिव्यापारवैयर्थ्यं स्पष्टमेव। तन्तुभिरपि पटवदाच्छादनादिव्यवहाराः प्रसज्येरन्।

किञ्च, कार्यकारणयोरभेदे वस्तुनो नित्यत्वापत्तिरपि स्यात्। कारणं ह्येतत्पक्षे अविकृतमेव कार्यरूपतां भजते। तथा चाभिलापान्तरमात्रं स्यात्, न तु तत्त्वतो स्वरूपतो वा उभयोर्भेदः स्यात्। तस्मात्कार्यकारणयोरभेद इति न युक्तम्।

ननु नात्यन्ताभेद एव तादात्म्यं येनोक्तदोषाः स्युः, अपि तु भेदघटिताभेद एव तस्मात् कार्यकारणयोस्तत्त्वतोऽभेदेऽपि स्वरूपतो भेदोऽस्त्येव हेमात्मना सुवर्णकुण्डलयोरभेदेऽपि हेमपिण्डाकृत्या कुण्डलाकृत्या च भेदोऽनुभूयत एवेति चेत्, न भेदाभेदयोरेकत्र धर्मिणि सत्ययोः सहावस्थानाभावात्। न चाभेदस्तात्त्विको भेदोऽध्यस्त इति वाच्यम्, भेदस्यातात्त्विकत्वे वाङ्मात्रेण भेदः स्यात्, वस्तुतोऽभेदः स्यात्, तथा च पूर्वोक्त एव दोषः प्रसज्येत। किञ्च, कः पुनरयं भेदो नाम, यः सहाभेदेनैकत्र भवेत्। परस्पराभाव इति चेत्, किमयं कार्यकारणयोर्घटमृदोरस्ति न वा नो चेत्, एकत्वमेवास्ति, न च भेदः। अस्ति चेद्भेद एव नाभेदः। अपि च घटस्य मृदोऽभेदे यथा मृदात्मना घटशरावादयो न भिद्यन्ते, एवं घटात्मनापि न भिद्येरन्, घटस्य मृदोऽभेदात्। तथा मृदेव वस्तुसन्न घटादयः, भेदस्याप्रतिभासनात्। अथ मृदात्मनैवाभेदो न घटाद्यात्मना, तेन तु भेद एव शरावादेः। यदि मृदोऽभिन्नो घटस्तदा कथमयं शरावादिषु नानुवर्तते। नानुवर्तते चेत्कथं मृदोऽभिन्नः? ये हि यस्मिन्ननुवर्तमाने व्यावर्तन्ते, ते ततो भिन्ना एव, यथा सूत्रात्कुसुमभेदाः। नानुवर्तन्ते चानुवर्तमानेऽपि मृदात्मकत्वे घटादयस्तस्मात्तेऽपि मृदो भिन्ना एवेति। तथा च न कार्यं सदुत्पद्यते।

**नैयायिकानामसत्कार्यवादः**

नैयायिकानां वैशेषिकानाञ्च मते सतो नित्यपरमाणुतः असदनित्यं द्व्यणुकादिकं कार्यजातं जायते। परमाणूनामकारणत्वे तु जगत आकस्मिकत्वापत्तिः स्यादिति भावः। नैयायिकवैशेषिकाणां मते परमाणुतः कार्यद्रव्यस्य द्रव्यतश्च कार्यगुणादीनामुत्पत्तिः स्वीक्रियेत, स च वाद इत्थं समुत्तिष्ठते—घटपटादीनि कार्याणि द्रव्याणि सावयवानि स्वसमवायिकारणैरसमवायिकारणात्मक-संयोगसचिवैः कपालतन्त्वादिभिर्द्रव्यैरारभ्यमाणानि समनुभूतानि, तथा च यत्सावयवं तदसमवायि-कारणसंयोगसहभूतसमवायिकारणद्रव्यारब्धमिति सामान्यतस्तावद्व्याप्तिरवगम्यते। एषां मते सर्गादौ प्राणिनामदृष्टापेक्षया परमाणुषु कर्म उत्पद्यते, येन कर्मणा तेषां संयोगाद् द्व्यणुकाद्युत्पत्तिस्तत्क्रमेणैव महाभूतानामुत्पत्तिरिति। परमाणुगतेभ्यस्तु गुणेभ्यो गन्धरूपरसादिभ्यो द्व्यणुकादिकार्यद्रव्यगतानि गन्धरूपरसादीनि सम्भवन्ति। अतः केषाञ्चित्पदार्थानां नित्यत्वम्, केषाञ्चिच्चानित्यत्वम्, तत्र नित्यानां सर्वदा स्थायित्वाद् अनित्यानाञ्च नित्यपरमाण्वादिभ्य एवोत्पत्तिस्वीकारान्ना-स्त्यन्यस्यापेक्षा।

नैयायिकादीनां मते नित्यज्ञानेच्छाकृतिमानीश्वरः जीवानामदृष्टः सहकारिकारणेन परमाणुभ्यो द्व्यणुकादीन् पञ्चमहाभूतपर्यन्तान् पदार्थान् स्थावरजङ्गमानुत्पादयति। यथोक्तमाचार्येण विश्वनाथेन—यथा घटादिकार्यं कर्तृजन्यं तथा क्षित्यङ्कुरादिकमपि। न च तत्कर्तृत्वमस्मदादीनां सम्भवतीत्यतस्तत्कर्तृ-त्वेनेश्वरसिद्धिरिति (न्या.सि.मुक्ता. १ कारिका)।

**नैयायिकाकानामसत्कार्यवादनिरासः**

सत् परमाण्वादिभ्यो असद् द्व्यणुकादारभ्य महाभूतपर्यन्तं जगदिदं जायत इति कणभक्षाक्षपादानां मतमपि न युक्तम्। तथा हि—नैयायिकादिभिर्विभक्तानां परमाणूनां संयोगे जीवानामदृष्टः सहकारिकारणत्वेन स्वीक्रियते; किन्तु एतन्न घटते, अदृष्टस्य परमाणावभावात्, कार्यकारणभावस्य च सामानाधिकरण्येन नियमात्। अदृष्टश्च प्रतिजीवं भिन्नं भिन्नं प्रत्यात्मगतम् आत्माश्रितमित्यर्थः, कार्यञ्च परमाणुसमवेतं परमाण्वाश्रितमिति व्यधिकरणत्वान्न द्व्यणुकादि-कार्योत्पत्तिरिति।

अथ परमाणोः परमाण्वन्तरेण संयोगो यो भवति, तत्रापीदं विचार्यते स चैकदेशेन स्यात्? सर्वावच्छेदेन वा? यद्यभ्युपगम्येत सर्वावच्छेदेनेति। परमाणुना

सह परमाण्वन्तरस्य समानाभिहारात् परमाण्वपेक्षया तदधिकपरिमाणयुतं द्व्यणुकं न स्यात्, तथा च संयोगे सत्यपि सर्वे परमाणव एव स्युर्न तु द्व्यणुकादिक्रमेण घटादिकं महद्द्रव्यम्, तथा सति जगदेव न जायेत। यदि चैकदेशेन भवति संयोगः, तदैकदेशस्यावयवस्वरूपत्वात् सावयवत्वप्रसङ्गः परमाणोः प्रदेशवद्-द्रव्यस्य प्रदेशवता द्रव्येण सह संयोगस्य दृष्टत्वात् परमाणवः प्रदेशवन्तः स्युरिति ते मतहानिः स्यात्। यदि च प्रदेशाः कल्पिताः, न तु वास्तविकास्तदा प्रदेशाभावेन संयोगाभावात्, संयोगस्यासमवायिकारणस्य चासत्त्वेन कार्यद्रव्यस्य नोत्पत्तिः स्यात्।

**नैयायिकाभिमतसमवायसम्बन्धनिरासः**

यथा नैयायिकैरुररीक्रियते यत्कारणेन तन्त्वादिना समवायेन पटादिकार्य-मुत्पद्यत इति, तदपि न युक्तिमार्गागतम्। तथा हि—सम्बन्धः सत्त्ववतोर्द्रव्ययोर्दृष्टः, यथा घटपटयोरेकक्षणावच्छेदेन संयोग इति। अत्र तु परमाणुकाले द्व्यणुकमसत्, द्व्यणुककाले च द्व्यणुकातिरिक्तं परमाणुर्न, इति कथं परमाणुद्व्यणुकयोरेकक्षणा-वच्छिन्नः समवायः संसर्गतयावगतः स्यात्। किञ्च समवायसम्बन्धस्यापि दुर्निरूप्यत्वान्न तेन सम्बन्धेन कार्यावस्थानं सम्भवति। समवायेन कार्यम्प्रति तादात्म्येन द्रव्यं कारणमित्यस्ति च नैयायिकाभ्युपगमः। तथा हि—समवायः स्वयमसम्बद्ध एव विशिष्टव्यवहारो जनयति सम्बद्धो वा। नाद्यः, अतिप्रसङ्गात्। स्वरूपेणायं यथा घटं विशिनष्टि तथा सर्वं विशिंष्यात्। नियामकस्य कस्यचिदभावात्। न द्वितीयः, सम्बन्धान्तरेण वा स्वात्मकेन वा सम्बद्धः। आद्ये तदपि सम्बन्धान्तरं सम्बन्धान्तरेण सम्बद्धमानमनवस्थामापादयति। अप्रामाणि-कानन्तकल्पनमनवस्था। यदि स्वात्मकेन सम्बन्धेन सम्बन्धान्तरं सम्बद्धं विशिनष्टि चेत्, कोऽपराधः प्रथमस्य समवायस्य, स एव हि कुतो न सम्बद्धः स्वात्मकेन सम्बन्धेन। अस्त्वेवमिति चेत्, एवं सत्युक्तयुक्त्या सत्ताद्येव कुतो न स्वात्मकेन सम्बन्धेन तादात्म्यकेन विशिष्टव्यवहारं जनयेदिति गतं समवायेन।

ईश्वराक्षेपः—यदपि नैयायिकादीनां मते द्व्यणुकादीनामारम्भकत्वमीश्व-राधीनमिति, तदपि न युक्तिसहम्, ईश्वरे प्रमाणाभावात्। न च जगत्कर्तृकत्वादि-नानुमीयत इति वाच्यम्, सर्वस्यापि कार्यस्य चेतनमनपेक्ष्य प्रतीत्यसमुत्पन्नत्वात्, अनुमानस्याप्रयोजकत्वात्। न च वेदप्रामाण्यादीश्वरोऽस्तीति गम्यते, ईश्वरकृतत्वाद् वेदप्रामाण्यं तस्माच्चेश्वरसिद्धिरित्यन्योन्याश्रयात्, वेदस्य प्रामाण्यानङ्गीकाराच्च। न चापौरुषेयवाक्यं वेदः, स च सकलपुम्दोषरहितत्वात् प्रामाण्यं भजत इति वाच्यम्, वेदानामपौरुषेयत्वाभावात्। वेदवाक्यं पौरुषेयं वाक्यत्वात् कालिदासादिवाक्यवद्

इति प्रयोगात्, तस्य स्वार्थपरायणैः कल्पितत्वात्। किञ्च, ईश्वरस्य जगत्कर्तृत्वे तस्य वैषम्यनैर्घृण्यदोषः स्यादेव। अपि च स्वतो वा तस्य जगन्निर्माणे प्रयोजनाभावान्न परमाणुयोजनरूपं कर्म ईश्वरे सम्भवति। न च स्वतः परमाणुषु तत्सम्भवति, अचेतनत्वात्। तस्मादीश्वरेण परमाणुभिरवयवी कश्चिन्नारभ्यते किन्तु वक्तव्यश्चेत्, एवं वक्तव्यं परमाणव एव संहताः सन्तः कार्यजनकाः। न च तैरपि कार्येण कश्चित् सम्बन्धः सम्भवतीति ज्ञेयम्।

**सौगतानां प्रतीत्यसमुत्पादः**

शून्यतैव जगतः परमार्थता इति वदतां बौद्धानां मते ''असतः सज्जायते'' अर्थाद् अभावाद् भावो जायत इत्यर्थः। विनष्टाद्धि किल बीजादङ्कुर उत्पद्यते, नष्टाच्च दुग्धाद्दधि, विनष्टाच्च मृत्पिण्डाद् घट इत्येवमभावग्रस्तेभ्यो बीजादिभ्योऽङ्कुराद्युत्पत्तिदर्शनात्, सर्वे कार्यरूपा भावा अभावकारणकाः कार्यत्वाद् बीजनाशोत्तरोत्पन्नाङ्कुरादिवदित्यनुमीयते।

सौगता हि मन्यन्ते जगतः कर्त्ता न कोऽपि चेतनो न वाऽचेतन;, पूर्वोक्तरीत्या निरस्तत्वात्। न च स्वत एव भावा उत्पद्यन्ते, प्रयोजनाभावात्, उत्पादवैयर्थ्यात्, अतिप्रसङ्गाच्च। स्वतः सर्वस्य सर्वोत्पत्तिप्रसङ्गः स्यात्। न च परत एवोत्पादः सम्भवति, परस्य चेतनस्य विषयस्य विषयदृष्टिप्रयोजनाभावात्। तथा हि भोक्ता चेतनः कर्त्ता चेत् स्वानुकूलमेव सुखमयीं सृष्टिं कुर्यात्। भोक्तृणाञ्चानेकत्वाद् अविशेषात् सर्वेषां कर्तृत्वात् परस्परविसंवादे सृष्टिरेव न भवेत्। अभोक्तुश्चेतनस्य कर्तृत्वे प्रयोजनाभावः, वैषम्यादिदोषप्रसङ्गाच्च, परस्याचेतनस्य स्वतः कर्तृत्वानुपपत्तेः। एवं च परस्मिन् कार्यस्वभावाभावादेव न तत उत्पत्तिः। न च द्वाभ्यामेव स्वपराभ्यां हेतुभ्यामुत्पद्यत इति साम्प्रतम्। पृथग् हेतुत्वासम्भवाद् मिलितहेतोरपि नास्ति सम्भवः। प्रत्येकमनुपलब्धस्य समुदायेऽप्यनुपलम्भात्। न चाकारणमेवोत्पद्यन्ते भावा इति युक्तम्, अतिप्रसङ्गात् सर्वस्य सर्वत्रोत्पत्तिप्रसङ्गात्। अत एवोक्तं नागार्जुनेन—

न स्वतो नापि परतो न द्वाभ्यां नाप्यहेतुतः ।
उत्पन्नाः जातु विद्यन्ते भावाः क्वचन केचन ।। (मा.का. ३)

अतो नास्ति भावानामुत्पाद एवंविधः। यथोक्तं शालिस्तम्बसूत्रेऽपि—''स चायं बीजहेतुकोऽङ्कुरोत्पद्यमानो न स्वयं कृतो न परकृतः, नोभयकृतः नाप्यहेतुसमुत्पन्नो नेश्वरकालाणुप्रकृतिस्वभावसम्भूत'' इति। तथा—

बीजस्य सतो यथाङ्कुरो न च यो बीजु स चैव अङ्कुरः।
न च अन्यु ततो न चैव तदेवमनुच्छेद अशाश्वतधर्मता।।
(ललितवि. १३।१०२)

माध्यमिककारिकायामप्युक्तं नागार्जुनेन—

प्रतीत्य यद् यद् भवति न हि तावत्तदेव तत्।
न चान्यदपि तत्तस्मान्नोच्छिन्नं नापि शाश्वतम्।। (म.शा.१८।७)

एवं भावानामुत्पादो न सम्भवति। उत्पादप्रतिषेधाच्च निरोधादिप्रतिषेधः। उत्पन्नस्य उपलब्धस्य च निरोधादयः सम्भवन्ति। यथोक्तं नागार्जुनेन मङ्गलश्लोकेषु—

अनिरोधमनुत्पादमनुच्छेदमशाश्वतम्।
अनेकार्थमनानार्थमनागममनिर्गमम्।।१।।
यः प्रतीत्यसमुत्पादं प्रपञ्चोपशमं शिवम्।
देशयामास सम्बुद्धस्तं वन्दे वदतां वरम्।।२।।

तत्र विरोधो नाम क्षणभङ्गः, उत्पादनमुत्पादः, आत्मभावोन्मज्जनम्, उच्छित्तिरुच्छेदः प्रबन्धविच्छेदः शाश्वतो नित्यः सर्वकालावस्थितः। एकार्थोऽभिन्नार्थः, न पृथगित्यर्थः। नानार्थो भिन्नार्थः। आगतिरागमो विप्रकृष्टदेशात् सन्निकृष्टदेशगमनम्। निर्गतिर्गमनम्, सन्निकृष्टदेशाद् विप्रकृष्टदेशगमनम्। एवं निरोधादिरहितः प्रतीत्यसमुत्पादः शून्यतालक्षणः। 'यः प्रतीत्यसमुत्पादः शून्यता तां प्रचक्षते' इत्युक्तेः। सुगतसमये माध्यमिकशास्त्रे प्रतीत्यसमुत्पादः शून्यतेति वर्णितम्। स एव प्रतीत्यसमुत्पादः कार्यकारणः स्वीक्रियत इति।

**प्रतीत्यसमुत्पादशब्दार्थः**

प्राप्त्यर्थः प्रतिरुपसर्गः, एतिर्गत्यर्थो धातुः, तस्मात् ल्यपप्रत्ययः। प्रतीत्य-शब्दो ल्यबन्तः प्राप्तौ अपेक्षायां वा वर्तते। समुत्पूर्वं पद्धातोर्घञि भावे समुत्पादशब्दः प्रादुर्भावे वर्तते। ततश्च हेतुप्रत्ययापेक्षो भावानामुत्पादः प्रतीत्यसमुत्पादपदार्थः, अथवा समुत्पद्यत इति समुत्पादः कर्मणि घञ्।

अन्ये त्वाहुः—इतिर्गमनं विनाशः, इतौ साधुस्तत्र साधुरिति पाणिनिसूत्रेण इतिशब्दाद् यत्प्रत्यये इत्यः तद्धितान्तो विनाश्यार्थः। प्रतिशब्दो वीप्सार्थः। तथा च

इत्यम् इत्यम् प्रतीति प्रतीत्यं वीप्सायामव्ययीभावः। प्रतीत्यं समुत्पादः प्रतीत्यसमुत्पाद इति। तथा च इत्यम् इत्यम्प्रति उत्पाद इत्यर्थः। एवञ्च प्रतिशब्दस्य इत्येन योगः, न तु समुत्पादेन। एवम् इत्यशब्दोऽपि प्रतिना योगमनुभूय तेन सह समुत्पादेन युज्यते। न तु इत्यस्योत्पाद इत्योत्पाद इति कृत्वा पुनः प्रतिना योगः, तथा सति इत्येन वीप्सायोगो न स्यात्। वीप्सापक्षे अनेकहेतुव्याप्तिः कार्यस्यापेक्षते। प्रतिगतः प्रतिरुद्धो वा इत्योत्पाद इत्यादिरर्थो नोपयुज्यते। आचार्यचन्द्रकीर्तिरेतन्न मन्यते। तथा हि ''प्रतीत्यसमुत्पादो वा भिक्षवो देशयामि'' ''यः प्रतीत्यसमुत्पादं पश्यति स धर्मं पश्यति'' इत्यादौ तथा व्युत्पत्तिसम्भवेऽपि चक्षुः प्रतीत्यरूपाणि चोत्पद्यते चक्षुर्विज्ञानमित्यादौ तथासम्भवात्। अत्र वीप्सार्थस्यासम्भवात्। एकचक्षुः प्रतीत्यैकविज्ञानोत्पादाद् वीप्सार्थाभावात्। प्रतीत्यशब्दस्य प्राप्यार्थसद्भावे तु हेतुमेकं प्रतीत्योत्पत्तावपि तत्सम्भवात्।

एवञ्च हेतुं प्राप्य हेतुसमुदायरूपप्रत्ययं वा प्राप्य भावानामुत्पत्तिरिति उभयत्रापि प्राप्यार्थकप्रतीत्यशब्दस्यार्थसम्भवात्, ल्यबन्तप्रतीत्यशब्द एव युक्तः। ल्यबन्तेन समासो वा भवतु। आचार्यनागार्जुनेनापि प्रतीत्य इत्यस्य ल्यबन्तार्थ एव प्राप्य इत्यर्थः स्वीकृतः। यथोक्तम्—''तत् तत् प्राप्य यदुत्पन्नं नोत्पन्नं तत् स्वभावतः''। न चारूपिणां विज्ञानानां चक्षुरादिभिः कथं प्राप्तिः, रूपिणामेव प्राप्तेर्दर्शनादिति वाच्यम्, प्राप्तेरत्रापेक्षार्थत्वात्। तथा प्राप्य इत्यस्य अपेक्ष्येत्यर्थः, न संयुज्येत्यर्थः। एवञ्च हेतुं प्राप्य अपेक्ष्य समुत्पादः, प्रत्ययं वा प्राप्य अपेक्ष्य समुत्पादः प्रतीत्यसमुत्पाद इति युक्ततरम्। अस्मिन्नेवार्थे इदमपि समाहितं भवति— 'अस्मिन् सति इदं भवति, अस्योत्पादादिदमुत्पद्यते, तत् प्रतीत्यसमुत्पादः' इति। यथा ह्रस्वं प्राप्य प्रतीत्य अपेक्ष्य दीर्घो भवतीति। एवं हेतुप्रत्ययापेक्षं भावानां प्रादुर्भावः सौगतसमये स्वीकृतः। तस्माद्भावानां विषमहेत्वहेतुसम्भूतं स्वपरोभयकृतत्वं वा प्रतिषिद्धं भवति।

**प्रतीत्यसमुत्पादव्याख्यानम्**

यदुक्तं हेतुप्रत्ययं प्राप्य अपेक्ष्य भावाः प्रादुर्भवन्तीति तद् व्याख्यायते— हेतुः कारणम्। प्रत्ययश्च हेतुसमुदायः। यथोक्तम्—

चत्वारः प्रत्यया हेतुश्चालम्बनमनन्तरम्।
तथैवाधिपतेयं च प्रत्ययो नास्ति पञ्चमः ।। (मा.का.१।४)

तत्र निर्वर्तको हेतुः। यो हि यस्य निर्वर्तको बीजभावेनावस्थितः, स तस्य हेतुप्रत्यय उत्पद्यमानो धर्मः, येनालम्बनेनोत्पद्यते स तस्यालम्बनप्रत्ययः। यथा रूपं

चक्षुर्विज्ञानस्य। कारणस्यानन्तरो निरोधः कार्यस्योत्पत्तिप्रत्ययः। तद् यदा बीजस्यानन्तरो निरोधः कार्यस्योत्पत्तिप्रत्ययः। तद् यथा बीजस्यानन्तरो निरोधः अङ्कुरस्योत्पादप्रत्ययः। यस्मिन् सति यद्भवति तत्तस्याधिपतिप्रत्ययः। यथा चक्षुर्विज्ञानस्याधिपतिप्रत्ययः। एते चत्वारः प्रत्ययाः, तान् प्रतीत्यभावः प्रादुर्भावः।

संक्षेपतो हि प्रतीत्यसमुत्पाद उक्तो भगवता तथागतेन—"उत्पादाद्वा तथागतानामनुत्पादाद्वा स्थितैषां धर्माणां धर्मता। धर्मस्थितता धर्मनियामकता प्रतीत्यसमुत्पादानुलोमता"। अस्यायमर्थः—तथागतानां बुद्धानां मते धर्माणां कार्याणां कारणानाञ्च या धर्मता कार्यकारणभावरूपा एषा उत्पादादनुत्पादात् स्थिता। धत्ते इति धर्मः कारणम्। ध्रियत इति धर्मः कारणम्। यस्मिन् सति यदुत्पद्यते असति नोत्पद्यते तत्तस्य कारणं कार्यञ्च। उत्पादानुत्पादावन्वयव्यतिरेकौ।

धर्मस्थितता नाम धर्मनियामकता। धर्मस्य हि कार्यस्य कारणादनतिप्रसङ्गेन कालविशेषे स्थितिर्भवतीति स्वार्थिकस्तल्प्रत्ययः। सा च धर्मनियामकता, धर्मता प्रतीत्यसमुत्पादानुलोमतारूपा। कारणे सति तत्प्रतीत्य प्राप्य समुत्पादानु-लोमताऽनुसारिता या सैव धर्मता। सा चोत्पादानुत्पादात्मा धर्माणां स्थिता। धर्मता कार्यकारणभावः। धर्मः कारणं कार्यञ्च।

अयं प्रतीत्यसमुत्पादो द्वाभ्यां कारणाभ्यां भवति—हेतूपनिबन्धतः, प्रत्ययोपनिबन्धतश्च। हेतोरेकस्य कार्येणोपनिबन्धतः। प्रत्ययानां मिलितानां नानाकारणानां कार्येणोपनिबन्धतः। हेतूपनिबन्ध एकैककारणसम्बन्धः। प्रत्ययोपनिबन्धः कालसमुदायसम्बन्धः। स पुनः प्रतीत्यसमुत्पादो द्विविधः—बाह्यः, आध्यात्मिकश्च।

तत्र बाह्यकार्ये हेतूपनिबन्धस्योदाहरणं बीजादिफलपर्यन्तम्। प्रत्ययोप-निबन्धस्योदाहरणं बीजादङ्कुरजनने महाभूतादिधातूनां समवायः। आध्यात्मिककार्ये हेतूपनिबन्धस्योदाहरणमविद्यादिदौर्मनस्यान्तम्। प्रत्ययोपनिबन्धस्योदाहरणं पञ्चभूतान्यहङ्कारप्रत्ययरूपो विज्ञानधातुश्चेति षण्णां धातूनां समवायः।

अत्रोदाहरणानि विस्तरेण प्रस्तूयन्ते। तथा हि—बाह्यस्य प्रतीत्यसमुत्पादस्य हेतूपनिबन्धः—यदिदं बीजादङ्कुरोऽङ्कुरात्पत्रं पत्रात्काण्डं काण्डान्नालो नालाद् गर्भो गर्भाच्छुक्रः शुक्रात्पुष्पं पुष्पात्फलम्। असति बीजे नाङ्कुरमेवमसति अङ्कुरे पत्रं न भवति यावदसति पुष्पे फलं न भवति। सति तु बीजेऽङ्कुरो भवति यावत् पुष्पे सति फलं भवति। एवं बीजाङ्कुरणें कार्यकारणभाव उत्पादानुत्पादाभ्यामन्वय-

व्यतिरेकाभ्यां निर्धार्यते। तत्र बीजस्य नैव भवति ज्ञानमहमङ्कुरं निर्वर्तयामीति। अङ्कुरस्यापि नैव भवति ज्ञानमहं बीजान्निवर्तित इति। एवं फलपर्यन्तं बोध्यम्। तस्मादसत्यपि चैतन्ये बीजादीनामसत्यपि चान्यस्मिन् अधिष्ठातरि उक्तरूपेण कार्यकारणभावो दृश्यते। इति बाह्ये हेतूपनिबन्धः प्रतीत्यसमुत्पादः। बाह्यस्य प्रत्ययोपनिबन्धः प्रतीत्यसमुत्पादस्योच्यते। प्रत्ययो हेतूनां समवायः। हेतुं हेतुं प्रत्ययन्ते हेत्वन्तराणि इति तेषामयमानानां हेतूनां समवायः प्रत्ययः।

यथा षण्णां धातूनां समवायाद् बीजहेतुरङ्कुरो जायते। तत्र च पृथिवी धातुर्बीजस्य सङ्ग्रहकृत्यं करोति, यतोऽङ्कुरः कठिनो भवति। अब्धातुबीजं स्नेहयति; तेजोधातुर्बीजं परिपाचयति; आकाशधातुर्बीजस्यानावरणकृत्यं करोति, ऋतुरपि बीजस्य परिणामं करोति। तदेषामविकलानां धातूनां समवाये बीजे रोहति अङ्कुरो नान्यथा। तत्र पृथिव्यादिधातूनां नैव भवति ज्ञानमस्माभिर्बीजस्य सङ्ग्रहादिकृत्यं निर्वर्त्यत इति। एवमङ्कुरस्यापि नैव भवति अहमेभिः धातुभिर्निर्वर्तित इति। **इति प्रत्ययोपनिबन्धः।**

एवमाध्यात्मिकः प्रतीत्यसमुत्पादोऽपि द्वाभ्यां हेतुप्रत्ययोपनिबन्धाभ्यां भवति। तत्रास्याध्यात्मिकस्य हेतूपनिबन्धो यथा—अविद्यातः संस्कारः संस्काराद् विज्ञानम्, एवं दौर्मनस्यानां बोध्यम्। अविद्यादयः सन्ति—अविद्या, संस्कारविज्ञानम्, नामरूपम्, षडायतनम्, स्पर्शः, वेदना, तृष्णा, उपादानम्, भवः, जातिः, जरा, मरणम्, शोकः, परिदेवः, दुःखं, दौर्मनस्यमिति। एवमविद्या चेन्नाभविष्यद् नैव संस्कारा अजनिष्यन्त। तत्राविद्याया नैव भवति अहं संस्कारं निर्वर्तयामि। संस्कारस्यापि नैव भवति अहमविद्यया निर्वृत्त इति। एवमग्रेऽपि बोध्यम्। तथा सत्सु अविद्यादिषु स्वयमचेतनेषु चेतनान्तरानधिष्ठितेष्वपि संस्कारादीनामुत्पत्तिः। बीजादित इवाङ्कुरादीनाम्। इदं प्रतीत्य प्राप्येदमुत्पद्यत इत्येतावन्मात्रस्य दृष्टत्वात्। चेतनाधिष्ठानस्यानुपलब्धेरित्याध्यात्मिकस्य प्रतीत्यसमुत्पादस्य हेतूपनिबन्धः।

तस्य प्रत्ययोपनिबन्ध उच्यते—पृथिव्यादिपञ्चभूतविज्ञानधातूनां षण्णां समवायाद् भवति कायः। तत्र कायस्य पृथिवी काठिन्यं निर्वर्तयति। अब्धातुः स्नेहयति कायम्। तेजोधातुः कायस्याशितपीतं परिपाचयति। वायुस्तस्य श्वासादिकार्यं करोति। आकाशमस्यान्तः सुषिरभावं करोति। विज्ञानधातुरालय-विज्ञानं नामरूपादि अभिनिर्वर्तयति। विज्ञानधातुश्चायं नामरूपाङ्कुरं पञ्चविज्ञान-कार्यसंयुक्तं सास्रवं च मनोविज्ञानं निर्वर्तयति आलयविज्ञानरूपः। नाम देवदत्तादि-रूपं शौक्ल्यादि तस्याश्रयः शरीरं नामरूपशब्देनोच्यते। तस्य नामरूपात्मकस्य

शरीरस्य सूक्ष्मावस्था कललबुद्बुदादिकाक्रान्ता नामरूपम्, स एवाङ्कुरः। शब्दादिविषयकानि पञ्चविज्ञानानि कार्याणि, तैः संयुक्तमङ्कुरं योऽभिनिर्वर्तयति तथा आस्रवति अनुगच्छति कर्त्तारमित्यास्रवः कर्म तत्सहितं समनन्तरप्रत्ययरूप-मनोविज्ञानं योऽभिनिर्वर्तयति स विज्ञानधातुरिति। अयं भावः—विज्ञानधातुः, पञ्चविज्ञानयुक्तं नामरूपं कर्मसहितं मनोविज्ञानञ्चोत्पादयति। एवं यदा आध्यात्मिकाः पृथिव्यादिधातवो भवन्त्यविकलास्तदा कार्यस्योत्पत्तिर्नान्यथा। तत्र पृथिव्यादिधातूनां नैव भवति वयं कायस्य काठिन्यादि निर्वर्तयाम इति। कायस्यापि नैव भवति ज्ञानमेभिर्निर्वर्तित इति। एवं कार्यकारणभावः सुगतसमये निश्चितस्तत्र न चेतनापेक्षा। **इत्युक्तः प्रतीत्यसमुत्पादः।**

नन्वयं प्रतीत्यसमुत्पादः क्षणभङ्गवादे[1] सङ्घटते। तथा च क्षणभङ्गवादे कार्यकारणभावः 'अस्मिन् सतीदं भवति तदभाव' तदभाव इत्यन्वयव्यतिरेकानु-विधायी न सम्भवतीति चेदत्रोच्यते—अविनष्टादेव कारणात् कार्यं भवतीति नः पक्षः। न चैवं कार्यकारणयोर्यौगपद्यप्रसङ्गः। तथा हि, प्रथमक्षणभाविकारण-मासादितात्मलाभमविनष्टमेव प्रतीत्य प्राप्य द्वितीयक्षणे कार्यं जायते, तच्च तथा जायमानमविनष्टादेव जायते, प्रथमे क्षणे तस्याविनष्टत्वात्। न च तर्हि द्वितीयक्षणे कार्यसत्ताकालेऽपि अनुवर्ततामिति वाच्यम्, द्वितीयक्षणे विनष्टत्वाद् अनुवर्तनाभावात्। सत्यामप्यनुवृत्तौ न तदानीं तस्य कारणत्वम्, निष्पन्ने कारणे तस्याकिञ्चित्करत्वात्। अतो न विनष्टात् कारणात् कार्योत्पत्तिरिति पक्षो युक्तः। यदि नाशादेव कार्योत्पत्तिः स्यात्तदा तस्याविशेषात्सर्वं सर्वस्माज्जायेत, न चास्ति तथा, तस्माद् हेतुम्प्राप्य जायमानं कार्यं न विनष्टात्कारणाज्जायते; किन्तु पूर्वक्षणभाविनीं कारणसत्ताम्प्रतीत्यैवेति ध्येयम्। तथा चास्मिन् पक्षे स्वहेतुप्रत्ययसमुत्थितात् कारणस्य शक्तिप्रतिनियमाद् हेतोर्यत्कार्यं यतः प्रथमक्षणभाविना कारणादनन्तरं जातं किञ्चिद्विशिष्टं द्वितीये क्षणे सन्निधिः सद्भावो यस्य तत् कार्यं तत् कारणं जनयतीति जन्यन्ते वा तदाश्रित्य कार्यमित्युच्यते। यदनन्तरमेव कार्योदयः, स एव व्यापारः। तथा च कारणसत्तासमनन्तरमेवाङ्कुरादेरुदयात् कारणसत्तैव व्यापारशब्दवाच्या। किमन्येन व्यापारेण। न च व्यापाराभावे कार्यकारणयोः परस्परमपेक्षा न स्यादिति चेत्, न, इदमेव कार्यस्य कारणेऽपेक्षा यत्तदनन्तरभावित्वम्। कारणस्यापि कार्ये इदमेव व्यापारो यत्कार्योदयकाले सदा सन्निहितत्वम्। न च सत्ताव्यतिरेकेण व्यापारः पदार्थस्यास्ति कश्चित्। एवञ्च सर्वेषामपि भावानां हेतुत्वमुत्तरकालिकव्यापारमन्तरेण भविष्यतीति सिद्धम्।

---

१. क्षणभङ्गवादस्य स्वातन्त्र्येण व्याख्येयत्वादतिविस्तरभयान्नेह विस्तीर्यते।

क्षणिकत्वपक्षे आनन्तर्यमात्रमेव कार्यकारणव्यवस्थानिबन्धनम्। तदप्यानन्तर्यं नियतमेवान्यथातिप्रसङ्गात्। उक्तञ्च मध्यमकशास्त्रे नागार्जुनेन—

प्रतीत्य कारकः कार्यं तं प्रतीत्य च कारकम्।
कर्म प्रवर्तते नान्यत् पश्यामः सिद्धिकारणम्।। (मा.८।१२)

**सुगतनये कार्यकारणयोस्सम्बन्धः**

सुगतानामभिमते कार्यकारणयोस्सम्बन्धः कार्यत्वं कार्यत्वञ्चेत्येव। यथोक्तं हेतुबिन्दुटीकायाम्—"किं रूपः पुनरसौ कार्यकारणभावोऽनुपलम्भसहायप्रत्यक्षनिबन्धन इत्याह—तद्भावे भावस्तदभावेऽभावश्च" इति। य एव हि कारणाभिमतस्य भावे भाव एव। कार्यत्वेनाभिमतस्य भावः। तदभावे कारणत्वाभिमतस्याभावे अभाव एव कार्यत्वेनाभिमतस्याभावश्च। स एव कार्यकारणभावो नान्य इति। एतेन कार्यकारणयोर्नियामकः कार्यकारणाभ्यामन्यः सम्बन्धः कश्चिदस्तीति तीर्थकानामभ्युपगमः परास्तः। तथा हि—कार्यकारणाभ्यामन्यो भवन् स सम्बन्धः स्वभावतोऽप्रतिपन्नकार्यकारणरूपयोर्वा भवेत्, स्वभावेनैव कार्यकारणात्मनोर्वा, नाद्यः, सर्वत्रैव कार्यकारणभावप्रसङ्गात्। सर्वत्रैवाकार्यकारणभूतेऽपि वस्तुनि तन्नियमकारणाभावात् कार्यकारणत्वासङ्गः स्यादिति भावः। ततः सर्वं सर्वस्य कार्यं स्यात्।

ननु नास्ति स्वरूपतः कार्यकारणयोरग्निधूमयोः कार्यकारणभावः; किन्तु अन्ययोगात्तद्भवतीति चेत्, न, अन्ययोगेऽपि भावानां प्रतिनियतरूपत्यागेन रूपान्तरयुक्तत्वाभावात्। यतो नान्ययोगस्तेषां पूर्वरूपं नाशयति विनाशहेत्वयोगात्। न चान्ययोगादपूर्वमेव कार्यकारणत्वमुत्पद्यत इति वाच्यम्, तस्मात्पूर्वस्य पूर्वरूपादकार्यकारणरूपादर्थान्तरत्वप्रसङ्गात्, तथा च विरुद्धयोर्द्वयोर्भावयोरसम्भविनी एकत्रापत्तिः प्रसज्येत। अपि च पश्चादुत्पद्यमानः कार्यकारणभावः पूर्वतनाकार्यकारणभावाद्भिन्नोऽभिन्नो वा? नाद्यः, तत्स्वभावानापत्तेः। न हि तेषु निष्पन्नेष्वनिष्पन्नो भिन्नहेतुको वा तत्स्वभावो भवति। तथा चात्राकारणकार्ययोर्वह्निधूमयोः स्वकारणाभ्यां निष्पन्नयोः सतोरनिष्पन्नः कार्यकारणभावो न अन्ययोगान्निष्पन्नः सन् तयोः स्वभावो भवितुमर्हति। विरुद्धधर्मवत्त्वं कारणभेदवत्त्वं वा भेदहेतुः। तथा चात्र न तावेवाकारणकार्यभूतौ वह्निधूमौ कारणकार्यभावापन्नौ किन्तु भिन्नावेव। ततश्चेन्न भेदः, एकं द्रव्यं विश्वं स्यादिति प्रसज्येत। ततश्च पूर्वके वस्तुनी तदवस्थे एवेति न तयोरन्ययोगेऽपि कार्यकारणरूपतापत्तिः।

नापि द्वितीयः, स्वभावत एव तयोः कार्यकारणरूपत्वात्, अन्यस्य तस्य कार्यकारणभावरूपसम्बन्धस्य वैयर्थ्यात्। ननु तयोस्ताद्रूप्येऽपि कारणबुद्धावस्योप-

योगान्न वैयर्थ्यमिति चेत्, न, तद्भावभावित्वमात्रनिबन्धनायाः कार्यकारण-बुद्धेरर्थान्तरनिमित्ताभावात्। एवं हि न कार्यकारणभावबुद्धिः सम्बन्धनिमित्तिकेति भावः। कार्यकारणयोर्नियामकः कार्यकारणयोः सम्बन्ध उपलब्धिलक्षणप्राप्तो न वा? नाद्यः, तस्योपलब्धिलक्षणप्राप्तस्य कार्यकारणरूपविवेकिना रूपान्तरेणाप्रतिभास-नात्। तथाविधस्यापि ग्रहणकल्पनायामतिप्रसङ्गात्। न द्वितीयः, उपलब्धिलक्षण-प्राप्तविरहेण तेन कार्यकारणबुद्धेर्नियमाभावात्। न हि तदर्थान्तरं स्वसत्तामात्रेण कार्यकारणबुद्धिं प्रवर्तयति। सदा सन्निहितत्वेनास्य तयोः सर्वदोदयप्रसङ्गात्। न सम्बन्धः स्वयमगृहीतः सन् सम्बन्धिनौ नियमयति—इत्ययुक्ताऽस्यानुपलब्धि-लक्षणप्राप्ततेति। न च सम्बन्धो नास्ति विशेषणं येन तस्य ग्रहणमपेक्षेत, किन्तूपलक्षणमिति वाच्यम्, दृष्टस्य तस्योपलक्षणायोगात्, कार्यकारणबुद्ध्योस्तन्नि-बन्धनतोपगमाच्च। तद्बुद्धिनिबन्धनतोपगमे चास्योपलक्षणायोगात्। न हि यन्निमित्तो योऽन्यत्रातद्बुद्धिभाजि तद्व्यवसायः, स तदुपलक्षणे युक्तः। देवदत्ते दण्डिव्यव-सायवद् दण्डोपलक्षणे।

किञ्च कार्यकारणयोः सम्बन्धः कार्यकारणाभ्यामन्यो भवन् स्वयं सम्बद्धो विशिष्टबुद्धिनियामकोऽसम्बद्धो वा? नाद्यः, सम्बद्धोऽपि स्वेनैव सम्बद्धः सम्बन्धान्तेरण वा? नाद्यः, असम्भवात्। न ह्यतिकुशलोऽपि नटः स्वस्कन्धमारोढुं शक्नोति, न द्वितीयः, सम्बन्धान्तरकल्पनायामनवस्थापातात्। अथ चेद्द्वितीयस्तदेष्टापत्तिः, कार्यकारणयोः कार्यत्वं कारणत्वमेव कार्यकारणभाव-मित्यभ्युपगमात्। किञ्च स्वभावतः कार्यकारणभावमापन्नयोः कार्यकारणात्मनो-स्ताभ्यामसहभावित्वं स्यात्सम्बन्धस्य। ततश्च कार्यकारणकाले तस्यासन्निधानात् कथं कार्यकारणबुद्धिहेतुता स्यात्? कार्यकारणात्मना विरुद्धयोरारोप्य कार्यकारण-बुद्धिहेतुत्वकल्पनायाञ्च कल्पितविषय एव कार्यकारणताध्यवसायः स्यात्, न वस्तुविषयः। स च कार्यकारणताध्यवसायविशिष्टभावाभावनिबन्धनोऽभ्युपगत एवेति व्यर्थं सम्बन्धः कल्प्यते। कल्पितविषयत्वे चास्याध्यवसायस्यापि वैयर्थ्यमस्त्येव, सम्बन्धकल्पनायाः कार्यकाले कारणस्य विरोधात्, कार्यकारणयोरयौगपद्याच्च। न ह्ययुगपत्सम्भविनोर्विशिष्टप्रत्ययप्रतीतिरिति।

अथाभ्युपगम्येत कल्प्यमानोऽप्ययं सम्बन्धः कार्यकारणभावाभ्यां सहिताभ्यां जन्यते। तत्र किं सहिताभ्यां ताभ्यां जन्यते एकैकेन वा? नाद्यः, अयुगपत्स्थिताभ्यां ताभ्यामेककार्यजनकत्वाभावात्। नान्त्यः, प्रत्येकजन्यः कथं कार्यकारणभावः स्यात्। कार्येण जन्यमानः कार्यभावः स्यात्। कारणेन जन्यमानश्च कारणभाव इति। किञ्च

यदा कारणेन जन्यते तदा किं स्वकार्यसहितो जन्यते, अथ केवल:? नाद्य:, यदि स्वकार्यसहितस्तदुभयोरन्यत एव भावात् परस्परमसम्बन्ध इति कार्यसम्बन्धितास्य हीयेत। नन्वेकसामग्र्यधीनतैवानयो: सम्बन्ध इति कथं परस्परासम्बन्ध उच्यत इति चेत्, न, कार्येणापि सममस्य कार्यकारणभावस्य सम्बन्धस्य प्रकृतत्वात्। एकसामग्र्यधीनतेष्टौ च तदुत्पत्ते: पूर्वं कारणं न कारणं स्यात्। नान्त्य:, केवलोऽपि किं स्वकार्यात् प्राग्जन्यते पश्चाद्वा? नाद्य:, कारणस्य क्षणिकत्वेन तमेव जनयित्वा ध्वंसात् कथं स्वकार्यकरणत्वम्। तस्यां चासत्यां कथं तदपेक्षमस्य कारणत्वं स्यात्। कारणे चासति कथमकारणेन कार्यकारणसम्बन्धो जन्यते। न द्वितीय:, अथ स्वकार्यं कृत्वा पश्चाज्जन्येत तदाऽपि स्वकार्यकाल एव विनष्टत्वात् कारणस्यासतस्तदुत्तरकालभाविकार्यकारणभावजननं कुत: कार्यकारणभावश्च सम्बन्ध उच्यते भवता। न च कार्येण जन्योऽपि कार्यकारणयोर्नियामक:। कार्याज्जायमान: कार्यप्राग्भाविकारणेन सह कार्यस्य नियामकत्वाभावादिति शम्।



# विधवोद्वाहमीमांसा


**डॉ.कमलाकान्तत्रिपाठी**

अध्यक्षः, पूर्वमीमांसाविभागस्य
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालये
वाराणसी




प्रकृतविषयस्य धर्मशास्त्रमूलत्वादादौ धर्मशास्त्रपदार्थोऽपि भवति प्रतिपिपादयिषितः। तत्तु वर्णाश्रमधर्मविशेषाणां विभागेन प्रतिपादकं तत्तत्स्मृति-प्रवर्तकप्रणीतम्। ते च मन्वत्रिविष्ण्वङ्गिरोहारीतयाज्ञवल्क्ययमापस्तम्बसंवर्तकात्या-यनबृहस्पतिपराशरव्यासशङ्खलिखितदक्षगौतमशातातपवसिष्ठादयो धर्मशास्त्रप्रवर्तका एव। तथा हि—

"तेषामप्यङ्गिरोव्यासगौतमात्र्युशनोयमाः।
वसिष्ठदक्षसंवर्तशातातपपराशराः।।

विष्ण्वापस्तम्बहारीताः शङ्खः कात्यायनो गुरुः।
प्रचेता नारदो योगी बोधायनमनू तथा।।

सुमन्तुः काश्यपो बभ्रुः पैठिनो व्याघ्र एव च।
सत्यव्रतो भरद्वाजो गार्ग्यः कार्ष्ण्याजिनिस्तथा।।

जाबालिर्जमदग्निश्च यौगाक्षिर्ब्रह्मसम्भवः।
इति धर्मप्रणीतारः षट्त्रिंशदृषयः स्मृताः।।

इति पैठिनोक्ता ऋषयो धर्मशास्त्रप्रणेतारो भवन्ति। महाभारतरामायणसांख्य-पातञ्जलपाशुपतवैष्णवादीनाञ्च धर्मशास्त्र एवान्तर्भावः। पुराणानामपि व्यास-प्रणीतत्वेनात्रैव समावेशः। एतेषां स्मृतिसंज्ञानां ग्रन्थानां धर्मशास्त्रत्वं वेदानाञ्च तन्मूलत्वमिति सनातनसरणिः।

विधवाविषये यत् किमपि वक्तव्यं तद् धर्मशास्त्रं पुरस्कृत्यैव, अन्यथा तस्याप्रामाण्यमापद्येत। विधवापरिग्रहविषये भवन्ति अनुकूलाः प्रतिकूलाश्च स्मृतयः।

ताः सर्वा उद्दिश्य विचार्यते किं विधवापरिग्रहः कर्तव्यः, अथवा न कर्तव्यः। एतस्मिन्नेव प्रसङ्गे जीवत्येव पत्यौ याः परित्यक्ताः सन्ति, तासां परिग्रहः कार्यो न वेत्यपि विचारविषयः। यासां पतयोऽयोग्यास्तासां कृतेऽपि विचारो द्रष्टव्यः। अत्र विधवापदमेतासामप्युपलक्षणम्। परिग्रहः जायात्वेन स्वीकारः। विधवापरिग्रह-विषयेऽनुकूलाश्च स्मृतयः—

नष्टे मृते प्रव्रजिते क्लीबे च पतिते पतौ।
पञ्चस्वापत्सु नारीणां पतिरन्यो विधीयते[१]।।

उद्वाहिताऽपि सा कन्या न चेत् सम्प्राप्तमैथुना।
पुनः संस्कारमर्हेत यथा कन्या तथैव सा[२]।।

वरो यद्यन्यजातीयः पतितः क्लीब एव वा।
विकर्मस्थः सगोत्रो वा दासो दीर्घामयोऽपि वा।।
ऊढाऽपि देया सान्यस्मै सहाभरणभूषया।। (कात्यायनः)

तथा चापरार्के नारदः—

'प्रतिगृह्य तु यः कन्यां वरो देशान्तरं व्रजेत्।
त्रीनृतून् समतिक्रम्य कन्याऽन्यं वरयेद् वरम्।।

सम्बन्धतत्त्वे च वसिष्ठः—

कुलशीलविहीनस्य पश्चाद्धि पतितस्य च।
अपस्मारिविधर्मस्य रोगिणां वेशधारिणाम्।।
दत्तामपि हरेत् कन्यां सगोत्रोढां तथैव च।। इति।

विधवापरिग्रहविषये प्रतिकूलाश्च स्मृतयः—

नान्यस्मिन् विधवा नारी नियोक्तव्या द्विजातिभिः।
अन्यस्मिन् हि नियुञ्जाना धर्मं हन्युः सनातनम्।।
न विवाहविधावुक्तं विधवावेदनं क्वचित्।।
कामन्तु क्षपयेद्देहं पुष्पमूलफलैः शुभैः।
न तु नामापि गृह्णीयात् पत्यौ प्रेते परस्य तु[३]।।

---

१. पाराशरीयधर्मशा. ४।३०; २. नारदः, निर्णयसिन्धौ, पृ.२३०।
३. मनुस्मृतिः-९।६४-६५ तथा ५।१५७।

भर्तरि प्रेते ब्रह्मचर्यं तदन्वारोहणं वेति मिताक्षरायां विष्णुः।

अत्रोभयविधानामपि स्मृतीनां शिष्टपरिगृहीतत्वाद् एकतरस्या बाधे प्रमाणाभावाद् विकल्पः। न च भर्तरि प्रेते ब्रह्मचर्यं तदन्वारोहणमिति विष्णुस्मृते-भर्त्रन्वारोहणाभावे ब्रह्मचर्यविधानात्—

'मृते भर्तरि या नारी ब्रह्मचर्यविवर्जिता।
पातयेत् स्वैरिणी सा तु निरये स्वकुलत्रयम्' ।।

इति वृद्धगर्गस्मृत्या

'मनसापीह दुष्टेन याऽन्यं भावयति प्रियम् ।
सा याति नरकं घोरं तेनैवाघेन निश्चितम्' ।। इति।

वृद्धपराशरवचनाच्च ब्रह्मचर्यपालानाभावे महादोषकीर्तनाद् ब्रह्मचर्यपालनमेव युक्तं न पुनःपरिग्रहः, पुनःपरिग्रहे ब्रह्मचर्यहानान्नरकगमनापत्तेरिति वाच्यम्, आपत्सु नारीणामन्यपतिविधानानुगुणस्मृत्यनुरोधेन पित्रादिभिरन्यस्मै वराय प्रतिपादनात् पूर्वमेव स्वेच्छाचारे स्वैरिणीत्वसम्पातात् कुलाधःपातनरकावाप्तिहेतुता। विवाहस्य धर्मार्थत्वात् प्रजार्थत्वाच्च धर्मे दम्पत्योः सहाधिकारित्वात् पत्यौ विपन्ने उभयोरप्यभावेनान्यपतिलाभात् परपूर्वाया अपि प्रजाधर्मयोः प्राप्तिसम्भवात् सम्भाव्येत निःश्रेयसता। अतो विधवानां स्वेच्छाचारे दोषः, न तु पुनःपरिग्रहे द्वितीयेन पत्या सह कर्तव्याचरणे। ब्रह्मचारिणोऽवकरतादोषवत्।

ब्रह्मचर्यव्रतमङ्गीकुर्वतः प्रयत्नेनाप्रयत्नेन वा रेत उत्सर्गे 'ब्रह्मचार्यवकीर्णी नैर्ऋतं गर्दभमालभेत' इति निर्ऋतिदेवताकगर्दभद्रव्यकयागः शुद्ध्यर्थे विहितः। एवमपि पारलौकिकी शुद्धिस्तस्य। अत एव शिष्टास्त्यजन्ति तानवकीर्णिनो ब्रह्मचारिण इति व्यक्तं तृतीये उत्तरतन्त्रे[1]। अयं दोषो ब्रह्मचारिण एव, न तु कृतसमावर्तनस्य स्वीकृतगार्हस्थ्यस्य। तस्य प्रत्युत 'ऋतौ भार्यामुपेयादि'ति शास्त्रेण गमनस्य विहितत्वात्। तथैव विधवानामपि परिग्रहात् पूर्वं दोषो न तदुत्तरमिति सिद्धो विकल्पः। अपि च "विधवा विधातृका भवति, विधवनाद्वा विधावनाद् वेति चर्मशिराः, अपि वा धव इति मनुष्यनाम, तद्वियोगाद् विधवा इति नैरुक्तवचनेन विशेषेण धवनात् कम्पनाद् विधवा, सा हि भर्तृमरणाद्विधूता भवति, विशेषेण धावनाद् विधवा, सा हि भर्तुरभावादनुरुध्यमाना पुंभिर्यतस्ततो धावति, अथवा परिविहीना विधवा भवतीति विधवापदशक्यतावच्छेदकमपि

१. ब्रह्मसूत्रे-३।४।अधि. ११-१२।

परिग्रहात् पूर्वमेव। ततः परं तस्यां विधवात्वाभावादेव नातिक्रमदोषशालितेति विकल्प एवायाति।

नन्वेवमपि लौकिकसुरतादिसुखाधिक्यात् सर्वासामपि पुरुषान्तरसङ्ग्रहे प्रवृत्तिः स्यात्, ततः 'कामं तु क्षपयेद्देहम्, आसीदामरणात् क्षान्ता नियता ब्रह्मचारिणी'त्यादिविधवाधर्माणामविषयत्वापत्तिः स्यादिति चेत्, न, नियमपालने फलस्याधिक्यात् तथाविधोत्कृष्टफलाभिलाषिणीनां तत्र प्रवृत्तिसम्भवान्नाविषयता। [१]'फलस्य कर्मनिष्पत्तेस्तेषां लोकवत् परिमाणतः फलविशेषः स्यात्' इति अर्थवादाधिकरणे महर्षिजैमिनिनाऽपि फलतारतम्यस्य प्रतिपादितत्वादिति प्रथमः पक्षः।

सत्यम्, विकल्प आश्रयितुं शक्येत यदि प्रकारान्तरेणोभयोर्व्यवस्था न स्यात्। 'एकार्थास्तु विकल्पेरन्' इति द्वादशिकन्यायेन एकप्रयोजनकयोर्द्वयोरङ्गयोर्विहितयोर्विकल्पो भवति। यथा 'अग्निहोत्रं जुहोती'ति विहितहोमार्थत्वेन 'दध्ना जुहोति, पयसा जुहोति, यवाग्वा जुहोति' इत्येवमादिवाक्यविहितानां दध्यादीनां विकल्पो भवति, एकेनैव द्रव्येण होमोपकारलाभाद् मिश्रीकरणे समुच्चये वा निरपेक्षविधानेनायुक्तत्वात् समेषामपि वाक्यानां बाधात्। एवमेव 'व्रीहिभिर्यजेत, यवैर्यजेत' इत्यत्रापि विकल्प एव। प्रकृते तु 'पतिरन्यो विधीयते, नान्यस्मिन् विधवा नारी नियोक्तव्या द्विजातिभि'रित्यत्र एकस्य विधिविषयत्वाद् अन्यस्य च निषेधविषयत्वान्न पूर्वोक्तन्यायेन विकल्पः; अपि तु 'नान्यस्मिन् विधवा नारी नियोक्तव्या द्विजातिभिः' इति निषेधः पूर्वं प्राप्तिमपेक्षते। प्राप्तौ सत्यां प्रतिषेध इति न्यायात्। यथा 'न ब्राह्मणं हन्यात्' इति प्रतिषेधो द्वेषादिना हनने प्रवृत्तं प्रत्येव प्रवर्तते, अन्यथा हननेऽप्रवृत्तं प्रत्येव शास्त्रस्य प्रामाण्योपपत्तौ द्वेषादिना प्रवृत्तस्य पुरुषस्य निवृत्तिर्न स्यात्। प्रकृते च प्राप्तिर्यद्यपि रागादिनाऽपि सम्भाव्यते, तथापि ततः पूर्वं 'पतिरन्यो विधीयते' इति प्रवृत्त्यङ्गीकारे शास्त्रप्राप्तस्य प्रतिषेधे विकल्पो भवति। यथा 'अतिरात्रे षोडशिनं गृह्णाति' इति शास्त्रप्राप्तस्य अतिरात्रे षोडशिग्रहस्य 'नातिरात्रे षोडशिनं गृह्णाति' इति प्रतिषेधे विकल्पः, तथापि अतिरात्रे यथा षोडशिग्रहस्य प्राप्तिः शास्त्रादेव, न तु प्रकारान्तरात्, तथा प्रकृते न तादृशी स्थितिः। शास्त्रं विनापि रागादिना प्राप्तिसम्भवात्। अतो न विकल्पः। शास्त्रप्राप्तस्य प्रतिषेधे विकल्पाङ्गीकारात्। विकल्पस्याष्टदोषदुष्टत्वाच्च। अतः—

'नान्यस्मिन् विधवा नारी नियोक्तव्या द्विजातिभिः।
न तु नामापि गृह्णीयात् पत्यौ प्रेते परस्य तु'।।

---

१. निरुक्ते, अ.३पा.३खं. १५; १. जैमिनिसूत्रम्—१।२।१७।

इत्यादिनिषेधशास्त्राणां विधवापरिग्रहनिष्ठानिष्टसाधनताबोधनान्निवर्तनाप्रतिपादकत्वेन विधवानामपरिग्रहस्यैव धर्मत्वम्। नन्वेवम् 'पतिरन्यो विधीयते, ऊढापि देया सान्यस्मै सहाभरणभूषया' इत्यादिशास्त्राणां का गतिरिति चेत्, श्रूयताम्, तेषामभ्यनुज्ञाविधित्वाङ्गीकारान्न दोषः। विवाहानृतवदनविधिवत्। विवाहानृतवदनविधेरग्निहोत्रादिविधिवन्नेष्टजनकत्वम्; अपि तु 'नानृतं वदेदि'ति निषेधस्य अतिक्रमनिमित्तदोषाजनकत्वमेवाक्षिप्यते। एवमिहापि नान्यस्मिन्निति निषेधस्य अतिक्रमनिमित्तदोषाजनकत्वमात्रमिति द्वितीयः पक्षः।

'पतिरन्यो विधीयते, ऊढाऽपि देया साऽन्यस्मै सहाभरणभूषया' इत्येवमादीनां न विवाहानृतवदनवदभ्यनुज्ञाविधित्वं भवितुमर्हति।

अपत्यलोभाद् या तु स्त्री भर्तारमतिवर्तते।
सेह निन्दामवाप्नोति पतिलोकाच्च हीयते[1]।।

नान्योत्पन्ना प्रजास्तीह न चाप्यन्यपरिग्रहे।
न द्वितीयश्च साध्वीनां क्वचिद्भर्तोपदिश्यते।। (मनु. ५।१६२)

विधवाकबरीबन्धो भर्तृबन्धाय जायते।
शिरसो वपनं कार्यं जटा धार्याऽथवा तया।। (मदनरत्ने स्कान्दे)

पर्यङ्कशायिनी नारी विधवा पातयेत् पतिम्।
मृते भर्तरि या जीवेद् ब्रह्मचर्यविवर्जिता ।
पातयेत् स्वैरिणी सा तु निरये स्वकुलत्रयम्।। (वृद्धगर्गः)

इत्येवमादिनिन्दावचनैः प्रतिरोधात्। अपि च—

मृते जीवति वा पत्यौ या नान्यमुपगच्छति।
सेह कीर्तिमवाप्नोति मोदते चोमया सह।। (याज्ञ.आ. ७५)

इति याज्ञवल्क्यवचनेन मृते जीवति वा भर्तरि अन्यगमनाभावे उमासाहचर्यपुरःसरमोदकीर्त्यवाप्तिनिश्चयाद् नोद्वाहोऽस्ति विधवानामिति निश्चयदार्ढ्येन अतिक्रमे महान् दोष एव प्रतीयते। नियोगोऽपि क्वचित् स्मृतिषु यो दृश्यते सोऽपि प्रमाणविधुरः। तथा हि मनुराह—

नोद्वाहिकेषु मन्त्रेषु नियोगः कीर्त्यते क्वचित्।
न विवाहविधावुक्तं विधवावेदनं पुनः।।

---

१. मनुस्मृतिः-५।१६१।

अयं द्विजैर्हि विद्वद्भिः पशुधर्मो विगर्हितः।
मनुष्याणामपि प्रोक्तो वेने राज्यं प्रशासति।।
स महीमखिलां भुञ्जन् राजर्षिप्रवरः पुरा।
वर्णानां सङ्करं चक्रे कामोपहतचेतनः।।
ततः प्रभृति ये मोहात् प्रमीतपतिकां स्त्रियम्।
नियोजयत्यपत्यार्थं तं विगर्हन्ति साधवः[१]।। इति।

एवं यत् क्वचिद् नियोगप्रतिपादनं तदपि शिष्टस्मृतिविरोधान्न प्रामाणिकम्। एवं तर्हि का गतिः पुनरिति, श्रूयताम्—

पूर्वोक्तानि यानि निन्दावचनानि तानि निन्दान्यथानुपपत्त्या न प्रतिषेधकल्पकानि विधवाभिरन्यः पुरुषो न स्वीकर्तव्य इति, येन च 'पतिरन्यो विधीयते, ऊढाऽपि देया सान्यस्मै सहाभरणभूषये'त्यादिवचनैर्विरोध आशङ्क्येत; अपि तु—

कामं तु क्षपयेद्देहं पुष्पमूलफलैः शुभैः।
न तु नामापि गृह्णीयात् पत्यौ प्रेते परस्य तु ।।
आसीदामरणात् क्षान्ता नियता ब्रह्मचारिणी।
यो धर्म एकपत्नीनां काङ्क्षन्ती तमनुत्तमम्[२]।।
आर्ताऽऽर्ते मुदिते हृष्टा प्रोषिते मलिना कृशा।
मृते म्रियेत या पत्यौ सा स्त्री ज्ञेया पतिव्रता।।
मृते भर्तरि या नारी समारोहेद् हुताशनम् ।
सारुन्धतीसमाचारा स्वर्गलोके महीयते[३] ।।
पत्यौ मृतेऽपि या योषिद् वैधव्यं पालयेत् क्वचित्।
सा पुनः प्राप्य भर्तारं स्वर्गलोकं समश्नुते[४] ।।

इत्येवमादिवचनप्रतिपादितपातिव्रत्यधर्मवैधव्यपालनविधिस्तावकत्वेन 'पतिरन्यो विधीयते, ऊढाऽपि देया सान्यस्मै सहाभरणभूषया' इत्यादिवचनैः सह 'पातयेत्

१. मनुस्मृतिः–९।६५-६८।
२. मनुस्मृतिः-५।१५७-१५८।
३. हारीतस्मृतिः; ४. निर्णयसिन्धौ काशीखण्डे।

स्वैरिणी सा तु निरये स्वकुलत्रयम्, सेह निन्दामवाप्नोति पतिलोकाच्च हीयते' इत्येवमादीनि सर्वाण्यपि निन्दावचनानि अर्थवादरूपाणि स्वीक्रियन्ते। अतः 'पातिव्रत्यमनुतिष्ठेत्, वैधव्यं पालयेत्' इत्येवंरूपे विधावेव सर्वेषां तात्पर्यमिति न कोऽपि विरोधलेशावतारः। यथोक्तं वार्तिककारमिश्रैः—

'या निन्दा तन्मात्रपर्यवसायिनी, सा निषेधफला। विधिपरा तु स्तुत्यर्था जायते, तदुपपादनस्य दृष्टार्थत्वादिति'[1]। सूत्रकारोऽपि ब्रूते—'न चेदन्यं प्रकल्पयेत्, प्रक्लृप्तावर्थवादः स्यादानर्थक्यात् परसामर्थ्याच्चेति'[2]।

तथा हि—'जर्तिलयवाग्वा वा जुहुयात् गवीधुग्यवाग्वा वा जुहुयात्' न ग्राम्यान् पशून् हिनस्ति नारण्यान् अथो खल्वाहुरनाहुतिर्वै जर्तिलाश्च गवीधुकाश्च पयसाऽग्निहोत्रं जुहुयात्' इत्यत्र विधेरनाहुतिरिति च निन्दया निषेधस्यानुमानाद् विधिनिषेधावुभाविति विकल्पे प्राप्ते सिद्धान्तसूत्रमिदम्। यदि प्रत्यक्षो विधिः सन्निहितो न स्यात्, ततः षोडशिग्रहणवदेकेन शिष्ट्वा अन्येन प्रतिषेधः स्यात्। अत्र तु 'पयसा अग्निहोत्रं जुहुयात्' इत्यन्यस्य विधेः प्रक्लृप्तत्वात् तच्छेषभूतोऽयमर्थवादः स्यात्, अन्यथा निषेधेनैकवाक्यतां विना निन्दात्वस्यैवानिश्चयेन अनाहुतित्वकथनस्य निषेधकल्पकत्वस्यैवासम्भवाद् आनर्थक्यं स्यात्। कथञ्चित् कल्पितस्यापि निषेधस्य विकल्पापादकत्वात्, अत्र च पयोद्रव्यविधानादेवानर्थक्यस्यापरिहाराद् यवागूस्तुतिनिन्दयोः कथं स्तुत्यर्थत्वमित्याशङ्कायां परसामर्थ्यादित्युक्तम्। ग्राम्याणामारण्यानाञ्च पशूनां हिंसानापादनेन प्रशस्तानामपि जर्तिलगवीधुकानां पयःप्रयोगापेक्षया दुष्टत्वात् पयः प्रशस्ततरमिति परेण पयोविधिनान्वये सामर्थ्यादित्यभिप्रायः। एवमेकवाक्यत्वे सम्भवति अनेकादृष्टसम्पृक्तवाक्यभेदापादकविधित्वाङ्गीकारस्यायोगाज्जुहुयादिति लिङोऽपि स्तुतिप्रयोजनकतैव। एवमत्रापि विधिपूर्वकाभरणसहकृतविधवोद्वाहस्यानियतपुरुषसंसर्गापेक्षया प्रशस्तत्वात् पातिव्रत्यानुष्ठानवैधव्यपालनापेक्षया दुष्टत्वात् पातिव्रत्यानुष्ठानं वैधव्यपालनञ्चैव प्रशस्ततरमिति 'ऊढापि देया साऽन्यस्मै, पतिरन्यो विधीयते' इत्येवमादीनामपि स्तुत्यर्थत्वमिति सर्वोपपन्नमिति तृतीयः पक्षः।

सत्यम्। अर्थवादः सर्वोऽपि स्याद् यदि विधवाप्रदानतन्निन्दावचनानि एकत्र स्युः, पातिव्रत्यानुष्ठानवैधव्यपालनविधिसन्निधौ, न त्वेवमस्ति, भिन्नासु स्मृतिषु तत्तद्वचनानामुपलभ्यमानत्वात्। एकस्यर्षेर्विधवोद्वाहेऽभ्यनुज्ञानाद् अन्यस्य

१. तन्त्रवार्तिकम्-१।२।११।
२. जै.सू. १०।८।४।

चातथात्वात् परस्परं विरोधे नैकतरस्यैवानुष्ठाने विनिगमकं किञ्चिदस्तीति न्यायानुसरणमेव ज्यायः। तथा चोक्तमस्ति—

स्मृत्योर्विरोधे न्यायस्तु बलवान् व्यवहारतः।
अर्थशास्त्रात्तु बलवद् धर्मशास्त्रमिति स्थितिः[१]।। इति।

मीमांसायां[२] स्मृत्यधिकरणे स्मृतीनां प्रामाण्यं न स्वातन्त्र्येण, तासां पुरुषनिर्मितत्वेन पुरुषाणाञ्च भ्रमप्रमादादिदोषदूषितत्वादप्रामाण्यमेवापद्येत। अतश्च तासां प्रामाण्यावधारणाय किञ्चिद् मूलमवश्यमेव गवेषणीयम्। प्रत्यक्षादीनां धर्माधर्माविषयत्वान्न तन्मूलकत्वम्। भ्रान्त्यादिमूलकत्वमपि न सम्भवति। तत्कारणाज्ञानादिकल्पने गौरवात्। अतो वेदमूलकत्वमेव तासाम्। यतो हि ता वेदप्रामाण्याभ्युपगन्तृत्वतदुदितकर्मानुष्ठातृत्वलक्षणशिष्टत्रैवर्णिकपरिगृहीताः सन्ति। ते हि अष्टकाकलञ्जभक्षणादिकं धर्माधर्मत्वेन परिगृह्णन्तो वेददर्शिन एव सन्ति। वेदस्य प्रत्यक्षपठितस्यैव तन्मूलत्वम्। एवं सति स्मृतिप्रणयनस्य वैयर्थ्यं न शङ्कनीयमेव। शाखान्तरोपसंहारेण मन्त्रार्थवादोपोद्धारेण न्यायेन सिद्धस्यार्थस्य निरूपणेन च तत्प्रणयनस्य सार्थक्योपपत्तेः। न हि सर्वाः शाखा एकेन पुरुषेणाध्येतुं मन्त्रार्थवादेभ्यो विधयः कल्पयितुं न्यायसिद्धा अर्थाश्च कथयितुं शक्यन्ते। मन्वादीनां सर्वज्ञत्वेन तत्सर्वं विधातुं शक्यत्वात् स्मृतिकरणं सप्रयोजनम्। तथा हि—'अष्टकाः कर्तव्याः, गुरुरनुगन्तव्यः., तडागं खनितव्यम्, प्रपाः प्रवर्तयितव्याः, शिखाकर्म कर्तव्यमि'त्येवमादीनां स्मृतीनाम्—

'यां जनाः प्रतिनन्दन्ति रात्रिं धेनुमिवायतीम्।
संवत्सरस्य या पत्नी सा नो अस्तु सुमङ्गली ।।

एषा वै संवत्सरस्य पत्नी या अष्टकाः, तस्माच्छ्रेयांसं पूर्वं यन्तं पापीयान् पश्चादन्वेति, स्थलया उदकं परिगृह्णन्ति, धन्वन्निव प्रपा, यत्र बाणाः सम्पतन्ति कुमारा विशिखा इवेत्येवमादयो वेदा मूलम्। एवं वेदमूलत्वेनैव स्मृतीनां प्रामाण्यं सिध्यति नान्यथा। यस्या अपि स्मृतेर्मूलभूतो वेदो न दृश्यते, तस्या अपि नित्यानुमेयो वेदो मूलमिति केचित्। तथा सति विरुद्धयोरपि स्मृत्योर्मूलत्वं यदि दृश्यते, तदा विकल्पो भवति। यदि एकस्या मूलत्वमन्यस्याश्च तदभावस्तदा समूलाया एवानुष्ठानम्। श्रुतिविरुद्धायाः स्मृतेरप्रामाण्यमेवेति व्यक्तं विरोधाधिकरणे[३]। यथा 'औदुम्बरीं स्पृष्ट्वोद्गायति' इत्येतया श्रुत्या 'औदुम्बरी सर्वा वेष्टितव्या' इत्यस्याः

१. याज्ञवल्क्यस्मृतिः, व्यवहाराध्यायः-२१।
२. अ.१ पा.३ अधि.१; १. मी.,अ.१, पा.३, अधि. २।

स्मृतेर्बाधादप्रामाण्यम्। यथा चोक्तं भाष्यकारैः—'तस्मादुक्तं श्रुतिविरुद्धा स्मृतिरप्रमाणमिति। अतश्च सर्ववेष्टनादि नादरणीयम्''[१] इति। यत्र स्मृतौ लोभादिहेतुदर्शनं भवति, तस्या अपि प्रामाण्यं नास्तीति तत्रैव व्यक्तम्। एवं स्थिते—विवाहविधौ विनियुक्तानां मन्त्राणां लिङ्गाद् एकभर्तृकत्वमेव नारीणां निश्चीयते। तथा हि सप्तपदीसङ्क्रमणे सप्तमो मन्त्रः—''सखे सप्तपदा भव सा मामनुव्रता भव विष्णुस्त्वा नयतु'' इत्यत्र पत्यनुव्रतत्वं पत्न्याः स्पष्टमेव प्रतीयते।

वधूहृदयालम्भने विनियुक्तो मन्त्रोऽपि तथैवास्ति—

''मम व्रते ते हृदयं दधामि मम चित्तमनुचित्तं ते अस्तु मम वाचमेकमना जुषस्व प्रजापतिष्ट्वा नियुनक्तु मह्यम्' इति।

अत्र दम्पत्योरेकचित्तत्वादिप्रतिपादनाद् नान्यगामित्वं विधवानां निश्चीयते। अश्मारोहणे विनियुक्ते—'आरोहेममश्मानमश्मेव त्वं स्थिरा भव अभितिष्ठ प्रतन्यतोऽवबाधस्व पृतनायतः' इति मन्त्रे अश्मेव त्वं स्थिरा भवेति दार्ढ्यसम्पादनलिङ्गात् पातिव्रत्यानुष्ठानमेव परमो धर्म इति प्रतीयते। अपि च—

'इह प्रियं प्रजया ते समृध्यतामस्मिन् गृहे गार्हपत्याय जागृहि। एना पत्या तन्वं संसृजस्वाधा जिव्री विदथमावदाथः' इति वधूप्रवेशमन्त्रे गृह एव सन्तत्युपलक्षिता या वध्वा प्रियत्वसमृद्धिः, गृहपत्नीत्वाय सावधानत्वं पत्या साकं शरीरस्य मिश्रीकरणं जीर्णतापर्यन्तवियोगवैधुर्यपुरःसरयज्ञसम्बन्धिवार्ताकरणञ्च यत् प्रतिपाद्यते, तेन—

'नोद्वाहिकेषु मन्त्रेषु नियोगः कीर्त्यते क्वचित्।
न विवाहविधावुक्तं विधवावेदनं पुनः'।।

इति मनुवचनमेव परिपुष्टं भवति। अत एव—

पुनः पत्नीमग्निरदादायुषा सह वर्चसा।
दीर्घायुरस्या यः पतिर्जीवाति शरदः शतम्[२]।।

इति मन्त्रेण पित्रा पूर्वं दत्तायाः कन्यायाः पुनरग्निकर्तृकदानमुच्यते। एतेन 'अग्निसन्निधिसंस्काराद् भार्यात्वमुपजायते' इति सिध्यति। पुनश्च तस्याः पत्ये दीर्घायुष्ट्वाय यदाशीर्वचनं तन्नूनमेव' वैधव्यं दुरितनिमित्तकमिति द्योतयति। एवं दुरितविनाशाय विधवाभिराजीवनं स्मृत्युपपादितो ब्रह्मचर्यसचिवो धर्म एवानुष्ठेय-

१. मी.,शा.भा., तत्रैव-१।३।३; २. ऋ. सं. ८।३।२७।४।

स्तत्तुल्याभिरन्याभिरपि परित्यक्ताभिः। तथा सति 'पतिरन्यो विधीयते' इत्येवमादीनां वेदमूलकत्वाभावात् प्रत्युत विरुद्धश्रुतिभिर्विरोधाधिकरणन्यायेन बाधादप्रामाण्यमेवेति चतुर्थः पक्षः। न त्वेतद् युक्तमिव। यद्यप्युद्वाहिकेषु मन्त्रेषु पूर्वोक्तेन प्रकारेण पातिव्रत्यानुष्ठानं वैधव्यपरिपालनञ्च सिध्यति। परमधर्मत्वेन तदेवेष्टम्। तत्र न कोऽपि विवादलेशावकाशः। तथापि विधवोद्वाहस्यापद्धर्मत्वेन प्रतिपादिकानां स्मृतीनां न मूलप्रमाणदर्शनाभावमात्रेणाप्रामाण्यं स्थापयितुं शक्यते। शिष्टत्रैवर्णिक-परिगृहीतानां तासामात्यन्तिकबाधस्यानौचित्यात्। तथा सति तासां यावन्मूलप्रमाण-दर्शनमननुष्ठानलक्षणमप्रामाण्यमेवाङ्गीकर्तुं शक्यत इति वार्तिककारमतमेव समीचीनं प्रतिभाति। न सर्वथापि विधवावेदने मूलं नास्तीति वक्तुं शक्यते। कुत्रचित्तस्यापि सम्भवात्। तथा हि मन्त्रोऽश्विदेवताकः—

कुहस्विद्दोषा कुहवस्तोरश्विना कुहाभिपित्वं करतः कुहोषतुः।
को वां शयुत्रा विधवेव देवरं मर्यं न योषा कृणुते सधस्थ आ[१]।। इति।

हे अश्विनौ! युवां रात्रौ क्व भवतः क्व वा दिवा। क्व चाभिप्राप्तिं कुरुथः क्व वा वसथः। कतमो यजमानो युवां सहस्थाने स्वाभिमुख्येन कुरुते। कथमिव? शयने विधवा देवरमिव, या काचित् स्त्री पुरुषमिवेत्यक्षरार्थः। अत्र देवरेणाश्विनावुपमीयेते, विधवया च यजमानः। प्रसिद्धानामेवोपमानत्वमिति नियमात् शयने विधवाकर्तृकं देवराभिमुखीकरणमेवापदि विधवावेदनं द्योतयति। इत्थम्—

पञ्चस्वापत्सु नारीणां पतिरन्यो विधीयते ।
उद्वाहिताऽपि सा कन्या न चेत्सम्प्राप्तमैथुना ।
पुनः संस्कारमर्हेत यथा कन्या तथैव सा ।
ऊढाऽपि देया सान्यस्मै सहाभरणभूषया ।।

इत्यादिस्मृतीनां पूर्वोक्तस्य मूलत्वस्य दृश्यमानत्वान्न प्रामाण्यवैधुर्य्यम्। अत एवाप्राप्तमैथुनानामपुत्राणां बालविधवानां पुनरुद्वाहः श्रुतिसिद्ध एव स्मृतिषु दृश्यत इति तद्वचनानुसारेणैव यथावदनुष्ठाने न कोऽपि दोषः। एवं सति यानि तन्निन्दावचनानि तानि 'न हि निन्दा निन्दितुं प्रवर्तते, अपि तु विधेयं स्तोतुमि'ति न्यायेन विधेयस्तावकतयैवाङ्गीकरणीयानीति पञ्चमः पक्षः। इदमपरं मतम्। भूयसामनुग्रह इति न्यायाद् अनेकमन्त्रवर्णस्मृतिप्राप्तविधवानुद्वाहस्यैव धर्म्यत्व-

१. तत्रैव-७।८।१८।

मस्तीति मन्तव्यम्। विधवेव देवरमिति मन्त्रवर्णस्यापुत्राया विधवायाः पुत्रार्थत्वेन नियोगमूलत्वमेव कथञ्चिदापादयितुं शक्यते। तेन च नोद्वाहस्तासां सिध्यति। नियोगस्याभ्यनुज्ञाऽस्त्येव स्मृतिषु। तथा च गौतमस्मृतिः—

'अपतिरपत्यलिप्सुर्देवरात्'[१] इति।

तवल्काराणां ब्राह्मणेऽपि—

'यद्वा प्रथमेऽहनि रेतः सिच्यते स गर्भः सम्भवत्यथ यत्र तत् सिच्यते मुधेव तत्परासिच्यते'[२] इति श्रूयते।

एतेन प्रथमगमन एव यदि गर्भस्य सम्भवस्तदा नोपेयाद् देवरः पिण्डगोत्रार्षसम्बन्धिनो वा। अयं नियोगः सर्वथा कुलविच्छेदे सम्प्रसक्त एव प्रावर्तत। स च नियोगः कलौ 'देवरेण सुतोत्पत्तिर्दत्ता कन्या न दीयत' इत्यादि-पुराणवचनेन निषिद्ध इति निश्चीयते। एवं विधवोद्वाहो न वैध इति निन्दावचनानामपि विधवोद्वाहनिषेधकल्पकत्वमेव सम्यक्। अत एवानुगमनाभावे शीलरक्षणमुक्तं काशीखण्डे—

अनुयाति न भर्तारं यदि दैवात् कथञ्चन।
तत्रापि शीलं संरक्षेत् शीलभङ्गात् पतत्यधः।।
तद्वैगुण्यादपि स्वर्गात् पतिः पतति नान्यथा।
तस्याः पिता च माता च भ्रातृवर्गस्तथैव च ।। इति ।

अपि च, अनन्यपूर्वाया एव कन्याया विवाहस्य 'गृहस्थः सदृशीं भार्यां विन्देतानन्यपूर्वां यवीयसीम्, पाणिग्रहणिका मन्त्राः कन्यास्वेव प्रतिष्ठिताः। नाकन्यासु क्वचिन्नृणां लुप्तधर्मक्रिया हि ताः'[३] इत्यादिवचनैर्विहितत्वादकन्याभूताया विधवाया विवाहस्य प्रसक्तिरेव नास्ति। कन्याविवाहश्च रजोदर्शनात् प्रागेव प्रशस्त इति व्यक्तं गृह्यसङ्ग्रहे। यथा—

व्यञ्जनैस्तु समुत्पन्ने सोमो भुञ्जीत कन्यकाम्।
पयोधरैस्तु गन्धर्वा रजसाग्निः प्रकीर्तितः।।
तस्मादव्यञ्जनोपेतामरजामपयोधराम्।
अभुक्तां चैव सोमाद्यैः कन्यकां तु प्रशस्यते।।इति।।

---

१. गौतमधर्मसूत्रम्-२।९।४।
२. तत्रैव, मिताक्षरावृत्तावुद्धृतम्;
३. गौतमधर्मसूत्रम्—१।४।१।

एवं यत्र सोमाद्यैर्भुक्तत्वे कन्यकाविवाहस्याप्राशस्त्यं प्रतिपाद्यते किं पुनरन्यपुरुषभुक्तत्वे विधवाविवाहस्य।

यद्युच्येत, उभयविधश्रुतिस्मृतिदर्शनात् कथं विधवोद्वाहविषयाया अननुष्ठेयलक्षणमप्रामाण्यमिति। आचारादर्शनादिति ब्रूमः। न हि लोके भूयान् विधवोद्वाहाचारो दृश्यते, न च रामायणमहाभारतेतिहासपुराणादिषु श्रूयते। यत्र कुत्रचिद् दृश्यते स न वैधो धर्म्यो वा। रत्यादिमूलक एवासावस्तीति निश्चेतुं शक्यते। 'भूयसामनुग्रह'[१] इति न्यायादेव। श्रुतिस्मृतिसिद्धोऽपि पदार्थो यदि आचारपरम्पराबहिर्भूतस्तदा नासावनुष्ठेय इति किं पुनर्यो भूयसीभिः श्रुतिभिः स्मृतिभिश्च विरुद्ध आचारपरम्पराबहिर्भूतः शिष्टविगर्हितश्च भवति। एतादृग्विषये सदाचार एव नियामको भवति। अत आचारेष्वदर्शनाद् विधवोद्वाहस्य नानुष्ठेयत्वम्। आचारविरुद्धेऽनुष्ठीयमाने लोकनिन्दा नियतैव। यथाह मनुः —

'अपत्यलोभाद् या तु स्त्री भर्तारमतिवर्तते।
सेह निन्दामवाप्नोति पतिलोकाच्च हीयते'[२]।। इति।

आचारानुगते तु भूयसी प्रतिष्ठा। यथाह भगवान् स एव—

अनेकानि सहस्राणि कुमारब्रह्मचारिणाम्।
दिवं गतानि विप्राणामकृत्वा कुलसन्ततिम्।।
मृते भर्तरि साध्वी स्त्री ब्रह्मचर्यव्यवस्थिता।
स्वर्गं गच्छत्यपुत्राऽपि यथा ते ब्रह्मचारिणः'[३]।। इति।

एवमनन्यपूर्विकाया असपिण्डाया असमानार्षगोत्रजायाः कन्याया एव विवाहेन पत्नीत्वनिष्पत्तौ अन्यस्यास्तदभावाद् यानि अन्यावेदनप्रतिपादकानि वचनानि तानि वाग्दत्तापराणि व्याख्येयानि। तथा सति न परस्परविरोधसम्भावनाऽपि। वाङ्मनोदानमात्रेण पतित्वस्य पत्नीत्वस्य चाभावात्। तथा हि अपरार्कस्मृतिचन्द्रिकायां वसिष्ठः —

'अद्भिर्वाचा च दत्तायां म्रियेतोर्ध्वं वरो यदि।
न च मन्त्रोपनीता स्यात् कुमारी पितुरेव सा'[४]।।

---

१. त्यजेदेकं कुलस्यार्थे ग्रामस्यार्थे कुलं त्यजेत्। ग्रामं जनपदस्यार्थे आत्मार्थे पृथिवीं त्यजेत् ।।
२. मनुस्मृतिः-५।१६१; ३. तत्रैव-५।१५९-१६०।
४. निर्णयसिन्धौ २३० पृष्ठे उद्धृतम्।

'ऊढापि देया सान्यस्मै सहाभरणभूषया' इत्यादिवचनैरन्यजातीयक्लीबपतितविकर्मस्थसगोत्रदासदीर्घामयत्वानां विशेषणानां पतित्वानुत्पादकत्वादेव छलादिना तैः सह विवाहे जातेऽपि कालान्तरे दोषज्ञाने कन्याया वरान्तरेण पुनरुद्वाहो निश्चीयते। एतादृक्स्थले कन्यायां पत्नीत्वस्यैवानिष्पत्त्या पुनराच्छिद्य संस्कारो भवत्येव।

एवमेव 'नष्टे मृते प्रव्रजिते क्लीबे च पतिते पतौ' इति पराशरवचनस्यापि वाग्दत्तापरत्वमेव। वाग्दत्ताया मनोदत्तायाश्च पुनर्भूत्वं स्मर्यमाणं 'दत्ताक्षतायाः कन्यायाः पुनर्दानं परस्य च' इति कलिवर्ज्यप्रकरणेन पुनर्दाननिषेधेन दृढीकृतं पराशरवचनेन बाध्यते। क़लौ वाग्दत्ताया मनोदत्तायाश्च अभीष्टपतिमरणानन्तरं परस्मै पुनर्दानं भवति, पुनर्भूत्वमपि तयोर्नास्तीति तदीयवचनतात्पर्यम्।

'सा चेदक्षतयोनिः स्याद् गतप्रत्यागतापि या।
पौनर्भवेण भर्त्रा सा पुनः संस्कारमर्हति' ।।

इति मानवं वचनं पुनर्भूपरमेव। तस्याश्च दानसंस्कारयोरभावात् कामप्राबल्यादभिमतान्यभर्तृस्वीकार एवेति तदीयसन्तानस्य न धर्म्यत्वम्। अत एव श्राद्धादिषु निषेधस्तयोः। इत्थं वाग्दत्तापरत्वेन पराशरादिवचनानां तात्पर्यावसायान्न विधवायाः पुनरुद्वाहः शास्त्रसम्मतः। अत एव निगमः —

'अप्रमत्ता वै रक्षत तन्तुमेनं मा वः क्षेत्रे परबीजान्यवाप्सुरि'त्यनेन शुद्धसन्ततिसंरक्षणार्थं स्त्रीषु परबीजावापं सम्भावयन् तं प्रतिषेधति। अयमेव कर्तुः पुत्र इति व्यवस्थायां मूलत्वेनोपन्यस्तो भाष्यवार्तिकयोः[१]। स्थितादुत्तरम्—

'ब्रह्मचर्यं चरेद्वापि प्रविशेद्वा हुताशनमि'ति मानववचनेन तथा 'सहानुगमनं शस्तं वैधव्यस्याथ पालनमि'ति ब्रह्मवैवर्तपुराणवचनेन विधवानां ब्रह्मचर्यमथवा हुताशनप्रवेश इति द्वावेव धर्मौ। तत्र निबन्धकाराणां 'कलौ नान्या गतिः स्त्रीणां सहानुगमनादृते' इति ब्रह्मवैवर्तपुराणवचनमुपन्यस्य तद्ब्रह्मचर्याशक्यत्वपरमिति कथनेन ब्रह्मचर्यपालनाभावे सहानुगमनमेवेति नियमो भवति। कलौ तु अधर्मभूयिष्ठत्वात् पुरुषाणां ब्रह्मचर्यच्युतिसन्देहः पदे पदे सम्भाव्यते। अत एव—

'दीर्घकालं ब्रह्मचर्यं नरमेधाश्वमेधकौ।
कलौ युगे त्विमान् धर्मान् वर्ज्यानाहुर्मनीषिणः'।।

---

१. मी.द.१.२.१३; १. निर्णयसिन्धौ ४४० पृष्ठे।

दैर्घकालिकब्रह्मचर्यनिषेधः सङ्गच्छते। एवमाहत्य कलौ सहानुगमनमेवावशिष्यते। यत्र शासने सहानुगमनमपराधेषु गणितं कुत्रचिदनुष्ठितेऽपि सम्बन्धिनो दण्डभाजो भवन्ति, तत्र विधवाभिः किं विधेयमिति प्रश्नः स्थाने आयाति। यदि सर्वथा ब्रह्मचर्यपालनाशक्यता तदाऽनियतपुरुषसंसर्गापेक्षया नियतपुरुषस्वीकार एव ज्यायान्। तत्र कथंविधः पुरुषोऽसौ भविष्यतीति मनुराह—

'सा चेदक्षतयोनिः स्याद् गतप्रत्यागताऽपि वा।
पौनर्भवेण भर्त्रा सा पुनः संस्कारमर्हति'।। इति।

पौनर्भवः पुनर्भूपुत्रः। यथाह स एव—

'या वा पत्या परित्यक्ता विधवा वा स्वयेच्छया।
उत्पादयेत् पुनर्भूत्वा स पौनर्भव उच्यते[1]'।। इति।

अत्र न ज्ञातीनां न च धर्मशास्त्रस्य सम्मतिरस्ति। काम एव पुरुषान्तराश्रयप्रयोजकः। अतस्तादृक्संस्कारो भार्यात्वप्रयोजक एव, न तु पत्नीत्वप्रयोजकः। पत्नीत्वन्तु धर्मकार्यसहकारप्रयोजको धर्मः। 'पत्युर्नो यज्ञसंयोगे' इति पाणिनेरनुशासनात्। स च शास्त्रबोधितविवाहसंस्कारं विना न ज्ञातुं शक्यते। भार्यात्वं तु ग्रासाच्छादनादिनां वेश्यासाधारणम्। अतो न शास्त्रैकसमधिगम्यम्। एवं तथाविधानां विधवानां पौनर्भवादीनामेव तत्समानधर्माणां कृते स्वीकृतिः। अतः कुलीनो न तामङ्गीकुर्यात्। अतो मनुः—

'गुरुणाऽनुमतः स्नात्वा समावृत्तो यथाविधि।
उद्वहेत द्विजो भार्यां सवर्णां लक्षणान्विताम्[2]'।।

इत्यनेन तस्मै सवर्णां लक्षणान्वितां कन्यामनुशास्ति। एवं सति पौनर्भवस्वीकारापेक्षया तज्जनिताशास्त्रीयपुत्रप्राप्त्यपेक्षया चोभयलोकानुगुणब्रह्मचर्यमेवावशिष्यत इति सनातनमर्यादा।

●

१. मनुस्मृतिः–९।१७५; २. तत्रैव-४।३।

# कालविवेचनम्

**डॉ० देवीप्रसादत्रिपाठी**
प्राध्यापकः, ज्योतिषविभागे
श्रीलालबहादुरशास्त्रिराष्ट्रियसंस्कृतविद्यापीठे
नवदेहल्याम्



इह खलु संसारे सर्वेषु कार्येषु यथार्थकालस्यावश्यकता प्रतीयते। तत्र प्रथमं जिज्ञासा उत्पद्यते यत् कोऽस्ति कालः? 'कल् संख्याने' इत्यस्माद्धातोः कर्त्तरि घञ् प्रत्ययेन निष्पद्यते। कलयति गणयतीत्यपि काल-परिभाषा भवति। कालो द्विधात्मकः। एकस्तु लोकानां (भूर्भुवादीनाम्) अन्तकृतः, द्वितीयः कलनात्मकः। कलनात्मकोऽपि द्विविधः स्थूलो सूक्ष्मश्च। तत्र स्थूलः व्यवहारयोग्यो मूर्तसंज्ञकः सूक्ष्मश्चाव्यावहारिकोऽमूर्तसंज्ञकः। उक्तञ्च सूर्यसिद्धान्ते—

लोकानामन्तकृत् कालः कालोऽन्यः कलनात्मकः।
स द्विधा स्थूलसूक्ष्मत्वान्मूर्तश्चामूर्त उच्यते[1]।।

**मूर्तामूर्तकालयोः परिभाषा**

प्राणादिः कालः मूर्तसंज्ञकस्तथा च त्रुट्यादिकालोऽमूर्तसंज्ञकोऽस्ति। अनयोः कालयोर्विवेचनं सूर्यसिद्धान्ते विस्तरेण वर्तते। तद्यथा—

प्राणादिः कथितो मूर्तस्त्रुट्याद्योऽमूर्तसंज्ञकः।
षड्भिः प्राणैर्विनाडी स्यात् तत्षष्ट्या नाडिका स्मृता।।
नाडीषष्ट्या तु नाक्षत्रमहोरात्रं प्रकीर्तितम्।
तत् त्रिंशता भवेन्मासः सावनोऽर्कोदयैस्तथा[2]।।

---

१. सूर्यसिद्धान्तः, १.१०।
२. तत्रैव, १.११-१२।

**मूर्तकालः**

सुखासीनस्य स्वस्थपुरुषस्यैकश्वासोच्छ्वासान्तर्वर्तिकालः प्राणसंज्ञको भवति। स च दशगुर्वक्षरोच्चारणकालेन समो भवति। अग्रे स्पष्टमस्ति यथा—

| | | |
|---|---|---|
| ६ प्राणाः | = | १ विनाडी |
| ६० विनाडी | = | १ नाडी |
| ६० नाडिकाः | = | १ अहोरात्रम् |
| ३० अहोरात्राणि | = | १ मासः |
| १२ मासाः | = | १ वत्सरम्। |

कालविभागगणनायां मूर्तकालसन्दर्भे भास्कराचार्योऽपि तथैव वक्ति। यथा—

गुर्वक्षरैः खेन्दुमितैरसुस्तैः षड्भिः पलैस्तैर्घटिका खषड्भिः।।
स्याद्वा घटीषष्टिरहः खरामैर्मासो दिनैस्तैर्द्विकुभिश्च वर्षम्।
क्षेत्रे समाद्येन समा विभागाः स्युश्चक्रराश्यंशकलाविलिप्ताः[१]।।

| | | |
|---|---|---|
| १० गुर्वक्षरोच्चार्यमाणकालः[२] | = | १ असुः (प्राणः) |
| ६ असुः | = | १ पलम् |
| ६० पलानि | = | १ घटिका |
| ६० घट्यः | = | १ अहोरात्रम् |
| ३० अहोरात्राणि | = | १ मासः |
| १२ मासाः | = | १ वर्षम्। |

प्रसङ्गेऽस्मिन्नेवार्यभट्टोऽपि कथयति।[३] कफवातपित्तद्योतिका नाडी यावता कालेनैकरूपां गतिं वहति, स नाडीसंज्ञकः कालः। घटिकायन्त्रेण यः काल उत्पद्यते, स घटीसंज्ञको दण्डयन्त्रेणोत्पन्नः कालश्च दण्डसंज्ञको भवति। यन्त्रभेदेन नामभेदोऽभवत्। नाडी-दण्ड-घट्यश्च समानार्थकाः समानकालबोधकाश्च।

१. सि.शि.का., श्लो. १७-१८।

२. द्विमात्रो गुरुः। तथा—सानुस्वारो विसर्गान्तो दीर्घो युक्तपरश्च यः। (वृत्तरत्नाकरे, १.९) द्रष्टव्यम्—यदक्षरं सानुस्वारं विसर्गान्तं दीर्घं यस्याक्षरस्य परतः संयोगस्तल्लघ्वपि गुरुसंज्ञां ज्ञेयम्। गुर्वक्षरस्योच्चार्यमाणस्य यावान् कालस्तद्दशकेनैकोऽसुः प्राणः। (वासनाभाष्ये)

३. वर्षं द्वादश मासास्त्रिंशाद्दिवसो भवेत् स मासस्तु। षष्टिर्नाड्यो दिवसः षष्टिश्च विनाडिका नाडी। गुर्वक्षराणि षष्टिर्विनाडिकार्क्षी षडेव वा प्राणः। आर्यभट्टीयकालक्रियापादः, श्लो. १-२।

'उपसर्गेण धात्वर्थो बलादन्यत्र नीयते' इत्यादिनात्र वि-उपसर्गेण तत्षष्टिभागात्मकः कालो विघटिकात्मको भवति। सर्वमेतादृशं व्यवहारे दृश्यते।

**अमूर्तकालः**

त्रुटितत्परनिमेषात्मककालः सूक्ष्मत्वादमूर्तसंज्ञकः। स च व्यवहारेणैव यन्त्रादिना गणयितुं शक्यते। अस्मिन् प्रसङ्गे नारदेनोक्तम्—

सूच्या भिन्ने पद्मपत्रे त्रुटिरित्यभिधीयते।
तत्षष्ट्या रेणुरित्युक्तो रेणुषष्ट्या लवः स्मृतः।।
तत्षष्ट्या लीक्षकं प्रोक्तं तत्षष्ट्या प्राण उच्यते।।

**यथा—**

| | | |
|---|---|---|
| सूच्या पद्मपत्रभेदनकालः | = | १ त्रुटिः |
| ६० त्रुटयः | = | १ रेणुः |
| ६० रेणवः | = | १ लवः |
| ६० लवाः | = | १ लीक्षकम् |
| ६० लीक्षकाणि | = | १ प्राणः[१]। |

प्रसङ्गेऽस्मिन् भास्कराचार्यस्य विचाराः —

योऽक्ष्णोर्निमेषस्य खरामभागः स तत्परस्तच्छतभाग उक्ता।
त्रुटिर्निमेषैर्धृतिभिश्च काष्ठा तत् त्रिंशता सद् गणकैः कलोक्ता।।
त्रिंशत्कलाऽऽक्षी घटिका क्षणः स्यान्नाडीद्वयं तैः खगुणैर्दिनं च।।[२]

स्पष्टमस्ति भास्कराचार्यानुसारेण कालगणनाप्रकारः —

| | | |
|---|---|---|
| लोचनयोः पक्ष्मपातकालः | = | १ निमेषः |
| निमेषः/३० | = | १ तत्परः, १ तत्परः/१००=१त्रुटिः। |

अर्थात्—

| | | |
|---|---|---|
| १ निमेषः | = | ३० तत्परः |
| १ तत्परः | = | १०० त्रुटयः |

१ त्रुटिः = १ तत्परः/१०० = (निमेषः/३०) ÷ १००= निमेषः/३०००

१. उद्धृतम्—सूर्यसिद्धान्ततत्त्वामृतभाष्ये, पृ.७।
२. सि.शि., श्लो. १६-१७।

| | | |
|---|---|---|
| निमेषः | = | ३००० त्रुटयः (सूक्ष्मकालः) |
| १८ निमेषाः | = | १ काष्ठा |
| ३० काष्ठाः | = | १ कला |
| ३० कला | = | १ नक्षत्रघटिका |
| २ घटिका | = | १ क्षणः = मुहूर्तम् |
| ३० मुहूर्तानि | = | १ दिनम् = ३० क्षणाः |
| १ दिनम् (स्थूलकालः) | = | २१६०० असवः |

कालगणनाप्रसङ्गे सङ्गीतमकरन्दे नारदेन गदितं यत्[१]—

| | | |
|---|---|---|
| १०० पद्मपत्रस्य सूचीभेदकालः | = | १ क्षणः |
| ८ क्षणाः | = | १ लवः |
| ८ लवाः | = | १ काष्ठा |
| ८ काष्ठाः | = | १ निमेषः |
| ८ निमेषाः | = | १ कला। |

अत्र भारतीयकालगणनया सम्बन्धः पाश्चात्त्यकालगणनया सह प्रस्तूयते—

| | | |
|---|---|---|
| सूच्या पद्मपत्रभेदकालः[२] | = | १ त्रुटिः = १/३२४०००० सेकेण्डानि |
| ६० त्रुटयः | = | १ रेणुः = सेकेण्डानि |
| ६० रेणवः | = | १ लवः = १/९०० सेकेण्डानि |
| ६० लवाः | = | १ लीक्षकम् = १/१५ सेकेण्डानि |
| ६० लीक्षकाणि | = | १ प्राणः = ४ सेकेण्डमितानि। |
| १ प्राणः | = | गुर्वक्षरोच्चारणकालः = १० विपलानि = ४ सेकेण्डानि |

१. उपर्युपरि विन्यस्य पद्मपत्रशतं सकृत्। स कालः सूचिसम्भेदात् तत्क्षणश्च कलं प्रति।।
लवः क्षणैरष्टभिः स्यात् काष्ठा चाष्टलवात्मिका। अष्टकाष्ठा निमेषः स्यान्निमेषैरष्टभिः कला।।
ताभ्यां चैव चतुर्भागश्चतुर्भानामनुद्रुतः। अनुद्रुताभ्यां विन्दुश्च विन्दुभ्यां तु लघुर्भवेत्।।
लघुद्वन्द्वं गुरुश्चैव त्रिलघुः प्लुतमुच्यते। इति मानगतिः प्रोक्ता तालज्ञैः पूर्वसूरिभिः।।

२. कुत्रचित्। असुः ४५ निमेषैस्तुल्यः स्वीकृतः। यद्येवं कल्प्यते तदा त्रुटेर्मानम् = १/३३७५० सेकेण्डानि। सि.शि., पं. केदारदत्तजोशी (सम्पा.), प्रथमभागः, पृ. १२।

| | | |
|---|---|---|
| १ पलम् | = | ६ प्राणाः = ६० विपलानि = २४ सेकेण्डानि |
| २.५ पलानि | = | ६० सेकेण्डानि= १ मिनटम् |
| १ विपलम् | = | १ गुर्वक्षरोच्चारणकालः/१० = २/५सेकेण्डानि। |
| १ नाडी | = | ६० पलानि = १ दण्डः = २४ मिनटानि |
| ६० नाड्यः | = | १ नाक्षत्राहोरात्रम् = २४ घण्टाः |
| २.५ नाड्यः (दण्डाः) | = | १ होरा (घण्टा) |
| ३० अहोरात्राणि | = | १ मासः |
| १२ मासाः | = | १ वर्षम् |
| ३६० दिव्याहोरात्राणि | = | १ दिव्यवर्षम् (मानववर्षम्) |
| १२००० दिव्यवर्षाणि | = | दिव्ययुगम् = महायुगम् = ४.३२ × १०$^{६}$ वर्षाणि |
| ७१ दिव्ययुगानि | = | १ मन्वन्तरम् = ३.०६७२×१०$^{८}$ वर्षाणि |
| १४ मन्वन्तराणि | = | १ कल्पम् ४.३२ × १०$^{९}$ वर्षाणि |
| २ कल्पे | = | १ ब्राह्म-अहोरात्रम् = ८.६८×१०$^{९}$ वर्षाणि |
| ३६० ब्राह्मदिनानि | = | १ ब्राह्मवर्षम् = ३.११०४×१०$^{१२}$ वर्षाणि |
| ५० ब्राह्मवर्षाणि | = | १ परार्धम् = १.५५५२×१०$^{१४}$ वर्षाणि |
| ब्रह्मणः पूर्णायुः | = | २ परार्धे = ३.११०४×१०$^{१४}$ वर्षाणि। |

## कालगणना मनुस्मृत्यनुसारम्

पौराणिकी कालगणना एव मनुस्मृतौ दृश्यते। सृष्टेः प्राक् सर्वमन्धकारभूतं प्रसुप्तवदज्ञातलक्षणं तर्कातीतं किमप्यचिन्त्यमेवासीदिति मनुः।[१] ब्रह्माण्डस्य महदण्डे परिवत्सरं (३११०४००००००००० मानववर्षाणि) यावदुषित्वा तस्याण्डस्य विभाजनमकरोत्।[२] विभक्ते तदण्डे परिगणनाः प्रारब्धवान्। यथा—

कालं कालविभक्तीश्च नक्षत्राणि ग्रहास्तथा।
सरितः सागराञ्छैलान् समानि विषयाणि च।।[३]

कालगणना निमेषतोऽत्र प्रस्तूयते—

| | | | |
|---|---|---|---|
| १ निमेषः | = | पक्ष्मपातकालः | = ०.४४४....विपलानि |
| | | | = ०.१७७७७....सेकेण्डानि वा |

१. मनुस्मृतिः, १.५,१२।
२. तत्रैव, १.२४;
३. तत्रैव, १.९, ६०-७३।

| | | |
|---|---|---|
| १८ निमेषा: | = | १ काष्ठा = ८ विपलानि = ३ १/५ सेकेण्डानि |
| ३० काष्ठा: | = | १ कला = ४ पलानि = १ मिनटं ३६ सेकेण्डानि |
| ३० कला: | = | १ मुहूर्तम् = २ घटी = ४८ मिनटानि |
| ३० मुहूर्तानि | = | १ अहोरात्रम् = ६० घटी = २४ होरा: |
| १५ अहोरात्रम् | = | १ पक्ष: (मानव:) |
| २ पक्षौ | = | १ मास: (मानव:) = १ अहोरात्रम् (पित्र्यम्) |
| ६ मासा: | = | १ अयनम् (मानव:) = दिनं रात्रिर्वा (दिव्यम्) |
| १२ मासा: | = | १ वर्षम् (मानव:) = १ अहोरात्रम् (दिव्यम्) |
| ३६० दिव्याहोरात्राणि | = | ३६० वर्षम् (मानव:) = १ वर्षम् (दिव्यम्) |
| ४०००दिव्यवर्षाणि | = | १४४०००० मानववर्षाणि = सत्ययुगमानम् |
| ४०० दिव्यवर्षाणि | = | १४४००० मानववर्षाणि = सत्ययुगसन्ध्यामानम् |
| ४०० दिव्यवर्षाणि | = | १४४००० मानववर्षाणि = सत्ययुगसन्ध्यांशमानम् |
| ४८०० दिव्यवर्षाणि | = | १७२८००० मानववर्षाणि = सत्ययुगस्य पूर्णमानम् |
| ३००० दिव्यवर्षाणि | = | १०८०००० मानववर्षाणि = त्रेताया मानम् |
| ३०० दिव्यवर्षाणि | = | १०८००० मानववर्षाणि = त्रेताया: सन्ध्यामानम् |
| ३०० दिव्यवर्षाणि | = | १०८००० मानववर्षाणि = त्रेताया: सन्ध्यांशमानम् |
| ३६०० दिव्यवर्षाणि | = | १२९६००० मानववर्षाणि = त्रेताया: पूर्णमानम् |
| २०००दिव्यवर्षाणि | = | ७२०००० मानववर्षाणि = द्वापरस्य मानम् |
| २०० दिव्यवर्षाणि | = | ७२००० मानववर्षाणि = द्वापरस्य सन्ध्यामानम् |
| २०० दिव्यवर्षाणि | = | ७२००० मानववर्षाणि = द्वापरस्य सन्ध्यांशमानम् |
| २४०० दिव्यवर्षाणि | = | ८६४००० मानववर्षाणि = द्वापरस्य पूर्णमानम् |
| १००० दिव्यवर्षाणि | = | ३६०००० मानववर्षाणि = कलियुगस्य मानम् |
| १०० दिव्यवर्षाणि | = | ३६००० मानववर्षाणि = कलियुगस्य सन्ध्यामानम् |
| १०० दिव्यवर्षाणि | = | ३६००० मानववर्षाणि = कलियुगस्य सन्ध्यांशमानम् |
| १२०० दिव्यवर्षाणि | = | ४३२००० मानववर्षाणि = कलियुगस्य पूर्णमानम् |
| १२००० दिव्यवर्षाणि | = | ४३२०००० मानववर्षाणि = चतुर्युगस्य मानम् |
| १२००० × ७१ | = | ८५२००० दिव्यवर्षाणि = ३०६७२०००० मानववर्षाणि |
| | = | मन्वन्तरमानम् |

१२०००००० दिव्यवर्षाणि = ४३२०००००००० मानववर्षाणि = ब्रह्मणो दिनम्

२४०००००० दिव्यवर्षाणि = ८६४०००००००० मानववर्षाणि = ब्रह्मणोऽहोरात्रम्

**श्रीमद्भागवतानुसारं कालगणना**[१]

| | | |
|---|---|---|
| २ परमाणू | = | १ अणुः (अतिसूक्ष्मो विभागरहितः परमाणुः) |
| ३ परमाणवः | = | १ त्रसरेणुः (प्रकाशकिरणेऽवलोकितमाना धूलिकणाः) |
| ३ त्रसरेणुजन्यकालः | = | १ त्रुटिः |
| १०० त्रुटयः | = | १ वेधः |
| ३ वेधाः | = | १ लवः |
| ३ लवाः | = | १ निमेषः |
| ३ निमेषाः | = | १ क्षणः |
| ५ क्षणानि | = | १ काष्ठा |
| १५ काष्ठाः | = | १ लघुः |
| १५ लघवः | = | १ नाडिका (दण्डः) |
| २ नाडिके | = | १ मुहूर्तम् |
| ६ वा ७ नाडिकाः | = | १ प्रहरः = १ यामः = १/४ दिवा रात्रिर्वा |
| ८ प्रहराः | = | १ अहोरात्रम् |
| १५ अहोरात्रम् | = | १ पक्षः |
| २ पक्षौ | = | १ मासः = पितृणामहोरात्रम् |
| २ मासौ | = | १ ऋतुः |
| ६ मासाः | = | १ अयनम् |
| २ अयने | = | १ वर्षम् (देवानामहोरात्रम्) |
| १०० वर्षाणि | = | परमायुः मनुष्याणाम् |
| ३६० वर्षाणि | = | १ दिव्यवर्षम् |
| १२००० दिव्यवर्षाणि | = | १ चतुर्युगमानम् (सन्ध्यासन्ध्यांशसहितम्) |
| ४८०० दिव्यवर्षाणि | = | १ सत्ययुगमानम् (सन्ध्यासन्ध्यांशसहितम्) |
| ३६०० दिव्यवर्षाणि | = | १ त्रेतायुगमानम् (सन्ध्यासन्ध्यांशसहितम्) |

---

१. श्रीमद्भागवते, ३।११।१-३७।

| | | |
|---|---|---|
| २४०० दिव्यवर्षाणि | = | १ द्वापरयुगमानम् (सन्ध्यासन्ध्यांशसहितम्) |
| १२०० दिव्यवर्षाणि | = | १ कलियुगमानम् (सन्ध्यासन्ध्यांशसहितम्) |
| १००० चतुर्युगानि | = | १ ब्रह्मणो दिवस: (एक: कल्प:) |
| १००० चतुर्युगानि | = | ब्रह्मणो रात्रि: (एक: कल्प:) |
| १ कल्प: | = | १४ मनव: |
| ७१ ६/१४ चतुर्युगानि | = | १ मनु: |
| २००० चतुर्युगानि | = | ब्रह्मणोऽहोरात्रम् |
| २००० × ३६० चतुर्युगानि | = | ब्रह्मवर्षम् (७२०००० चतुर्युगानि) |
| ७२०००० × १०० चतुर्युगानि | = | ब्रह्मण: परमायु: (७२०००००० चतुर्युगानि) |
| परमायु:/२ | = | ३६०००००० चतुर्युगानि = परार्धम् |
| २ परार्धम् | = | ७२०००००० ब्रह्मण: परमायु: |
| ब्रह्मण: परमायु: | = | श्रीहरेरेको निमेष: |

एतावद् कालगणनाया: प्रारूपं सर्वेषु पुराणेषु महाभारते च दरीदृश्यते।[1]

**कालस्य महिमवर्णनम्**

पुराणेषु कालविवेचनप्रसङ्गे कालपरिभाषया सह कालस्य माहात्म्यमपि प्रदर्शितं विद्यते। अत्र केचनांशा उपस्थाप्यन्ते। यथा—

अनादिनिधन: कालो रुद्र: सङ्कर्षण: स्मृत:।
कलनात् सर्वभूतानां स काल: परिकीर्तित:[2]।।
अनादिरेष भगवान् कालोऽनन्तोऽजरोऽमर:।
सर्वगत्वात् स्वतन्त्रत्वात् सर्वात्मत्वान्महेश्वर:।।
ब्रह्मणो बहवो रुद्रा ह्यन्ये नारायणादय:।
एको हि भगवानीश: काल: कविरिति श्रुति:।।
ब्रह्मनारायणेशानां त्रयाणां प्राकृतो लय:।
प्रोच्यते कालयोगेन पुनरेव च सम्भव:।।

---

१. म.भा.शान्तिपर्व, अ. २३१; वनपर्व, अ. १४९, १८८।

२. विष्णुपुराणे, १।२।

एवं ब्रह्मा च भूतानि वासुदेवोऽपि शङ्करः।
कालेनैव च सृज्यन्ते स एव ग्रसते पुनः।।[1]

तस्मात् कालात्मकं विश्वं स एव परमेश्वरः।
अनादिनिधनः कालो रुद्रः सङ्कर्षणः स्मृतः।।

कर्षणात् सर्वभूतानां स तु सङ्कर्षणः स्मृतः।
सर्वभूतसमित्वाच्च स रुद्रः परिकीर्तितः।।
अनादिनिधनत्वेन स महान् परमेश्वरः।।[2]

**भारतीयदर्शनशास्त्रेषु कालसत्ता**

दार्शनिकदृष्ट्या काल एको गूढतमो विषयोऽस्ति। दर्शनशास्त्रेषु कालतत्त्वस्य वर्णनं सूक्ष्मरूपेण क्रियते। यद्यपि कलनात्मकस्य कालस्य सूक्ष्मविचारा अत्र नैव दृश्यन्ते; परन्तु कालस्य व्यक्तरूपस्य वैचारिकं निरूपणं दर्शनशास्त्रे कृतवन्त आचार्याः। सांख्यदर्शने तु कालस्य कापि सत्ता नास्ति। यतस्तस्य मते यानुपाधीनाधृत्य कालभेदः क्रियते, त एव उपाधयः कालव्यवहारे हेतवः। यथा—

"कालश्च वैशेषिकाभिमते एको न अनागतादिव्यवहारभेदं प्रवर्तयितुमर्हति। तस्मादयं यैरुपाधिभेदैरनन्तादिभेदं प्रतिपद्यते सन्तु त एवोपाधयः, येऽनागतादिव्यवहारहेतवः कृतमन्तर्गडुना कालेनेति सांख्याचार्याः"[3]।

**सांख्यशास्त्रानुसारं** कालभेदा उपाधिकृत उपाधय एव सन्ति। अत्र कालनामकस्य कस्यापि बाह्यवस्तुनः सत्ता नास्ति; परन्तु परवर्तिनामाचार्याणामनुसारमाकाशस्य तन्मात्रास्ति कालः। यथोक्तं सांख्यसूत्रे—'दिक्कालाकाशादिभ्यः' इति न्यायवैशेषिकानां मते त्वेकं द्रव्यमस्ति। अयं बाह्यसत्तात्मकोऽस्तीत्यनुमानेन सिद्ध्यति। परापरचिरक्षिप्रादिलिङ्गेनास्यानुमानं भवति। यथोक्तम्—'कालः परापरव्यतिकरं यौगपद्यचिरक्षिप्रप्रत्ययलिङ्गम्। तेषां विषयेषु पूर्वप्रत्ययविलक्षणानामुत्पत्तौ अन्यनिमित्ताभावाद् यदत्र निमित्तं स कालः'[4]।

**वैशेषिकशास्त्रानुसारं** तु काल एव सर्वस्य हेतुरस्ति। यद्यपि न्यायेष्वन्येषु ग्रन्थेषु काल आचार्यैरतिरिक्ततयानुमोदितः; किन्तु नैयायिकेषु श्रीरघुनाथ-

१. कूर्मपुराणे-५।२३-२४, २१-२२; २. विष्णुधर्मोत्तरपुराणे-१।७२।३।
३. तत्त्वकौमुदी, सांख्यकारिका-३३; ४. प्रशस्तपादभाष्ये, पृ. ३३२।

शिरोमणिना कालस्य पृथक् सत्ता नाङ्गीक्रियते। एषां मते तु नेश्वराद् भिन्नौ दिक्कालौ। एतैरनयोरीश्वर एवान्तर्भावः कृतः। तद्यथा—

'दिक्कालौ नेश्वरादतिरिच्येते मानाभावात्। तत्तन्निमित्त-विशेषसमवधानवशादीश्वरादेव तत्तत्कार्यविशेषाणामुत्पत्तेः'[१]।

योगदर्शनेऽपि कालस्य कापि सुदृढा सत्ता न स्वीकृता। कालोऽवास्तविको वस्तुशून्यः, तथा च बुद्धिभेदादेव कालभेदो भवति।[२] यथा—'क्षणतत्क्रमयोः संयमाद्विवेकजं ज्ञानम्'[३]। प्रसङ्गेऽस्मिन् महर्षिव्यासदेवप्रणीतभाष्ये उद्धृतमस्ति यत्—'यथाऽपकर्षपर्यन्तं द्रव्यं परमाणुरेवं परमापकर्षपर्यन्तः कालः क्षणः, यावता वा समयेन चलितः परमाणुः पूर्वदेशं जह्यादुत्तरदेशमुपसम्पद्येत स कालः क्षणः। तत्प्रवाहाविच्छेदस्तु क्रमः। क्षणतत्क्रमयोर्नास्ति वस्तुसमाहार इति बुद्धिसमाहारो मुहूर्ताहोरात्रादयः'[४]। क्षणो योगसूत्रानुसारं कालस्य सूक्ष्मात्सूक्ष्मतरो भागः परमाणुरूपोऽविभाज्योंऽश एवास्ति। यथा—'क्षणः सर्वान्त्यः कालावयवो ......'[५]। कालस्य सापेक्षस्वरूपस्य कल्पनाऽस्ति योगवासिष्ठे। कालस्य लघुदीर्घता सदैव सापेक्षाऽस्ति। यथा—'देशदैर्घ्यं यथा नास्ति कालदैर्घ्यं तथाङ्गणे'[६]। अद्वैतदर्शनानुसारेणापि कालस्य कापि वास्तविकी सत्ता नास्ति। मधुसूदनसरस्वत्या सिद्धान्तबिन्दुग्रन्थे कालस्याविद्यायामन्तर्भावो दृश्यते[७]। परब्रह्मण्यस्य प्रातिभासिकसत्ताऽध्यारोपिताऽस्ति। ये कालस्याधारे भेदोपभेदा क्रियन्ते, ते वस्तुतोऽविद्याजन्याः। सर्वेषां प्रपञ्चानां विलयो भवति विद्यायाः प्रादुर्भावे। तत्रैव कालस्यापि विलयो भवति[८]।

**व्याकरणशास्त्रे कालविचारः**

व्यापारव्यतिरेकेण कालमेकं प्रचक्षते।
नित्यमेकं विभु द्रव्यं परिमाणं क्रियावताम्।।
दृष्टिप्रस्थसुवर्णादि मूर्तिभेदाय कल्पते।
क्रियाभेदाय कालस्तु संख्या सर्वस्य भेदिका।।[९]

---

१. पदार्थतत्त्वनिरूपणे, पृ. १-२।
२. पातञ्जलयोगसूत्रम्, ४.३३; पा. योगप्रदीपे, गीताप्रेस, पृ. २६२।
३. तत्रैव, ३.५२; ४. व्यासभाष्ये, ३.५२, पृ. ४०३।
५. राजर्षिभोजदेवप्रणीतवृत्तिः, ३.५२, पृ. ४०५; ६. योगवासिष्ठः, ३.२०. १२।
७. सिद्धान्तबिन्दुः; ८. श्रीमद्भागवतम्, ३.२६.१६।
९. वाक्यपदीये कालसमुद्देशे, श्लो. १-२।

**नवविधं कालमानम्**

प्राचीनैः कालगणनार्थं नवधा कालमानं स्वीकृतम्। उक्तञ्च सूर्यसिद्धान्ते—

ब्राह्मं दिव्यं तथा पित्र्यं प्राजापत्यं च गौरवम्।
सौरञ्च सावनं चान्द्रमार्क्षमानानि वै नव।।[१]

अर्थात्—१. ब्राह्मम्, २. दिव्यम्, ३. पित्र्यम्, ४. प्राजापत्यम्, ५. गौरवम्, ६. सौरम्, ७. सावनम्, ८. चान्द्रम्, ९. आर्क्षम्। एतानि नवविधकालमानानि सन्ति। आचार्यभास्करेणापि एतेषामुल्लेखः सौरचान्द्रार्क्षादिक्रमेण सिद्धान्तशिरोमणौ कृतः।[२] एषु सावनानां चतुर्णामिव व्यवहारः प्रत्यक्षतो दृश्यते। उक्तञ्च यथा—

चतुर्भिर्व्यवहारोऽत्र सौरचान्द्रार्क्षसावनैः।
बार्हस्पत्येन षष्ट्यब्दं ज्ञेयं नान्यैस्तु नित्यशः[३]।।

एतदतिरिक्तं षष्टिसंवत्सराणां गणना बार्हस्पत्यमानेन भवति।

**सौरमानम्**

सूर्यस्य द्वादशराशिभोगकाल एकं सौरवर्षम्। एकराशेर्भोगकाल एकः सौरमासो भवति। अर्थाद् यदा सूर्य एकं भचक्रं स्वगत्या प्रपूरयति, तदा एकं सौरवर्षम्। एकराशेर्भोगकाल एको मासस्तथा चैकांऽशभोगकालः सौरदिनम्। एकस्मिन् सौरवर्षे ३६० दिनानि भवन्ति। यदा एकराशिं हित्वा द्वितीयराशिं याति सूर्यः सोऽस्ति तस्य सङ्क्रान्तिकालः। सङ्क्रान्त्या सङ्क्रान्तिं यावत् सौरमासो भवति। अत एवोक्तं भास्कराचार्येण—'रवेश्चक्रभोगोऽर्कवर्षं प्रदिष्टं, द्युरात्रं च देवासुराणां तदेव'[४]। सौरमानेनैव दिनरात्र्यो षडशीतिमुखानां सङ्क्रान्तीनाम् अयनगोलयोः सङ्क्रान्तिपुण्यकालानाञ्च समीचीनं ज्ञानं भवति। उक्तञ्च सूर्यसिद्धान्ते—

सौरेण द्युतिशोर्मानं षडशीतिमुखानि च।
अयनं विषुवच्चैव सङ्क्रान्तेः पुण्यकालता[५]।।

---

१. सूर्यसिद्धान्ते, १४.१।

२. एवं पृथग् मानव-दैव-जैव-पैत्रार्क्ष-सौरन्दवसावनानि।
ब्राह्मं च काले नवमं प्रमाणं ग्रहास्तु साध्या मनुजैः स्वमानात्।। (सि.शि.,का.मा., श्लो. ३२)

३. सूर्यसिद्धान्ते, १४.२।

४. सि.शि., म.का. श्लो. १९।

५. सूर्यसिद्धान्ते, १४.३।

**षडशीतिमुखानि**

बृहत्कालपरिमाणानां गणना सौरमानेनैव भवति। तुलार्कसङ्क्रमणतः प्रति षडशीति(८६)दिवसैरेकैकं षडशीतिमुखं भवति। षडशीतितुलाराशेः प्रारभ्य धनुमीनमिथुनकन्याख्येषु द्विस्वभावराशिषु पूर्णं भवति[१]। यथा—

| | | | |
|---|---|---|---|
| प्रथमषडशीतिमुखम्—तुलायाः — | तुलायाः | – | ३० अंशाः |
| | वृश्चिकस्य | – | ३० अंशाः |
| | धनुषः | – | २६ अंशाः |
| | | | ८६ अंशाः |
| द्वितीयषडशीतिमुखम् — | धनुषः | – | ४ अंशाः |
| | मकरस्य | – | ३० अंशाः |
| | कुम्भस्य | – | ३० अंशाः |
| | मीनस्य | – | २२ अंशाः |
| | | | ८६ अंशाः |
| तृतीयषडशीतिमुखम् — | मीनस्य | – | ८ अंशाः |
| | मेषस्य | – | ३० अंशाः |
| | वृषस्य | – | ३० अंशाः |
| | मिथुनस्य | – | १८ अंशाः |
| | | | ८६ अंशाः |
| चतुर्थषडशीतिमुखम् — | मिथुनस्य | – | १२ अंशाः |
| | कर्कस्य | – | ३० अंशाः |
| | सिंहस्य | – | ३० अंशाः |
| | कन्यायाः | – | १४ अंशाः |
| | | | ८६ अंशाः |

उपर्युक्तचतुर्षु षडशीतिमुखेषु सौरदिनानि ८६×४=३४४ भवन्ति। एकस्मिन् सौरवर्षे ३६० दिनानि भवन्ति। ३६० - ३४४= १६ दिवसाः सौरवर्षेऽवशिष्यन्ते। कन्यायाः सौरदिवसा अवशिष्यन्ते। रवेः षडशीतिमुखराशिषु सङ्क्रमणमपि षडशीतिमुखसंज्ञकमेव भवति। तथा चाह श्रीरामाचार्यः—

१. सूर्यसिद्धान्ते-१४.४-५।

षडशीत्याननं चापनृयुक्कन्याझषे भवेत्।
तुलाजौ विषुवं विष्णुपदं सिंहालिगोघटे।।[१]

कन्याया अवशिष्टषोडशांशात्मकः कालो यज्ञकालसदृशो भवति। अस्मिन् समये श्राद्धादिकर्म कृत्वाऽक्षयफलं प्राप्नोति। उक्तञ्च सूर्यसिद्धान्ते—

ततश्शेषे तु कन्याया यान्यहानि तु षोडश।
क्रतुभिस्तानि तुल्यानि पितॄणां दत्तमक्षयम्।।[२]

सूर्यसङ्क्रान्तेर्राशिभेदात् सङ्क्रान्तेर्नामान्यपि पृथक्-पृथक् सन्ति। यथा—

| राशिनामानि | सङ्क्रान्तेर्नामानि | ऋतोर्नामानि |
|---|---|---|
| १. मेषः | विषुवत् | वसन्तः |
| २. वृषः | विष्णुपदी | ग्रीष्मः |
| ३. मिथुनः | षडशीतिः | ग्रीष्मः |
| ४. कर्कः | अयनः | वर्षा |
| ५. सिंहः | विष्णुपदी | वर्षा |
| ६. कन्या | षडशीतिः | शरद् |
| ७. तुला | विषुवत् | शरद् |
| ८. वृश्चिकः | विष्णुपदी | हेमन्तः |
| ९. धनुः | षडशीतिः | हेमन्तः |
| १०. मकरः | अयनः | शिशिरः |
| ११. कुम्भः | विष्णुपदी | शिशिरः |
| १२. मीनः | षडशीतिः | वसन्तः |

सूर्यस्य सङ्क्रमणवशादेवायनगोलर्त्वादीनां विभागो भवति। सूर्यो यदा कर्के प्रविशति तदा दक्षिणायनम्, यदा च मकरे प्रविशति तदोत्तरायणं प्रारभ्यते। एवमेव मेषादित उत्तरगोलस्तुलादितो याम्यगोलः। द्वयोर्द्वयोः राश्योरेकैकमृतुर्भवति। यथा— मकरकुम्भयोः शिशिरः, मीनमेषयोर्वसन्तः, वृषमिथुनयोर्ग्रीष्म इत्यादयः। अस्मिन् विषये सिद्धान्तशेखरे श्रीपतिना उल्लिखितम्—

मृगादिराशिद्वयभानुभोगात् षडर्तवः स्युः शिशिरो वसन्तः।
ग्रीष्मश्च वर्षाश्च शरच्च तद्वद्धेमन्तनामा कथितोऽत्र षष्ठः[३]।।

१. मुहूर्तचिन्तामणौ-३।४।
२. सूर्यसिद्धान्ते, १४.६;
३. सिद्धान्तशेखरे।

पूर्वराशौ सङ्क्रमणं कृत्वाऽर्कस्याग्रिमराशौ गमनमेव सङ्क्रान्तिशब्देन ज्ञायते। यदा रविकेन्द्रं राश्यादौ भवति स सङ्क्रान्तेर्मध्यकाल उच्यते। पूर्वाभिमुखं गच्छतोऽर्को यदाग्रिमराश्यादिबिन्दोः स्पर्शं करोति, °स सङ्क्रान्तेरारम्भकालः। यदार्कबिम्बस्य पश्चिमभागो राश्यादिबिन्दुगतो भवति तदा सङ्क्रान्तेरवसान इति। केन्द्राभिप्रायेण सङ्क्रान्तेः प्राक् परे च यः कालः, सोऽस्ति स्नानदानादौ सङ्क्रान्तेः पुण्यकालः। सङ्क्रान्तिसाधनार्थमनुपातः—

$$\frac{\text{रविबिम्बकलामानम्} \times ६०}{\text{रविगतिकला}} = \text{सङ्क्रान्तिकालः।}$$

अत्र यदि रविबिम्बकलामानम् = ३२, रविगतिकला = ६०, तदोत्थापनेन—

$$\frac{६० \times ३२}{६०} = ३२ \text{ सङ्क्रान्तिकालः}$$

अतः षोडशघटिकाः प्राक्-पराश्च सङ्क्रान्तेः पुण्यकालः। यथा मुहूर्तचिन्तामणौ—सङ्क्रान्तिकालादुभयत्र नाडिकाः पुण्या मताः षोडशषोडशोर्ध्वगाः[१]।

**चान्द्रमानम्**

यस्मिन् दिने रवीन्द्वोर्युतिर्भवति, सा एव स्थितिरमावास्या। अमान्ते रवीन्दू राश्याद्यवयवेन समौ भवतः। अमान्तादमान्तं यावद् यः कालो भवति, स चान्द्रमास इच्युच्यते। यथोक्तं भास्कराचार्येण—'रवीन्द्वोर्युतेः संयुतिर्यावदन्या विधोर्मास एतच्च पैत्र्यं द्युरात्रम्'[२]। त्रिंशत्तिथ्यात्मको भवति चान्द्रमासः। एकस्मिन् मासे द्वौ पक्षौ भवतः कृष्णशुक्लभेदेन। पञ्चदशतिथ्यात्मक एकः पक्षः। रविचन्द्रान्तरांशवशेन तिथेर्मानं द्वादशांशसमं भवति। यथा—चन्द्रार्कयोरेकस्या युतेर्द्वितीययुतिकालपर्यन्तमन्तरांशाः षष्ट्यधिकं त्रिशतम्। एतन्मिन्नन्तरांशे त्रिंशत्तिथयो लभ्यन्ते तथा एकस्य तिथेर्मानं किम्? इत्यनुपातद्वारा प्रदर्श्यते—

$$\frac{३६० \times १}{३०} = १२^{\circ} \text{ तिथेर्मानम्}$$

उक्तञ्च सूर्यसिद्धान्ते—

अर्काद्विनिस्सृतः प्राचीं यद्यात्माहरहश्शशी।
तच्चान्द्रमानमंशैस्तु ज्ञेया द्वादशभिस्तिथिः[३]।।

१. मुहूर्तचिन्तामणौ संक्रान्तिप्रकरणे, श्लो. ५।

२. सि.शि., म.का.,श्लो. १९; ३. सूर्यसिद्धान्ते, १४.१२।

एकस्मिन् चान्द्रमासे कति सावनदिवसा भवन्ति। विषयेऽस्मिन् भास्कराचार्येण कथितम्—

कालेन येनैति पुनः शशीनं कामन् भचक्रं विवरेण गत्योः।
मासः स चान्द्रोऽङ्कयमाः कुरामाः पूर्णेषवस्तत्कुदिनप्रमाणम्[१]।।

दर्शान्ते किल शशिः रविणा युतो भवति। ततो द्वावपि पूर्वाभिमुखं गच्छतः। शशिः शीघ्रगत्या प्रत्यहं गत्यन्तरेणाग्रतो याति। एवं गच्छंश्चन्द्रकला-२१६०० तुल्यमन्तरं यदा भवति तदा पुनः उभयोर्योगः। तयोः कालयोरन्तरालं चान्द्रमासः। तत्प्रमाणमनुपातेन—

चन्द्रगतिः — सूर्यगतिः = गत्यन्तरम्।

$$\frac{\text{१ सावनदिनम्} \times \text{२१६०० कलाः}}{\text{गत्यन्तरम्}} = \text{चान्द्रमासे सावनदिनानां संख्या।}$$

चान्द्रमासे २९ दिनानि, ३१ घटिका, ५० पलानि भवन्ति सावनमानेन।

**नाक्षत्रमानम्**

नक्षत्रमण्डलस्यैकं परिभ्रमणं नाक्षत्रं दिनमुच्यते।[२] यथा—अश्विनीसंयुक्ता पूर्णमासी यस्मिन् मासे स आश्विनमासः, कृतिकायुतः कार्तिक इत्यादयः। अनेन प्रकारेण द्वादशमासा भवन्ति। कार्तिकमासादीनां पूर्णिमासु कृत्तिकादि द्वयं द्वयं नक्षत्रयोगेन मासा भवन्ति। कार्तिकादिगणनया आश्विन-भाद्रपद-फाल्गुनमासेषु त्रयं त्रयं नक्षत्राणां संयोगैर्मासा भवन्ति। यथा—

| | | |
|---|---|---|
| १. | चैत्रः | चित्रास्वाती |
| २. | वैशाखः | विशाखाऽनुराधा च |
| ३. | ज्येष्ठः | ज्येष्ठा मूलश्च |
| ४. | आषाढः | पूर्वाषाढा, उत्तराषाढा च |
| ५. | श्रावणः | श्रवणः धनिष्ठा च |
| ६. | भाद्रपदः | शतभिषा, पूर्वभाद्रपदा, उत्तराभाद्रपदा च |

१. सि.शि., म.वा., श्लो.९।
२. भचक्रभ्रमणं नित्यं नाक्षत्रं दिनमुच्यते।
नाक्षत्रनाम्ना मासास्तु ज्ञेयाः पर्वान्तयोगतः।।
कार्तिकादिषु संयोगे कृत्तिकादि द्वयं द्वयम्।
अन्त्योपान्त्यौ पञ्चमश्च त्रिधा मासास्त्रयः स्मृताः।। (सू.सि. १४,१५-१६)

| | | |
|---|---|---|
| ७. | आश्विन: | रेवती, अश्विनी, भरणी च |
| ८. | कार्तिक: | कृतिका रोहिणी च |
| ९. | मार्गशीर्ष: | मृगशिरा, आर्द्रा च |
| १०. | पौष: | पुनर्वसु: पुष्यश्च |
| ११. | माघ: | आश्लेषा मघा च |
| १२. | फाल्गुन: | पूर्वाफाल्गुनी, उत्तराफाल्गुनी हस्तश्च। |

एकनक्षत्रस्योदयात् पुनस्तस्य नक्षत्रस्योदयपर्यन्तं नाक्षत्रं दिनम्। नाक्षत्रदिनमानमार्क्षषष्टिघटिकामितं भवति। स्पष्टरूपेण नाक्षत्रदिनमानम् = ५९ घटिका ५० पलानि १० विपलात्मकं भवति।

नक्षत्रदिवसस्य गणनारम्भो मेषसम्पाताद् भवति। नाक्षत्रदिनञ्च मेषसम्पातानुक्रमिकोल्लङ्घनद्वयमध्यवर्तिकालावधि; परन्तु इदमहो मध्यमसौराह्नात् किञ्चिदल्पमर्थाद् यद्यथा मेषसम्पातो याम्योत्तरवृत्तं मध्यमसौरमध्याह्ने उल्लङ्घयति, तर्हि श्व: स याम्योत्तरवृत्तं मध्यं सौरमध्याह्नात् किञ्चित् पूर्वमुल्लङ्घयिष्यति। इदञ्च वेधेन निर्णीयते। भिन्नतेयं भुव: सूर्य: परित: परिभ्रमणादेव। स्पष्टार्थं निम्नाङ्कितं चित्रं द्रष्टव्यम्—




चित्रे 'अ'स्थानाय अद्य नाक्षत्रमध्याह्न: सौरमध्याह्नसम:, अर्थात् सूर्यं प्रति रेखा, मेषसम्पातं प्रति रेखा एकैव। श्वो भुव: सूर्यं परितो भ्रमणशीलत्वात् कोणीयगतेश्च प्रतिदिनमेकांशमितत्वादंशैकमितकोणीयान्तरे भविष्यति, अर्थात् सूर्यं प्रति कर्षिता रेखा मेघसम्पातप्रोतरेखाया अंशैकमितकोणीयान्तरे भविष्यति (द्वे मेषसम्पातप्रोतरेखे समानान्तरे एव मेषसम्पातबिन्दो: सुदूरवर्तित्वाद्) अत एव 'अ'

स्थानं सौरमध्याह्नं नाक्षत्रमध्याह्नात् पश्चाद् लभ्यते, अर्थाद् नाक्षत्रमध्याह्नं सौरमध्याह्नात् पूर्वं भवति[१]।

यतः पृथिव्यंशैककोणं स्वाक्षभ्रमणे प्रायः $\frac{२४ \times ६०}{३६०} = ४$ मिनटात्मक-कालेन गच्छति। अत एव नाक्षत्रदिनं सावनदिनात् ४ मिनटात्मकं न्यूनं भवति। नाक्षत्रमध्याह्नं सावनमध्याह्नात् ४ मिनटात्मककालेन पूर्वं भवति।

**सावनमानम्**

रवेरेकस्मादुदयाद् द्वितीयमुदयं यावत् सावनं दिनं प्रकीर्तितम्। अर्थात् सूर्यस्योदयद्वयान्तर्वर्ती कालः सावनं दिनं भवतीति। सर्वत्र दिनानां व्यवहारः सावनमानेनैव भवति। यज्ञकालस्य सूतकस्य चान्द्रायणव्रतस्य दिनमासाब्दपतीनां च निर्णयोऽपि सावनमानेन भवति। ग्रहाणां दैनन्दिनी मध्यमा गतिरप्युक्तमानेन ग्राह्या भवति[२]।

सूर्यस्य मध्यमगतिमानेन मध्यमसावनदिनमानम्, तथा च स्पष्टगतिमानेन स्पष्टसावनदिनमानं प्रकीर्तितम्। अत एव सावनात्मकाहर्गणसाधनान्तरं भास्करोक्तम्—'दशशिरः पुरि मध्यमभास्करे क्षितिजसन्निधिगे सति भास्करः'[३]। एकस्मिन् सौरवर्षे कति सावनदिनानि भवन्त्येतदर्थं भास्कराचार्यः सावनदिनोत्पत्तौ एवमाह वासनाभाष्ये—'अथ समायां भूभावभीष्टकर्कटकेन त्रिज्यामिताङ्कैरङ्कितेन वृत्तं दिगङ्कितं भगणांशैश्चाङ्कितं कृत्वा तत्र प्राचीचिह्नाद्दक्षिणतो नातिदूरे प्रदेशे उत्तरेऽयने वृत्तमध्यस्थितेन कीलेन रवेरुदयो वेध्यः। ततोऽनन्तरं वर्षमेकं रव्युदया गणनीयाः। ते च पञ्चषष्ट्यधिकशतत्रय तुल्या (३६५) भवन्ति। तत्रान्तिमोदयः पूर्वोदयस्थानादासन्नो दक्षिण एव भवति। तयोरन्तरं विगणय्य ग्राह्यम्। ततोऽन्यस्मिन् दिने पुनरुदयो वेध्यः, स तु पूर्वचिह्नादुत्तरत एव भवति। तदप्युत्तरमन्तरं ग्राह्यम्। ततोऽनुपातः—यद्यन्तरद्वितयकलाभिरेकीकृताभिः षष्टि—घटिका लभ्यन्ते, तदा दक्षिणेनान्तरेण किमिति। अत्र लभ्यन्ते पञ्चदशघाकास्त्रिंशत् पलानि सार्धानि द्वाविंशतिर्विपलानि १५/३०/२२/३० आभिर्घटीभिः सहितानि

---

१. अर्वाचीनं ज्योतिर्विज्ञानम्, पृ. ४१।

२. उदयादुदयं भानोः सावनं तत्प्रकीर्त्यते।
सावनानि स्युरेतानि यज्ञकालविधिस्तु तैः।।
सूतकादिपरिच्छेदो दिनमासाब्दपास्तथा।
मध्यमाग्रहभुक्तिश्च सावनेन प्रकीर्त्यते।। (सूर्यसिद्धान्ते, १४.१८-१९)

३. सि.शि. ग्रहानयनाध्याये, श्लो.४।

पञ्चषष्ट्यधिकशतत्रयतुल्यानि सावनदिनान्येकस्मिन् रव्यब्दे भवन्ति ३६५/१५/३०/२२/३० ततोऽनुपातः। यद्यैकेन वर्षेणैतावन्ति कुदिनानि तदा कल्पवर्षैः किमिति। एवं ये लभ्यन्ते ते भवन्ति सावनदिवसाः कल्पे। उक्तञ्च गोलाध्याये—

पञ्चाङ्गरामास्तिथयः खरामाः सार्धद्विदस्रा कुदिनाद्यमब्दे।
अस्यार्कमासोऽर्कलवः प्रदिष्टस्त्रिंशद्दिनः सावनमास एव[१]।।

एकस्मिन् सौरवर्षे सावनदिनमानं ३६५ दिनानि १५ घटिकाः ३१.५ पलान्यस्ति; परन्तु सूक्ष्मवेधेन सावनदिनमानं ३६५ दिनानि १५ घटिकाः २२.९ पलान्यायाति। भास्करोक्तसावनदिनमानमधिकतरं सूक्ष्मवेधसिद्धमानासन्नं वर्तते।

## सूक्ष्मवर्षानयनम्

पिंकार्ड-फ्रैञ्चज्योतिर्विदा सूर्यप्रश्वा-नक्षत्रयोरन्तरं वेधसिद्धम् १ अप्रैल, १६६९ तमे दिने पारिसमध्यम ०/३/४७ आवर(घण्टा)समये ९८/५९/३६ अंशाद्यं लब्धम्, कालान्तरेण लाकेलनाम्ना १७५४ अप्रैल २/३ दिनयोर्वेधेन तयोर्मध्ये पूर्वोक्तं ९८/५९/३६ अंशाद्यमन्तरमेव कदा भवतीति गणितेन अप्रैल-द्वितीयदिने ११ अंश १० मिनट ४५ सेकेण्डतुल्यः कालः साधितः। उक्तवेधयोर्मध्ये २७७५९ दिनं ११ घण्टा ६ मिनट ५८ सेकेण्डमितः कालो गतः। यथा खिष्टवर्षे १७४५-१६६९ = ७६ प्रश्वानक्षत्रं परितः सूर्यप्रदक्षिणाः ७६/१/११/६/५८ वर्षादिकाले पूरिताः। ७६ वर्षेषु ५८ वर्षाणि ३६५ दिनात्मकानि। १८ वर्षाणि च ३६६ दिनात्मकानि भवन्ति, तस्मात्—

| वर्षाणि | | दिनानि | | अहर्गणः |
|---|---|---|---|---|
| ५८ | × | ३६५ | = | २११७० |
| १८ | × | ३६६ | = | ६५८८ |
| ७६ अब्देषु | | | = | २७७५८ अहर्गणः |

२७७५८ अहर्गणः + १/११/६/५८ = २७७५९/११/६/५८ - ७६ प्रदक्षिणा दिवसाः। अयमुक्तदिनगणः ७६ नक्षत्रवर्षमानं भवितुमर्हति। एवमसकृत्कृत्वा लब्धानां मध्यमानं सूक्ष्मवर्षमानं ३६५/१५/२२.९ दिनात्मकं भवति। अतः सौरोक्तमानवर्षमानं सार्धाष्टपलैर्दीर्घतरमित्युपपन्नम्[२]।

---

१. सि.शि. मध्यमगतिवासना, श्लो.८।

२. केतकीग्रहगणितभाष्ये, पृ. २८।

**बार्हस्पत्यमानम्**

वैशाखादिषु कृष्णे च योगात् पञ्चदशे तिथौ।
कार्तिकादीनि वर्षाणि गुरोरस्तोदयात् तथा[१]।।

'बृहस्पतेर्मध्यमराशिभोगात् संवत्सरं संहितिकाः वदन्ती'ति[२] सिद्धान्तशिरोमणेर्वचनम्। कल्पसावनदिनैः कल्पयुगभगणास्तदा एकेन सावनदिनेन किमित्यनुपातेन फलमेकस्मिन् दिने गुरोर्गतिमानम्। गुरोर्मध्यमगतिमानम् = ५ कला। यदि गुरोर्मध्यमगतिमाने एकं दिनमुपलभ्यते, तदा एकस्यां राशौ किमिति? फलं गुरोः राशिभोगकालः सौरदिवसेषु। अनुपातः प्रदर्श्यते—

$$\frac{\text{१ दिनम्} \times \text{१ राशौ}}{\text{५}'} = \frac{\text{१} \times (\text{१} \times \text{३०} \times \text{६०})}{\text{५}'} = \frac{\text{१} \times \text{१८००}'}{\text{५}'} = \frac{\text{१८००}'}{\text{५}'} = \text{३६० दिनानि}$$

षष्ट्युत्तरत्रिंशतं दिनात्मकमेकं सौरवर्षं भवति। गुरोर्द्वितीयराशिप्रवेशस्य यः समयो भवति, स एव कालो द्वितीयसंवत्सरस्यापि प्रवेशकालो भवतीत्याचार्या वदन्ति। यद्येकस्मिन् वर्षे स्फुटगुरोरेकराशिसञ्चारो भवेत्, तदासौ शुद्धसंवत्सरो जायते। एकस्मिन्नेव वर्षे यदि गुरुर्द्विराशिचारं कृत्वा पुनर्वक्रो भवति, पूर्वराशिं चासौ नैति तदा तु 'लुप्तसंवत्सरो महातिचारश्च' इति कथ्यते। यदि द्विराशिचारं कृत्वा वक्रितः पुनः पूर्वराशिमायाति, तदा 'अतिचारः' कथ्यते। उक्तञ्च बृहत्संहितायाम्—

यत्रैकराशिसञ्चारो मार्गगत्या गुरोर्भवेत्।
शुद्धसंवत्सरः स स्यात् सर्वेषां च शुभप्रदः।।
यत्र द्विराशिसञ्चारो ह्यतिचारः स कथ्यते।
लुप्ताब्दश्च यदाब्दान्ते पूर्वं भं नैति वक्रितः।।
महातिचारसंज्ञोऽसौ सर्वलोकभयङ्करः[३]।।

स्फुटगुरोः सञ्चारो यस्मिन् वत्सरे न भवति, स 'अधिसंवत्सरः'। अस्मिन् विषये ज्योतिर्विदाभरणे कालिदासेन कथितम्, यथा—

गुरुसङ्क्रमयुग्मवत्समा गदिता सा ननु लुप्तसंज्ञिका।
विबुधै रहिता शुभे तु याऽधिसमागीष्पतिसङ्क्रमोज्झिता।।[४]

---

१. सूर्यसिद्धान्ते मानाध्याये, श्लो. १७; २. सि.शि.,ग.म. का., श्लो.३०।
३. उद्धृतं दिग्देशकालज्ञाने, पृ. १७७; ४. ज्योतिर्विदाभरणे-८.१२।

एषां शुद्ध-लुप्तमहातिचार-लघ्वतिचाराधिसंवत्सराणाञ्च विशेषविचारः संहिताग्रन्थेषूपलभ्यते।

विजयादिसंवत्सराणां प्रारम्भो गुरुसंवत्सरे प्राप्यते। तस्य कारणमस्ति यत् सृष्ट्यादौ विजयसंवत्सरस्य प्रारम्भकाल आसीत्। अतो गुरुसंवत्सरेषु विजयादीनां षष्टिसंवत्सराणां गणना क्रियते। साम्प्रतं व्यवहारे प्रभवादिषष्टिसंवत्सराणां प्रयोगो दृश्यते। अस्य कारणमस्ति यत् शकादौ प्रभवसंवत्सरस्य प्रभावोऽभवत्। तस्मात् कालात् प्रभवादयः संवत्सरा व्यवहारे पञ्चाङ्गादिषु दृश्यन्ते। अथात्र प्रसङ्गवशात् प्रभवादिसंवत्सराणां नामानि क्रमश्च प्रदर्श्यते। प्रसङ्गेऽस्मिन्नग्निपुराणस्य १३९ तमाऽध्यायस्य १-१३ श्लोकाः संवत्सराणां फलादिकार्थमवलोकनीया। प्रभवादयो संवत्सरास्त्रिषु वर्गेषु विभक्ताः सन्ति। आदितो विंशतिपर्यन्तं ब्रह्मविंशतिका, एकविंशतितश्चत्वारिंशत्पर्यन्तं विष्णुविंशतिका, एकचत्वारिंशततः षष्टिपर्यन्तं रुद्रविंशतिका इति।[१] स्पष्टार्थमधो द्रष्टव्यम्।

**ब्रह्मविंशतिका**—१. प्रभवः, २. विभवः, ३. शुक्लः, ४. प्रमोदः, ५. प्रजापतिः, ६. अङ्गिरा, ७. श्रीमुखः, ८. भावः, ९. युवा, १०. धाता, ११. ईश्वरः, १२. बहुधान्यः, १३. प्रमाथी, १४. विक्रमः, १५. वृषः, १६. चित्रभानुः, १७. सुभानुः, १८. तारणः, १९. पार्थिवः, २०. व्ययः।

**विष्णुविंशतिका**— २१. सर्वजित्, २२. सर्वधारी, २३. विरोधी, २४. विकृतः, २५. खरः, २६. नन्दनः, २७. विजयः, २८. जयः, २९. मन्मथः, ३०.दुर्मुखः, ३१. हेमलम्बः, ३२. विलम्बः, ३३. विकारी, ३४. शार्वरी, ३५. प्लवः, ३६. शुभकृत्, ३७. शोभकृत्, ३८. क्रोधी, ३९. विश्वावसुः, ४०. पराभवः।

**रुद्रविंशतिका**—४१. प्लवङ्गः, ४२. कीलकः, ४३. सौम्यः, ४४. साधारणः, ४५. विरोधकृत्, ४६. परिधावी, ४७. प्रमादी, ४८. आनन्दः, ४९. राक्षसः, ५०. नलः, ५१. पिङ्गलः, ५२. कालयुक्तः, ५३. सिद्धार्थी, ५४. रौद्रः, ५५. दुर्मतिः, ५६. दुन्दुभिः, ५७. रुधिरोद्गामी, ५८. रक्ताक्षः, ५९. क्रोधनः, ६०. क्षयः।

**पैत्र्यमानम्**

सकृदुद्गतमब्दार्धं पश्यन्त्यर्कं सुरासुराः।
पितरः शशिगा पक्षं स्वदिनं च तरा भुवि।।[२]

---

१. मानसागरी, पृ. ८; २. सूर्यसिद्धान्ते, १२.७४।

एकचन्द्रमासतुल्यं पित्र्यदिनं भवति। चन्द्रबिम्बपृष्ठवासिनां पितॄणां कृते पञ्चदशदिनानि यावत् सूर्यदर्शनं भवति, अर्थात् पञ्चदशदिनात्मकं दिनं पञ्चदशदिनात्मिका च रात्रिर्भवति। द्वयोः पक्षयोः संयोगेन एकचान्द्रमासमितमहोरात्रं भवति। अमुं विषयमाश्रित्य भास्कराचार्येण सिद्धान्तशिरोमणौ गोलाध्याये त्रिप्रश्नाधिकारे पितृदिवसस्योदयास्तादिकालानामपि विवेचनं कृतम्। यथा—

विधूर्ध्वभागे पितरो वसन्तः स्वाधः सुधादीधितिमामनन्ति।
पश्यन्ति तेऽर्कं निजमस्तकोर्ध्वे दर्शे यतोऽस्माद्द्युदलं तदैषाम्।।
भार्धान्तरत्वान्न विधोरधस्थं तस्मान्निशीथः खलु पौर्णमास्याम्।
कृष्णे रविः पक्षदलेऽभ्युदेति शुक्लेऽस्तमेत्यर्थत एव सिद्धम्।।[1]

अत्रायमाशयो यत् चन्द्रस्योर्ध्वभागे पितरो वसन्ति। ते (चन्द्रपृष्ठनिवासिनः पितृगणाः) च सुधादीधितिं चन्द्रं स्वाध आमनन्ति। तेऽमान्ते रविं निजमस्तकोर्ध्वे पश्यन्ति, यतो मस्तकोपरि सूर्यदर्शनादमान्तकालः पितॄणां दिनार्धकालो वर्तते। एवञ्च पूर्णान्तकाले सूर्यः पितॄणामधो याम्योत्तरवृत्ते भवतीति। अत एव पूर्णिमान्तकालस्तेषां निशार्धकालः। पूर्णिमान्ते चन्द्रः सूर्यात् षड्भान्तरे स्थितो भवति। यतो दर्शे द्युदलं पूर्वं च निशार्धमिति हेतोः। पितॄणां कृते कृष्णपक्षदले सूर्यस्योदयो भवति शुक्लपक्षदले चास्तम्। अर्थात् कृष्णपक्षस्य च सार्धसप्तम्यां तिथौ सूर्यास्तकाल इति भास्कराचार्यस्याभिप्रायः। अयमभिप्रायो निम्नचित्रेण स्पष्टो भवति।




भास्करोक्तिस्तत्र स्थूलदृष्ट्या समीचीना वर्तते। तस्य सूक्ष्मं विवेचनं चैवम्—यतो यदा सूर्यचन्द्रौ राश्याद्यवयवैः समानौ, तदा अमान्तकालः। यदि

१. सि.शि., गो.त्रि.वा., श्लो. १३-१४।

तदवसरे संयोगाच्चन्द्रशराभावस्तदैकस्मिन्नेव सूत्रे सूर्यचन्द्रौ भवेताम्। अमान्ते सूर्यश्चन्द्रपृष्ठोपरि तिष्ठति। तदानीं पितृणां मध्याह्नकालो भवति। मध्याह्नकाल एव पितृणां दिनदलमिति स्फुटम्। परं शरविशिष्टामान्तकालः पितृणां मध्याह्नकालो न भवति। अस्मिन् विषये विस्तृतरूपेण चन्द्रगोलविमर्शे कथयन्त्याचार्याः श्रीरामचन्द्रपाण्डेयमहोदयाः—शरविशिष्टामान्ते यद्ययनसन्धिकालश्चेत्, तदानीं कदम्बप्रोतध्रुवप्रोतवृत्तयोरैक्यात् पितृणां याम्योत्तरवृत्त एव रविः स्थास्यति खस्वस्तिकादितरबिन्दौ। याम्योत्तरवृत्ते कुत्रापि स्थित्या दिनार्धकालः स्यादेव। अयनसन्धिकालेतरकाले ध्रुवप्रोतवृत्तकदम्बप्रोत्तवृत्तयोर्भिन्नत्वात् तदानीममान्ते न दिनार्धकाल इति। अतोऽमान्ते निजमस्तकोर्ध्वे पितरो रविं सर्वदा पश्यन्ति किं वा अमान्ते दिनार्धकालः पितृणामिति सर्वथा न समीचीनम्। स्थूलदृष्ट्या व्यवहारार्थमङ्गीकर्तुं शक्यते, वास्तवार्थं तु अग्रे विचारः करिष्यते। पौर्णमास्याञ्च भार्धान्तरत्वाद् रवेरधःस्थित्या निशीथः खलु जायते पितृणाम्। अत्रापि किञ्चिद् विचारः क्रियते—

अत्रापि चेत् चन्द्रशराभावविशिष्टः पूर्णान्तस्तदानीमपि रविचन्द्रयोरेकसूत्रे स्थित्या, चन्द्राच्च षड्भान्तरे रविस्तदानीं चन्द्राधो भूः, भूमेरधः पितृणां याम्योत्तरेऽधः खस्वस्तिके रविः स्थास्यति। एवमस्यां स्थितौ पितृणां निशार्धकालेति सिद्धमेव पौर्णमास्याम्। चन्द्रशरविशिष्टपूर्णान्ते च अयनसन्धिकालश्चेत्, तदानीं ध्रुवप्रोतकदम्बप्रोतयोरैक्याद् ध्रुवप्रोतवृत्तस्य च चन्द्रकेन्द्रानुरोधेन याम्योत्तरवृत्तत्वात् पितृणामधो याम्योत्तरवृत्तेऽधः खस्वस्तिकादितरबिन्दौ रविः स्थास्यति। तर्हि अधो याम्योत्तरवृत्तस्य कस्मिन्नपि बिन्दौ रवेः स्थित्या रात्र्यर्धकालो भवत्येव। अतश्चन्द्रशरविशिष्टपूर्णान्ते अयनसन्धिकालावस्थायामधो याम्योत्तरवृत्ते स्थितत्वाद्रवेः पितृणां पौर्णमास्यां निशार्द्धकालः सिद्धः। अयनसन्धिकालेतरकाले दिनार्धवन्निशार्धकालोऽपि न भवितुमर्हति पौर्णमास्याम्[१]।

शरविशिष्टामान्ते अयनसन्धिकालेतरावस्थायां पितृणां मध्याह्नकालोऽमान्तकालाद् भिन्नकाले भवति। अस्यानयनस्य विधिरत्र प्रस्तूयते—सदा सूर्योऽमान्तकाले याम्योत्तरवृत्ते न तिष्ठति। चन्द्रशरसत्त्वे चन्द्रोपरिगतध्रुवप्रोतधरातले चन्द्रगोलीयं याम्योत्तरवृत्तम्। तद्वृत्तधरातलतो भिन्नध्रुवप्रोतवृत्ते सूर्यः। तस्माच्चन्द्रशरसत्त्वे अमान्तकाले सूर्यश्चन्द्रगोलीययाम्योत्तरवृत्ततो नतो भवति। रविनतकालस्य ज्ञानं यदि भवेत्, तर्हि शरविशिष्टामान्ते पितृणां मध्याह्न-दिनार्ध-निशार्धकालानां ज्ञानं स्पष्टरूपेण भविष्यति। अयमभिप्रायो निम्नचित्रेण स्पष्टो भवति—

---

१. चन्द्रगोलविमर्शः, पृ. २००।

## क्षेत्रपरिचयः

ख = चन्द्रखमध्यम् (पितृणां खमध्यम्), ध्रु = ध्रुवस्थानम्, सू = रविस्थानम्, ध्रुख = पितृणां याम्योत्तरवृत्तम्; ध्रुसू = सूर्यगतध्रुवप्रोतवृत्तम्। ध्रुखसू चापजात्ये—ध्रुख = लम्बांशाः, ध्रुसू = रविद्युज्याचापांशाः, सूख = रविनतांशाः। यदि एतेषामवयवानां ज्ञानं भवेत्, तदा चापजात्यसिद्धान्तेन ध्रुवसंलग्नकोणस्य ज्ञानमपि भवितुं शक्यते, स एव कोणो रविनतकालरूपो वर्तते। एतेषामवयवानां ज्ञानं क्रियते—

इत्थमत्र चन्द्रगोलीय-रविनतांश-द्युज्याचापांश-लम्बांशानां ज्ञानमपेक्षितमस्ति।




**लम्बांशमानम्**

## क्षेत्रपरिचयः

भू = भूकेन्द्रम्, पखत = चन्द्रकेन्द्रीययाम्योत्तरवृत्तम्, च = चन्द्रकेन्द्रम्, ख = खस्वस्तिकम् (पितृणाम्), पख = लम्बांशाः (चन्द्रगोलीय), प = परिणत-ध्रुवस्थानम्, ध्रुच = चन्द्रद्युज्याचापांशाः, ध्रुवस्थानस्य (ध्रुवताराया:) अनन्तदूरत्वात् चध्रु, भूध्रु रेखे समानान्तरे। अतो रेखागणितेन (१ अध्यायः २९प्र)।∵ भूध्रु-चध्रु-रेखे समानान्तरे,∴∠ ध्रुभूच =∠ खचप। अर्थाद् ध्रुच- चापम् = पख-चापम्। चन्द्रद्युज्याचापांशमानं चन्द्रगोलीयलम्बांशमानेन समम्। अतो लम्बांशज्ञानं जातम्।

**नतांशसाधनम्**



भू = भूकेन्द्रम्, च = चन्द्रबिम्बकेन्द्रम्, सू = सूर्यः, ध्रु = ध्रुवः, ख = चन्द्रगोलीयखमध्यम्, प = परिणतरविः (चन्द्रगोलीयरविः), चसू = बिम्बान्तरसूत्रम्, भूसू = रविकर्णः, भूच = चन्द्रकर्णः।

∠ चभूस = स्पष्टान्तरांशाः, ∠ खचसू = सितांशाः, त्रिभुज भूचसू-अनुपातः—

$$\frac{\text{ज्या} \angle \text{ सू भू च} \times \text{भू सू}}{\text{सू च}} = \text{ज्या} \angle \text{ भू च सू}$$

ज्या ∠ भूचसू = ज्या ∠ सूचख( ∵ कोणज्याकोणोनभार्धांशज्यातुल्या भवति)।

$$\therefore \frac{\text{स्पष्टान्तरांशाः} \times \text{रविकर्णः}}{\text{बिम्बान्तरसूत्रम्}} = \text{ज्या} \angle \text{ सू च ख} = \text{सितांशज्या अस्याश्चापम्} =$$

प ख, रविनतांशाः चन्द्रगोलीयाः।

**द्युज्याचापांशज्ञानम्**



क्षेत्रम्—५

सू = सूर्यः, ख = खमध्यम् (पितृणाम्), च = चन्द्रकेन्द्रम्, भू = भूकेन्द्रम्, चसू = बिम्बान्तरसूत्रम्, चत = चन्द्रगोलीयनाडीवृत्तम्, सून = रविक्रान्तिज्या, चल = चन्द्रक्रान्तिज्या, भूच = चन्द्रकर्णः, भून = भूगोलीयनाडीवृत्तम्, चअ = चन्द्रगोलीयत्रिज्यासूत्रम्, अक = चन्द्रगोलीयक्रान्तिज्या। कखअग = याम्योत्तरवृत्तम्, रविक्राज्या = चन्द्रक्राज्या = सूत (संस्कारज्या)।

Δच सू तΔ च अ क अनयोः साजात्यादनुपातः—

$$\frac{\text{सू त} \times \text{च अ}}{\text{च सू}} = \text{अ क} = \frac{\text{संस्कारज्या} \times \text{त्रिज्या}}{\text{बिम्बान्तरसूत्रम्}} = \text{चन्द्रगोलीयक्राज्या}$$

अस्याश्चापम् = चा = रविक्रान्तिः, ९०-चाप = द्युज्याचापं, चन्द्रगोलीयम्। चापीयावयवत्रयाणां ज्ञानं सम्पन्नं जातम्।

तथात्वे लम्बांशनतांशद्युज्याचापांशेति अवयवत्रयाणां ज्ञाने सति चापजात्यसिद्धान्तेन ध्रुवसंलग्नं ∠ सुधुख-कोणस्थं ज्ञानं सुगमम्। अयमेव कोणो

नतकाल:। अस्य कोणस्य मानं चापीयत्रिकोणमित्या: 'भूकोटिजीवा त्रिगुणा हतोना' इत्यादिसिद्धान्तेन सुकरम्। अतो द्युज्याचापं लम्बांशान्तर्गतकोणमानं नतकालांशसममायाति। नतकालांशान्तरितोऽमान्तात् पितॄणां दिनार्धकाल इति।

अत: पितृ-अहोरात्रस्य सन्दर्भे, भास्कराचार्यस्य विचार: स्थूलं प्रतिभाति। यथा स्पष्टम्—ख = खस्वस्तिकम्, भू = भूकेन्द्रम्, च = चन्द्रकेन्द्रम्




नचट = चन्द्रकक्षा, लंसूंखसूल = रविकक्षा, लंल = गर्भक्षितिजम्, भू सू = रविकर्ण:; भू च = चन्द्रकर्ण; सू च चन्द्रमण्डलीयगर्भक्षितिजम्, सूं = सूर्य: उदयकालिक:, सू = अस्तकालिक: सूर्य:। दिनरात्रिव्यवस्था गर्भक्षितिजानुरोधेनेति। अतोऽत्र सूं बिन्दौ स्थिते सूर्ये तिथ्यानयनम्—

भू सूं च अनुपात:—

$$\frac{\text{ज्या} \angle \text{भू च सूं} \times \text{भू च}}{\text{भू सू}} = \text{ज्या} \angle \text{भू सू च} = \frac{\text{त्रिज्या} \times \text{चन्द्रकर्ण:}}{\text{रविकर्ण:}}$$

ज्या ∠ भू सूं च = ज्या ∠ सूं भू लं, अस्याश्चापम् = च = सूं लं।

२७० + चाप = सूर्योदयकालिकान्तरांशा:।

द्वादशभक्तेन तिथयो भवन्तीति नियमात्

$$\frac{\text{२७० + चाप}}{\text{१२}} = \text{सूर्योदयकालिकास्तिथय:}$$

$$\frac{\text{२७०}}{\text{१२}} + \frac{\text{चा}}{\text{१२}} = \frac{\text{४५}}{\text{२}} + \frac{\text{चा}}{\text{१२}}$$

$$= \text{२२} + \frac{\text{१}}{\text{२}} + \frac{\text{चा}}{\text{१२}} = \text{१५} + \text{७} + \frac{\text{१}}{\text{२}} + \frac{\text{चा}}{\text{१२}} = \text{सूर्योदयकालिकतिथि:।}$$

अतो भास्कराचार्यानुसारेण कृष्णपक्षस्य सार्द्धसप्तम्यां सूर्योदयो न भवति पितृणां कृते; परन्तु सार्द्धसप्तमीतः चापद्वादशांशाधिके काले सूर्योदयो भवति।

सूर्यास्ते—

$\Delta$भू च सू अनुपातः—

$$\frac{\text{ज्या} \angle \text{भू च सू} \times \text{भू च}}{\text{भू सू}} = \text{ज्या भू सू च} = \frac{\text{त्रिज्या} \times \text{चन्द्रकर्णः}}{\text{रविकर्णः}}$$

ज्या $\angle$ भू सू च = ज्या सू भू ल, अस्याश्चापम् = सू ल = चापम्

९० − चा = सूर्यास्तकालिकान्तरांशाः, द्वादशेन भक्तेन $\frac{\text{९० − च}}{\text{१२}}$ = अस्ततिथिः

$$\frac{\text{९०}}{\text{१२}} - \frac{\text{चा}}{\text{१२}} = \text{७}\frac{\text{६}}{\text{१२}} - \frac{\text{चा}}{\text{१२}} = \text{७}\frac{\text{१}}{\text{२}} - \frac{\text{चा}}{\text{१२}}$$ अस्तकालिकतिथिः।




श्रीमता भास्कराचार्येण पक्षदले पितृणां कृते सूर्योदयास्तमानं कल्पितम्, तन्न समीचीनम्। उपरिनिर्दिष्टक्षेत्रदर्शनेन शुक्लपक्षस्य सार्धसप्तमीतिथेः प्राक् $\frac{\text{चा}}{\text{१२}}$ तुल्यतिथिमाने सूर्यास्तो भवतीति।

पितृणामहोरात्रे दिनार्ध-निशार्ध-सूर्योदयास्तकालानां निर्देशो भास्कराचार्येण सामान्यव्यावहारिकदृष्टिमादाय कृत इति कथितुं शक्यते।

अत्राचार्यरामचन्द्रमहोदयेन 'चन्द्रगोलविमर्शे' पितृणां समयविभागचक्रं कृतम्, तन्मया प्रस्तूयते। यथा—

| तिथयः | कालः | पितृणां घण्टामिनटात्मकः कालः |
|---|---|---|
| शुक्लपक्षस्य तिथयः | | |
| १ | मध्याह्नः | १२.४८ |
| २ | ,, | १.३६ |

| | | |
|---|---|---|
| ३ | ,, | २.२४ |
| ४ | ,, | ३.१२ |
| ५ | अपराह्ण: | ४.०० |
| ६ | ,, | ४.४८ |
| ७ | ,, | ५.३६ |
| ८ | सायं | ६.२४ |
| ९ | ,, | ७.१२ |
| १० | रात्रि: | ८.०० |
| ११ | ,, | ८.४८ |
| १२ | ,, | ९.३६ |
| १३ | ,, | १०.२४ |
| १४ | ,, | ११.१२ |
| १५ | मध्यरात्रि: | १२.०० |

| कृष्णपक्षस्य तिथय: | | |
|---|---|---|
| १ | मध्यरात्रि: | १२.४८ |
| २ | ,, | १.३६ |
| ३ | ,, | २.२४ |
| ४ | मध्यरात्रि: | ३.१२ |
| ५ | उष: | ४.०० |
| ६ | ,, | ४.४८ |
| ७ | ,, | ५.३६ |
| ८ | प्रात: | ६.२४ |
| ९ | ,, | ७.१२ |
| १० | दिवस: | ८.०० |
| ११ | ,, | ८.४८ |
| १२ | ,, | ९.३६ |
| १३ | ,, | १०.२४ |
| १४ | ,, | ११.१२ |
| ३० | मध्याह्न: | १२.०० |

**दैवमानम्**

सूर्यस्य द्वादशराशिभोगकाल एक: सौरवर्षोऽस्ति। सौरवर्षमेव देवासुराणामहोरात्रमस्ति; किन्तु यद्देवानां दिनं भवति, सा एवासुराणां रजनी, असुराणां दिनं देवानां रात्रि:। अस्मिन् विषये भास्करोक्तम्—

रवेश्चक्रभोगोऽर्कवर्षं प्रदिष्टं द्युरात्रं च देवासुराणां तदेव[१]।

सूर्यसिद्धान्ते—

सुरासुराणामन्योन्यमहोरात्रं विपर्ययात्।
यत् प्रोक्तं तद् भवेद्दिव्यं मनोर्भगणपूरणात्[२]।।

देवासुराणां क्षितिजवृत्तं नाडीवृत्तं वर्तते। एवमत्र विचार्यते शास्त्रानुसारेण मेरौ (उत्तरीध्रुवस्थानम्) देवानां निवासस्थानम्, असुराणाञ्च सुमेरौ (दक्षिण-ध्रुवस्थानम्) इति। अनयोः स्थानयोर्मध्ये १८० अंशात्मकं दैर्घ्यमानमस्ति। यस्मिन् दिने सूर्यो वसन्तसम्पातबिन्दौ आगच्छति, तद्दिनं विषुवद्दिनं कथ्यते। विषुवद्दिनस्थं रविं देवासुराः स्वक्षितिजवृत्ते पश्यन्ति। क्रान्तिनाडीवृत्तयोः पूर्वसम्पातः सायनमेषः, पश्चिमसम्पातश्च सायनतुलादिबिन्दुः। सायनमेषतुलयोरर्क-सङ्क्रमणमेव विषुवद्दिनमस्ति। अतो द्वयोर्विषुवद्दिनयोः रवेर्भ्रमणं नाडीमण्डले भवति। तेन देवासुराः सूर्यं विषुवद्दिने स्वक्षितिजे पश्यन्ति। विषुवद्वृत्ताद् उत्तरदिशि (उत्तरगोले) मेषादिषडहोरात्रवृत्तानि स्थितानि सन्ति। एतेषु राशिषु भ्रमन्तं सूर्यं देवाः षण्मासपर्यन्तमवलोकयन्ति। यस्मिन् दिने सूर्यो वसन्तसम्पातबिन्दुतः (विषुवद्वृत्तात्) नवत्यंशे स्थितो भवति, तदानीमयं बिन्दुः सूर्यस्य परमक्रान्तिं सूचयति। परमक्रान्तिबिन्दुरेव देवानां मध्याह्नः, दानवानाञ्च मध्यरात्रिर्भवति। यदा सूर्यो विषुवद्वृत्ताद् दक्षिणगोले तुलादिषड्राशिषु भ्रमणं करोति, तदा दानवास्तमर्कं षण्मासपर्यन्तमवलोकयन्ति। दक्षिणगोलेऽपि विषुवद्वृत्ताद् नवत्यंशे स्थितं सूर्यं दानवाः सर्वोन्नतरूपेण खे पश्यन्ति। इयमस्ति सूर्यस्य परमक्रान्तिः।

एवमपि कथितुं शक्यते यत् सायनमेषादौ देवानां सूर्योदयः, दैत्यानाञ्च सूर्यास्तः। मिथुनान्ते देवानां मध्याह्नमसुराणाञ्च मध्यरात्रिः। कन्यान्ते देवानां सूर्यास्तो दैत्यानाञ्च सूर्योदयो भवति। कन्यान्तं तुलादौ दैत्यानां स्पष्टरूपेण सूर्योदयो भवति। धनुरन्ते तेषां मध्याह्नभूर्मीनान्ते च सूर्यास्तो भवतीति। अतः स्पष्टमस्ति यद् नाडीवृत्तमेव देवासुराणां विभाजकः।

**मानुषमानम्**

ज्ञेयं विमिश्रं तु मनुष्यमानं मानैश्चतुर्भिर्व्यवहारवृत्तेः।।
वर्षायनर्तुयुगपूर्वकमत्र सौरान्मासास्तथा च तिथयस्तुहिनांशुमानात्।
यत् कृच्छ्रसूतकचिकित्सितवासराद्यं तत्सावनाच्च घटिकादिकमार्क्षमानात्[३]।।

---

१. सि.शि., कालमानाध्यायः, श्लो. १९; २. सू.सि., मानाध्यायः, श्लो. २०।

३. सि.शि. कालमानाध्याये, श्लो. ३०-३१।

मनुष्यमानं तु मिश्रितमस्ति। अत्रैव व्यवहारे चत्वारि मानानि सन्ति। वत्सरायनर्तुयुगादीनां व्यवहारः सौरमानात् प्रवर्त्तते इहलोके। मासानां तिथीनाञ्च गणना चान्द्रमासाद् भवति। व्रतोपवासचिकित्सितसूतकवासराद्यर्कसावनमानाद् घटिकादिकं नाक्षत्रादेव। एवं सौरचान्द्रसावननाक्षत्रमानैश्चतुर्भिरेभिर्मिश्रितैर्मनुष्यमानं सिद्धम्।

सूर्यसिद्धान्ते मानवमानस्य चर्चा प्राजापत्यमानरूपेणोद्धृताऽस्ति। यथा—

मन्वन्तरव्यवस्था च प्राजापत्यमुदाहृतम्।
न तत्र द्युनिशोर्भेदो ब्राह्मं कल्पः प्रकीर्तितम्[१]।।

मनोः काल एव प्राजापत्यसंज्ञया बोध्यते, तत्र दिननिशयोर्भेदो नास्ति।

**ब्राह्ममानम्**

खखाभ्रदन्तसागरैर्युगाग्नियुग्मभूगुणैः।
क्रमेण सूर्यवत्सरैः कृतादयो युगाङ्घ्रयः।।
स्वसन्ध्यकास्तदंशकैर्निजार्कभागसम्मितैः।
युताश्च तद्युतौ युगं रदाब्धयोऽयुताहताः।।
मनुः क्ष्मानगैर्युगैर्युगेन्दुभिश्च तैर्भवेत्।
दिनं सरोजजन्मनो निशा च तत्प्रमाणिका।।

सन्धयः स्युर्मनूनां कृताब्दैः समा आदिमध्यावसानेषु तैर्मिश्रितैः।
स्याद् युगानां सहस्रं दिनं वेधसः सोऽपि कल्पो द्युरात्रं तु कल्पद्वयम्।।
शतायुः शतानन्द एवं प्रदिष्टस्तदायुर्महाकल्प इत्युक्तमाद्यैः।
यतोऽनादिमानेष कालस्ततोऽहं न वेद्म्यत्र पद्मोद्भवा ये गतास्तान्[२]।।

**स्पष्टार्थं प्रस्तूयते**

एकस्मिन् महायुगे ४३२०००० सौरवर्षाणि भवन्ति। सत्यत्रेताद्वापरकलि-युगानां युगपादानां योगमेकं महायुगमस्ति। एकं सहस्रं महायुगानां ब्रह्मणो दिनं रात्रि-श्चापि एतेषामेव वर्षाणां भवति। अतो ब्रह्मणोऽहोरात्रमानं द्विसहस्रमहायुगानां भवति।

∵१ महायुगम् = ४३२०००० सौरवर्षाणि १०००∴महायुगमानम् = ब्रह्मणो दिवसः।
∴१००० × २ = २००० महायुगानाम् = ब्रह्मणोऽहोरात्रमानम्।
∴४३२००००×२०००= ८६४०००००००० ब्रह्मणोऽहोरात्रम्।

१. सू.सि., मा. श्लो. २१; २. सि.शि., ग.म.का., श्लो. २१-२५।

४ + ३ + २ + १ = १० कृतत्रेताद्वापरकलियुगानां धर्मपादानां योगः,

∵ ४३२०००० सौरवर्षाणि = १ महायुगम्।

$$= \frac{४३२००००\times ४}{१०} = १७२८००० \text{ कृतयुगमानम्।}$$

$$= \frac{४३२०००\times ३}{१०} = १२९६००० \text{त्रेताया मानम्।}$$

$$\frac{४३२००००\times २}{१०} = ८६४००० \text{ द्वापरस्य मानम्।}$$

$$\frac{४३२००००\times १}{१०} = ४३२०० \text{ कलियुगस्य मानम्।}$$

एतेषां योगः = ४३२०००० महायुगप्रमाणम्।

स्वस्वयुगद्वादशांशतुल्यौ सन्ध्यासन्ध्यांशमानौ, यथा—

| | | | | |
|---|---|---|---|---|
| कृतयुगस्य | — | आदौ सन्ध्यावर्षाणि | = | १४४००० |
| | | शुद्धयुगमानम् | = | १४४०००० |
| | | अन्ते सन्ध्यांशवर्षाणि | = | १४४००० |
| त्रेतायाः | — | आदौ सन्ध्यावर्षाणि | = | १०८००० |
| | | शुद्धयुगमानम् | = | १०८०००० |
| | | अन्ते सन्ध्यांशवर्षाणि | = | १०८००० |
| द्वापरस्य | — | आदौ सन्ध्यावर्षाणि | = | ७२००० |
| | | शुद्धयुगमानम् | = | ७२०००० |
| | | अन्ते सन्ध्यांशवर्षाणि | = | ७२००० |
| कलेः | — | आदौ सन्ध्यावर्षाणि | = | ३६००० |
| | | शुद्धयुगमानम् | = | ३६०००० |
| | | अन्ते सन्ध्यांशवर्षाणि | = | ३६००० |
| एतेषां योगः | | | = | ४३२०००० महायुगम् |

∵ ७१ महायुगानाम् = १ मनुः, १४ मनुः = एककल्पः, ∴ ७१×१४= ९९४ महायुगानि।

एको मनोः सन्धिः कृतयुगवर्षप्रमाणं भवति। चतुर्दशानां मनूनां सन्धयः पञ्चदशसंख्याका भवन्ति। यदि एकसन्धिमाने कृतयुगवर्षप्रमाणं लभ्यन्ते, तदा पञ्चदशे किमिति—

$$\frac{१७२८००० \times १५}{१} = २५९२००००$$ वर्षाणि।

यदि एकस्मिन् महायुगे ४३२०००० वर्षाणि भवन्ति, तदा २५९२०००० वर्षेषु कति महायुगानि भविष्यन्ति?

$$\frac{२५९२००००}{४३२००००} = ६$$ महायुगानि।

९९४ + ६ = १००० महायुगानि = ब्रह्मणो दिवसः।

१ महायुगम् = ४३२०००० सौरवर्षाणि

१००० महायुगानि = १ ब्रह्मणो दिवसः

४३२०००० × १००० = ४३२००००००० सौरवर्षात्मको ब्रह्मदिवसः।

४३२००००००० × २ = ८६४००००००० अहोरात्रं सौरवर्षात्मकम्।

८६४००००००० × ३० = २५९२०००००००० मासाः।

२५९२०००००००० × १२ = ३११०४०००००००० वर्षाणि।

३११०४०००००००० × १०० = ३११०४००००००००००
सौरवर्षात्मिका ब्रह्मण आयुः।

एवमेव सूर्यसिद्धान्तेऽपि दृश्यते।[१] कल्पो ब्रह्मण एकं दिनम्। कल्पद्वयं ब्रह्मणोऽहोरात्रम्। अनेनाहोरात्रप्रमाणेन ब्रह्मणः परमायुर्वर्षशतम्। यथा सूर्यसिद्धान्ते—

परमायुः शतं तस्य तयाहोरात्रसंख्यया।
आयुषोर्धमितं तस्य शेषकल्पोऽयमादिमः[२]।।

ब्रह्मण आयुविषये आचार्यभास्करस्य मतम्—

तथावर्तमानस्य कस्यायुषोऽर्धं गतं सार्धवर्षाष्टकं केचिदूचुः।
भवत्वागमः कोऽपि नास्योपयोगो ग्रहा वर्तमानद्युयायात् प्रसाध्याः[३]।।

अयमाशयः—आचार्यो वक्ति—तथा वर्तमानस्य ब्रह्मण आयुकालस्य किं गतमिति न वेद्मि। तत्र केचिदाचार्या आयुषोऽर्धं गतं केचित् सार्धवर्षाष्टकं गतमित्यूचुः। तत्रागमः प्रमाणम्। इहागमद्वैविध्ये कः प्रमाणमित्यत्रास्माकं नाग्रहः, अतोऽस्य गतैर्वर्षैर्दिनैरपि प्रयोजनाभावः। ग्रहास्तु वर्तमानस्य दिवसस्य गतात् साध्याः।

ब्रह्मदिनादौ सृष्ट्यारम्भो दिनान्ते च लय इति सर्वमुक्तम्। इदानीं ब्रह्मणः कियन्मितमायुर्गतम्। अस्य गणिते प्रयोजनाभावात् तस्य चर्चाऽपि प्रयोजनशून्येत्याचार्यस्य भावः। दिनान्ते रव्यादीनुपसंहृत्य संशेते ब्रह्मेति।

१. सू.सि.,म., श्लो. १५-२०; २. तत्रैव, श्लो. २१; ३. सि.शि., ग.का., श्लो. २६।

अतो ब्रह्मणो दिवस एव मानवानां व्यवहारकार्यार्थम्, तदेव विचार्यम्। यथा भास्कराचार्यः —

यतः सृष्टिरेषां दिनादौ दिनान्ते लयस्तेषु सत्स्वेव तच्चारचिन्ता।
अतो युज्यते कुर्वते तां पुनर्येऽप्यसत्स्वेषु तेभ्यो महद्भ्यो नमोऽस्तु[1]।।

यत एषां ग्रहाणां दिनादौ सृष्टिर्दिनान्ते लयः। यदि महाकल्पगताद् ग्रहाः साध्यन्ते, तर्हि यावन्त्योऽस्य विभावर्य्यो गतास्तासु ग्रहाभाव एव। अतो विद्यमानेष्वेव ग्रहेषु तच्चारचिन्ता कर्त्तुं युज्यते। यत्तु कैश्चिदविद्यमानेष्वपि तेषु महाकल्पगताद्वर्तमानाः कृतास्तान् प्रति वक्रोक्त्या सोपहासमाह—'तेभ्यो महद्भ्यो नमोऽस्तु' इति।

कल्पादितः शकादिवत्सरं यावत् कियन्तः सौराब्दा गता। अस्मिन् प्रसङ्गे शिरोमणौ भास्करेणोक्तम्—यदत्र ब्रह्मण आदितः षण्मनवो व्यतीताः। सम्प्रति सप्तमो वैवस्वतमनुः प्रचलतीति। ये षण्मनवो व्यतीतास्ते सन्ति—स्वायम्भुवः, स्वारोचिषः, उत्तमजः, तामसः, रैवतः, चाक्षुषः। वर्तमानमनोः २७ महायुगान्यपि व्यतीतानि। वर्तमाने २८तमे महायुगेऽपि त्रीणि युगानि गतानि। तदतिरिक्ताः कलेरादितः शकादिं यावत् ३१७९ सौराब्दाः व्यतीताः[2]। इत्थमुक्तविधिना कल्पादितः शकादिं यावत् १९७२९४७१७९ सौराब्दा गताः। यथा—

| | | |
|---|---|---|
| ६ मनवः = ६ × ७१ म यु = ४२६ म यु = | | |
| ४३२०००० × ४२६ | = | १८४०३२०००० |
| ७ सन्धयः = १७२८०००×७ | = | १२०९६००० |
| २७ म.यु. = ४३२००००×२७ | = | ११६६४०००० |
| कृतयुगवर्षमानम् | = | १७२८००० |
| त्रेतायुगवर्षमानम् | = | १२९६००० |
| द्वापरयुगमानम् | = | ४६४००० |
| कलिगतवर्षमानम् | = | ५१०१ |
| शकादौ सौरवर्षाणि गतानि | = | १९७२९४७१७९ |

१. तत्रैव, श्लो. २७।

२. याता षण्मनवो युगानि भमितान्यन्यद् युगाङ्घ्रित्रयं
नन्दाद्रीन्दुगुणास्तथा शकनृपस्यान्ते कलेर्वत्सराः।
गोऽद्रीन्द्वद्रिकृताङ्कदस्रनगगोचन्द्राः शकाब्दान्विताः
सर्वे सङ्कलिताः पितामहदिने स्युर्वर्तमाने गताः।।
स्वायम्भुवो मनुरभूत् प्रथमस्ततोऽमी स्वारोचिषोत्तमजतामसरैवताख्याः।
षष्ठस्तु चाक्षुष इति प्रथितः पृथिव्याम् वैवस्वतस्तदनु सम्प्रति सप्तमोऽयम्।।
(सि.शि., ग.का., श्लो. २८-२९)

वर्तमानशकवर्षाणि = १९२२

एतानि वर्षाणि व्यतीतानि = १९७२४९११०१

## क्षयाधिमासविवेचनम्

अमान्तादमान्तं यावत् चान्द्रमासो भवति। यस्मिन् चान्द्रमासे सूर्यस्य सङ्क्रान्तिर्न भवति, स मासोऽधिमास उच्यते, तथा च यस्मिन् मासे सूर्यस्य द्वौ सङ्क्रान्ती भवतः, सः क्षयमासो ज्ञेयः। क्षयमासस्तु कदाचिदेव सम्भवति परन्त्वधिमासस्तु निश्चितकाले द्वात्रिंशन्मासानन्तरमवश्यमेवागच्छति।[1] शिरोमणौ कथितं भास्कराचार्येण—

असङ्क्रान्तिमासोऽधिमासः स्फुटं स्याद्
द्विसङ्क्रान्तिमासः क्षयाख्यः कदाचित्।
क्षयः कार्तिकादित्रये नान्यतः स्यात्
तदा वर्षमध्येऽधिमासद्वयञ्च[2]।।

कल्परविमासाः कल्पचान्द्रमासेभ्यो यावद्भिरधिका भवन्ति, तेऽधिमास-संज्ञकाः। सावनानां चान्द्राणां चान्तरमवमानि (क्षयानि) उच्यन्ते। सावनदिनेभ्यः चान्द्रदिवसा यावद्भिरधिका भवन्ति, ते दिनक्षयाः। स्पष्टार्थम्—

चान्द्रमासाः—सौरमासाः = अधिमासाः।

∵ चान्द्रदिनानि—सावनदिनानि = क्षयदिनानि।

∴ चान्द्रदिनानि—क्षयदिनानि = सावनदिनानि।

∵ चा.मा.—सौ.मा. = अधि. मा.। त्रिंशद्गुणनेन दिनानि भवन्ति।

चा.दि.—सौ.दि. = अधि.दि.। चा.दि. = अधि.दि.+सौ.दि.।

प्रकारान्तरेण—

अन्तरं तरणिचन्द्रचक्रजं यद्भवेत् स विधुमाससञ्चयः।
चन्द्रचक्रदिवसैक्यमूनितं चन्द्रमासभदिनैर्दिनक्षयाः[3]।।

चन्द्रभगण—रविभगण = चान्द्रमासः। च.भ.—च.मा. = रवि-भगणः।
अमावास्यायां सूर्यचन्द्रौ एकराश्यां भवतः। चन्द्रापेक्षया सूर्यो गतेरल्पत्वाद् मन्दं

---

१. द्वात्रिंशद्भिर्गतैर्मासैर्दिनैः षोडशभिस्तथा।
घटिकानां चतुष्टयेन पतन्ति क्षयाधिमासकाः।।

२. सि.शि., ग.अ., श्लो.६।

३. सि.शि.,भ., श्लो. १३।

मन्दं गच्छति। चन्द्रः सूर्यस्यापेक्षया शीघ्रमेकं भगणं पूरयति। यस्मिन् समये सूर्य एकं राशिं भोगयति, तस्मिन्नेव समये चन्द्रस्त्रयोदशराशीन् भोगयति। अर्थाद् एकस्मिन् चान्द्रमासे सूर्य एकं राशिं भोगयति, चन्द्रश्च त्रयोदशराशीन्।

१३—१ = १२ मासाः, अर्थात् चन्द्रभगण—रविभगण = चान्द्रमासः। 'कालेन येनैति पुनः शशीनम्' इत्यादिना चन्द्रगतिकला—सूर्यगतिकला = गत्यन्तरकला।

$$\because \frac{\text{१ सावनदिनम्} \times \text{चक्रकला}}{\text{गत्यन्तरकला}} = \text{चान्द्रमासान्तस्य सावनदिनसंख्याः।}$$

$$\frac{\text{१ चान्द्रमासः} \times \text{क.कु.दि.}}{\text{चान्द्रमासान्त-सावनदिनानि}} = \text{क.चा.मा. उत्थापनेन।}$$

$$= \frac{\text{१ चा.मा.} \times \text{क.कु.दि.}}{\frac{\text{१} \times \text{चक्रकला}}{\text{च.ग.क.—र.ग.क}}} = \frac{\text{१} \times \text{क.कु.दि.}}{\text{१}} \div \frac{\text{१} \times \text{चक्र कला}}{\text{च.ग.क.-र.ग.क}} =$$

$$= \frac{\text{१} \times \text{क.कु.दि.}}{\text{१}} \times \frac{\text{च.ग.क.—र.ग.क}}{\text{१} \times \text{चक्रकला}} = \frac{\text{क.कु.दि.(च.ग.क.—र.ग.क)}}{\text{चक्रकला}}$$

$$\frac{\text{च.ग.क.} \times \text{क.कु. दि.}}{\text{चक्रकला}} — \frac{\text{र.ग.क.} \times \text{क.कु.दि.}}{\text{चक्रकला}}$$

= च.क.भ.—र.क.भ. = क.चा.मा.उपपन्नम्।

**क्षयदिनस्योत्पत्तिः**

क.चा.दि.—क.सा.दि. = क.क्ष.दि। ∵ क.सा.दि. = क.न.भ.—क.र.भ.।

∴ क.क्ष.दि. = क.चा.दि.—(क.न.भ.—क.र.भ)

∵ क.च.भ.—क.र.भ. = क.च.मा.। ∴ क.च.भ.—क.चा.मा. = क.र.भ.।

∴ क.क्ष.दि.=क.चा.दि.—[क.न.भ.(क.च.भ.-क.चा.मा.)] उपपन्नम्।

**प्रकारान्तरेणाधिमासोपपत्तिः**

इन्दुमण्डलगुणेन्दुसंगुणबन्धचक्रविवरेऽधिमासकाः।
खेचरोच्चभगणान्तरोन्मिताः सन्ति मन्दचलकेन्द्रपर्य्ययाः[१]।।

∵ क.चा.मा.-क.सौ.मा. = कल्प-अधिमासाः। परं क.चा.मा. = क.च.भ.—क.र.भ.।

∴ कल्पाधिमास = क.च.भ.–क.र.भ.–क.सौ.मा.।∵क.सौ.मा. = १२ × क.र.भ.।

---

१. सि.शि.,भ., श्लो. १४।

∴ कल्पाधिमासः = क.च.भ.—क.र.भ.—१२क.र.भ. = क.च.भ.—१३ क.र.भ। उपपन्नम्।

पुनः कति मासानामाभ्यन्तरेऽधिमास आगच्छतीत्यस्मिन् प्रसङ्गे भास्कराचार्यस्य विचाराः—

चान्द्रोनसौरेण हृतात्तु चान्द्रादवाप्तसौरैर्दशनैर्दलाढ्यैः।
मासैर्भवेच्चान्द्रमसोऽधिमासः कल्पेऽपि कल्प्या अनुपाततोऽतः।।
सौरान्मासादैन्दवः स्याल्लघीयान्यस्मात्तस्मात्संख्यया तेऽधिकाः स्युः।
चान्द्राः कल्पे सौरचान्द्रान्तरे ये मासास्तज्ज्ञैस्तेऽधिमासाः प्रदिष्टाः[1]।।

**स्पष्टार्थमधिमासोपपत्तिः**

एकस्मिन् सौरमासे सावनदिनसंख्यामानम् = ३०/२६/१७/३१/५२/३०।

एकस्मिन् चान्द्रमासे सावनदिनसंख्यामानम् = २९/३१/५०/०/०।

द्वयोरन्तरम् = ०/५४/२७/३१/५२/३० (शेषः)।

$$= \frac{\text{१ सौरमासः} \times \text{१ चान्द्रमासान्तर्गतसावने}}{\text{शेषः}} = \text{सौरमानान्त एकोऽधिमासः।}$$

$$= \frac{\text{१ सौरमासः} \times \text{२९} \times \text{३१} \times \text{५०}}{\text{०/५४/२७/३१/५२/३०}} = \text{३२/१५/३१/२८/२७ सौरमासाः।}$$

एतेषां मासानामनन्तरे द्वितीयोऽधिमास आगच्छति।

$$\frac{\text{१ अधिमासः} \times \text{क.सौ.मा.}}{\text{३२/१५/३१.....}} = \text{कल्पाधिमासः। क.चा.मा.— क.सौ.मा. = कल्पाधिमासा। उपपन्नम्।}$$

**अवमोपपत्तिः**

शशाङ्कमासोनितसावनेन त्रिंशद्धृतां लब्धदिनैस्तु चान्द्रैः।
रुद्रांशकोनाब्धिरसैः क्षयाहः स्यात्सावनोऽतश्च युगेऽनुपातात्[2]।।

युगे चान्द्राणां सावनानां च दिनानां यदन्तरं तान्यवमानि। अत एकस्मिन्मासे चान्द्रसावनान्तरं कुदिनात्मकं गृहीतम्। तत्र दिवसाः पूर्णमष्टाविंशतिघटिका दश पानीयपलानि च (०.२८.१०)। इदमेकस्मिञ्चान्द्रमासे त्रिंशत्तिथ्यात्मके कुदिनात्मकमवमखण्डम्। यद्यनेन त्रिंशच्चान्द्राणि दिनानि लभ्यन्ते, तदा सम्पूर्णैनैकेनावमेन कियन्तीति त्रैराशिकेन लब्धै रुद्रांशकोनाब्धिरसैः (६३/

१. सि.शि., गो.म.ग., श्लो. १०-११; २. सि.शि., म. गतिवासना, श्लो. १२।

१४/३३) एक: क्षयाहो भवति। स च सावन:। अखण्डस्य रूपस्य सावनेच्छाकल्पनात्। अतोऽनुपातात्कल्पेऽपि।

सावनमासदिवसा: = ३०
चान्द्रमासान्तर्गतसावनदिवसा: = २९/३१/५०
शेष: = ०/२८/१० क्षयात्मकम् ।

$$\frac{\text{चान्द्रमासदिनानि} \times \text{१ दिवस:}}{\text{६}} = \text{चान्द्रदिवसा:}$$

$$\frac{\text{३० ति.} \times \text{१ दि.}}{\text{०/२८/१०}} = \text{६३/५४/३३ चान्द्रदिवसा:,}$$ एतेषु दिवसेषु एको दिवस: क्षयो भवति।

$$\frac{\text{१ क्ष.दि.} \times \text{क.चा.दि.}}{\text{६३/५४/३३}} = \text{कल्पक्षयदिनादि।}$$

**भास्करोपरि कमलाकरभट्टस्याक्षेप:**

असङ्क्रान्तिमासो हि चान्द्रोऽधिमासो द्विसङ्क्रान्तिमास: क्षयाख्यस्तदानीम्।
क्षयाख्य: कदाचित् तत: प्राक् च पश्चादवश्यं हि तत्राधिमासद्वयं स्यात्।।
स्फुटैर्लक्षणैर्यैरयं तानि सर्वेष्वपि स्युर्मधोश्चन्द्रमासेषु काले।
अतोऽयं क्षय: सर्वचान्द्रेष्वपीत्थं न जानन्ति सद्वासनाज्ञानशून्या:।।
इदानीन्तनार्थं न शास्त्रं प्रवृत्तं न सत् कार्तिकादित्रयोत्थं तदुक्तम्।
सुयुक्ता न मदुक्तिरप्यत्र शास्त्रे भवेत् कार्यवर्यस्य या दृग्विरुद्धा।।

भास्कराचार्य: सूर्यमन्दोच्चबिन्दुं ७८ अंशात्मकं स्थिरं मत्वा कार्तिकादित्रिषु मासेषु क्षयमासो भविष्यतीति कथयति। यतस्तदा रवि: परमं नीचराशौ भवेत्; परन्त्वस्य खण्डनं सयुक्तिकं कमलाकरभट्टेन कृतम्, ते कथयन्ति यद् मन्दोच्चबिन्दुरपि गतिशीलो वर्तते। यथोच्चबिन्दुर्गतिशीलोऽस्ति, तथैव नीचबिन्दुरपि। अत: सर्वेषु मासेषु क्षयमासो भवितुमर्हति। कार्तिकादिषु त्रिषु मासेष्वेव क्षयमासो भविष्यतीति कथनं युक्तिसङ्गतं नास्तीति भट्टस्याशय: समीचीनं प्रतिभातीति।



# बौद्धनये प्रमाणविमर्शः

**डॉ. देवीप्रसादद्विवेदी**
प्राध्यापकः (अंशकालिकः)
भाषाविज्ञानविभागस्य
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये
वाराणसी



'प्रमेयसिद्धिः प्रमाणाद्धि' सिद्धान्तमिममुररीकृत्य सर्वेषु नास्तिकास्तिकदर्शनेषु प्रमाणविमर्शो विहितः। प्रमीयते वस्तु साध्यतेऽनेनेति प्रमाणम्। प्रोपसर्गपूर्वकमाधातोः करणे ल्युटि कृते प्रमाणशब्दसिद्धिर्भवति। तेन प्रमायाः साधकतमं कारणं प्रमाणं कथ्यते। सर्वेषु दर्शनेषु संख्यालक्षणगोचरफलविषयतया विप्रतिपत्त्या निरूपितं प्रमाणम्। तत्र प्रत्यक्षमेव प्रमाणमिति **चार्वाकाः।** प्रत्यक्षमनुमानञ्चेति **बौद्धाः।** प्रत्यक्षमनुमानमुपमानमिति **वैशेषिकाः।** शब्दोऽपि **नैयायिकाः।** अर्थापत्तिरपीति **भाट्टाः।** अनुपलब्धिरपीति **ब्रह्माद्वैतवादिनः।** एवमेतेऽन्येऽपि ऐतिह्यादयः प्रमाणभेदा निरूपिताः।

अथेदानीं सौगतसमये प्रमाणविचारः प्रस्तूयते। तत्र प्रमाकरणं प्रमाणम्, प्रमीयते अनेनेति व्युत्पत्तेः। प्रमा च सम्यग्ज्ञानम्। अविसंवादकं ज्ञानं सम्यग् ज्ञानम्। ज्ञाने सम्यक्त्वमविसंवादकत्वं वा स्वप्रदर्शितार्थप्रापकत्वं यथार्थत्वं वा, यथार्थत्वं नाम अर्थमनतिक्रम्य विद्यमानत्वम्। लोके च पूर्वप्रदर्शितमर्थं प्रापयन् संवादक उच्यते। ज्ञानमपि स्वयं प्रदर्शितमर्थं प्रापयत् संवादकमुच्यते। ज्ञानस्य प्रापकत्वं नाम स्वप्रकाशितेऽर्थे प्रवर्तकत्वम्, तच्च प्रवृत्तिविषयप्रकाशकत्वम्। न हि बलादेव ज्ञानमर्थे प्रवर्तयत्येव। अर्थाधिगतिः प्रमाणफलम्। अधिगते चार्थे प्रवर्तितः पुरुषः प्रापितश्चार्थः प्रमाणेन। एतदधिकं तु किं ज्ञानेन कार्यम्। ज्ञानस्यार्थप्रकाशः तद्द्वारा प्रवृत्तिर्वा कार्यम्। यदि च प्रमाणान्तरेणार्थप्रकाशो जातस्तदा तमर्थं प्रकाशयद् ज्ञानं न प्रमा भवति। तादृशेन ज्ञानेन नाधिकं किञ्चित् कृतं पूर्वज्ञानकृतात्। तस्मादधिगतविषयकज्ञानमप्रमाणम्। तथा चानधिगताबाधितविषयकज्ञानत्वं प्रमात्वमिति स्थितम्।

तादृशसम्यग्ज्ञानेन सर्वपुरुषार्थसिद्धिर्भवति। हेयोपादेयोऽर्थः पुरुषार्थः। पुरुषेण हि प्रेक्षावता किञ्चिद् हेयं किञ्चिदुपादेयं भवति। उपेक्षणीयमपि

अनुपादेयत्वाद्धेयकोटौ एवान्तर्भवति। हेयोपादेयार्थस्य हानमुपादानं वा सम्यग्ज्ञानाधीनम्। न हि अबुद्ध्वा कश्चिद् हातुमुपादातुं वा प्रवर्तते। न च हानोपादाने मिथ्याज्ञानात् सम्भवति, अप्रापकत्वाद् विसंवादित्वाद् वा मिथ्याज्ञानानाम्। न हि शुक्तौ रजतमिति ज्ञानं रजतं प्रापयति। विसंवादि च तज्ज्ञानं यत् शुक्तिं रजतं गोचरयति। नैयायिकैरप्युक्तम्। तद्वति तत्प्रकारकं ज्ञानं प्रमा, तद्विपरीतमप्रमेति। मिथ्याज्ञानस्य प्रवर्तकत्वेऽपि ज्ञानप्रतिपाद्यार्थप्रापकत्वं नास्ति।

उक्तञ्च न्यायबिन्दौ—'सम्यग्ज्ञानपूर्विका सर्वपुरुषार्थसिद्धिरिति'[१]। तादृश-सम्यग्ज्ञानं प्रमाणम्।

**प्रमाभेदः**

दर्शनान्तरे प्रमाविषये अस्ति विप्रतिपत्तिः संख्यालक्षणगोचरफलविषया, तथापीह बौद्धे समये द्विविधं सम्यग्ज्ञानं प्रत्यक्षमनुमानञ्चेति। अन्यदर्शन-सम्मतानामन्येषां शब्दादीनां प्रमाणानां प्रामाण्यं नास्ति। अस्ति चेद् अनुमान एवान्तर्भावस्तेषाम्।

**प्रत्यक्षविमर्शः**

प्रतिगतमक्षं प्रत्यक्षम्। 'अत्यादयः क्रान्ताद्यर्थे द्वितीययेति' वार्तिकेन समासे प्रत्यक्षम्, अक्षाश्रितं ज्ञानम्। अथवा अक्षिणी प्रतीति विग्रहे 'लक्षणेनाभिप्रती आभि-मुख्ये' (पा.सू. २-१-१४) इति सूत्रेण समासे 'प्रतिपरसमनुभ्योऽक्ष्णः' (ग. १४८) इति गणसूत्रेण टचि प्रत्यक्षमिति रूपम्। तत्पुरुषसमासपक्षे न परवल्लिङ्गम्, 'द्विगुप्राप्तापन्नालंपूर्वगतिसमासेषु प्रतिषेधो वाच्यः' (वा. १५-४५) इति वार्तिकेन निषेधात्। प्रत्यक्षशब्दो विशेष्यनिघ्नः। अतः स एव समासो युक्तः। अव्ययीभावपक्षे तु प्रत्यक्षशब्दस्य नेत्राभिमुख्यमर्थः प्रत्यक्षं घटः, नेत्राभिमुख्यं घटस्येत्यर्थः।

एतच्चाक्षाश्रितत्वमक्षाभिमुख्यं वा प्रत्यक्षशब्दस्य व्युत्पत्तिनिमित्तम्, न तु प्रयोगनिमित्तम्। अन्यथा मानसादिप्रत्यक्षे एतन्निमित्ताभावात् प्रत्यक्षत्वं न स्यात्। तस्मात् साक्षात्कारिज्ञानत्वं प्रत्यक्षपदप्रवृत्तिनिमित्तं बोध्यम्।

तत्र न्यायबिन्दौ आचार्येण धर्मकीर्तिना कल्पनापोढमभ्रान्तं प्रत्यक्ष-मित्युक्तम्। प्रत्यक्षं साक्षात्कारिज्ञानं कल्पनापोढमभ्रान्तं वेदितव्यम्। प्रत्यक्षमनूद्य कल्पनापोढत्वादि विधीयते। प्रत्यक्षं च प्रसिद्धमिन्द्रियान्वयव्यतिरेकानुविधायिष्वर्थेषु लोके साक्षात्कारिविज्ञानम्, तदनूद्य कल्पनापोढत्वादि तत्र प्रमात्वप्रयोजकं विधीयते।

कल्पनया अपोढमपेतं कल्पनापोढम्। कल्पनास्वभावरहितमित्यर्थः। अभ्रान्तमविपर्यस्तं भ्रमभिन्नमित्यर्थः। एतद्द्वयं प्रत्यक्षविशेषणं

१. न्यायबिन्दुः, १.१।

विप्रतिपत्तिनिरासार्थम्। तथा हि अभ्रान्तग्रहणाभावे गच्छद्वृक्षदर्शनं शुक्तौ रजतदर्शनञ्च प्रत्यक्षं प्रमा स्यात्। तस्माद् अभ्रान्तग्रहणम्। कल्पनापोढग्रहणाभावे चानुमानादावपि लक्षणं प्रसज्येतेति तद्ग्रहणम्।

**कल्पनाविमर्शः**

का नाम कल्पना यया रहितं प्रत्यक्षमित्युक्तम्। उच्यते, 'अभिलापसंसर्गयोग्यप्रतिभासप्रतीतिः कल्पना'[१]।

अयमर्थः—अभिलप्यतेऽनेनेति अभिलापः शब्दः। अभिलापेन शब्देन संसर्गः अभिलापसंसर्गः। अभिलापसंसर्गाय योग्य आधेयाभासो यस्यां सा अभिलापसंसर्गयोग्यप्रतिभासा सा एषा प्रतीतिरिति व्युत्पत्तिः। आभासो ज्ञानेऽर्थाकारता। अभिलापसंसर्गो नाम एकस्मिन् ज्ञानेऽभिधेयाकारस्याभिधानाकारेण सह ग्राह्याकारतया शीलनम्। एकत्र ज्ञानेऽभिधेयाभिधानाकारौ प्रविष्टौ यदा भवतस्तदा तज्ज्ञानेन संसृष्टौ अभिधानाभिधेयौ भवतः। अभिलापसंसर्गयोग्याभिधेयाभासवती प्रतीतिः कल्पना। शाब्दबोधस्थले अनुमानादौ च तथा सम्भवः। शाब्दबोधे शब्दस्य तदर्थस्य च ग्राह्यत्वम्। भवति च तत्र शब्देन सहाभिधेयस्य ज्ञानविषयतया प्रतीतिरिति सा कल्पना। प्रत्यक्षे च न तथा। तत्र काचित् प्रतीतिरभिलापसंसृष्टाभासा भवति। यथा गृहीतसङ्केतस्य घटार्थकल्पना घटशब्दसंसृष्टाभासा भवति। काचित् प्रतीतिस्तु अभिलापासंसृष्टाभासापि अभिलापसंसर्गयोग्याभासा भवति। यथा अव्युत्पन्नसङ्केतस्य बालकस्य प्रतीतिः। तस्या अपि कल्पनाया सङ्ग्रहाय योग्येति निवेशः। ग्राह्यो ह्यर्थो विज्ञानं जनयन् नियतप्रतिभासं करोति। यथा रूपं चक्षुर्विज्ञानं जनयन्नियतप्रतिभासं करोति। विकल्पविज्ञानं तु अर्थान्नोत्पद्यत इति प्रतिभासनियमहेतोरभावाद् अनियतप्रतिभासाद् विकल्पविज्ञानं हि नार्थसन्निधिमपेक्षते, असन्निहितविषयं तद्विज्ञानम्। पूर्वदृष्टापरदृष्टञ्चार्थमेकीकुर्वद् विज्ञानमसन्निहितविषयकं पूर्वदृष्टस्यासन्निहितत्वात्। असन्निहितविषयकञ्च विज्ञानमर्थनिरपेक्षम्। अनपेक्षञ्चानियतप्रतिभासम्। तादृशज्ञानमभिलापसंसर्गयोग्यम्। नेन्द्रियविज्ञानं तादृशम्। सन्निहितार्थमात्रग्राहित्वाद् अर्थसापेक्षं तत्। अर्थस्य च प्रतिभासनियमहेतुत्वान्नियतप्रतिभासं विज्ञानम्।

तत्त्वसङ्ग्रहेऽपि कथितम्—

'प्रत्यक्षं कल्पनापोढमभ्रान्तमभिलापिनी।

प्रतीतिः कल्पना.......................... ।।' इति।

तथा चेन्द्रियविज्ञानं नाभिलापसंसर्गयोग्यम्। असन्निहितविषयञ्च विज्ञानं कल्पना तया रहितं प्रत्यक्षम्।

१. न्यायबिन्दुः, १.५।

अभ्रान्तमित्यस्य भ्रमरहितमित्यर्थः। भ्रमश्च काचकामलतिमिरादिनयनदोषात् सम्भवति। स च बाधितविषयकः। न संवादिविज्ञानमिति तन्न प्रत्यक्षम्।

**प्रत्यक्षभेदः**

तच्च प्रत्यक्षं विज्ञानं चतुर्विधम्—इन्द्रियज्ञानम्, मनोविज्ञानम्, आत्मसंवेदनम्, योगिज्ञानञ्चेति।

**इन्द्रियज्ञानम्**

इन्द्रियस्य ज्ञानमिन्द्रियज्ञानम्। इन्द्रियाणि चक्षुरादीनि। इन्द्रियाश्रितं यद् विज्ञानं तत् प्रत्यक्षम्।

**मनोविज्ञानम्**

स्वविषयानन्तरविषयसहकारिणेन्द्रियविज्ञानेन समनन्तरप्रत्ययेन जनितं यत् तन्मनोविज्ञानम्[१]।

**आत्मसंवेदनप्रत्यक्षम्**

'सर्वचित्तचैत्तानामात्मसंवेदनं प्रत्यक्षम्'[२]। चित्तमर्थमात्रग्राहिविज्ञानम्, चैत्ता विशेषावस्थाग्राहिणः सुखदुःखादयः। चित्तचैत्तविज्ञानं प्रत्यक्षम्। नास्ति काचिदवस्था चित्तस्य यस्यामात्मसंवेदनं न स्यात्। सुखादय एव स्फुटानुभवात् स्वसंविदिताः। येन हि रूपेण आत्मा वेद्यते, तद्रूपमात्मसंवेदनं प्रत्यक्षम्। एतच्च ज्ञानरूपं वेदनमात्मनः साक्षात्कारि अभ्रान्तञ्च तस्मात् प्रत्यक्षम्।

**योगिप्रत्यक्षम्**

भूतार्थभावनाप्रकर्षपर्यन्तजं योगिज्ञानम्[३]।

प्रमाणेन दृष्टोऽर्थः सद्भूतो भूतार्थः। यथा चत्वार्यार्यसत्यानि। भूतार्थस्य भावना पुनः पुनश्चेतसि विनिवेशनम्। तस्या भावनायाः प्रकर्षः, भाव्यमानार्था-भासस्य ज्ञानस्य संस्फुटत्वारम्भः। प्रकर्षपर्यन्तो यदा स्फुटाभत्वमीषदसम्पूर्णो भवति, तदा तस्य नास्ति प्रकर्षगतिः। ततः सम्पूर्णावस्थायाः प्राक्तन्यवस्था स्फुटाभत्वप्रकर्षपर्यन्तमुच्यते। तस्मात् पर्यन्ताद् यज्ज्ञातं भाव्यमानं सन्निहितमिव, तस्य स्फुटाकारावगाहिज्ञानं योगिनः प्रत्यक्षम्। स्फुटत्वारम्भावस्था भावनाप्रकर्षः। अभ्रकव्यवहितमिव यदा भाव्यमानं पश्यति, सा प्रकर्षपर्यन्तावस्था, करतलामलकमिव भाव्यमानस्य यद्दर्शनं तज्ज्ञानं योगिप्रत्यक्षम्। तच्च स्फुटाभम्। स्फुटाभत्वादेव निर्विकल्पकम्।

१. सिद्धान्तबिन्दुः, २. न्यायबिन्दुः, १।१०; ३. तदेव—१।११।

योगः समाधिः। सोऽस्यास्तीति योगी। एवं चातुर्विध्यं प्रत्यक्षस्य व्याख्यातम्।

**प्रत्यक्षविषयविमर्शः**

तस्य चतुर्विधस्य प्रत्यक्षस्य विषयो बोद्धव्यः स्वलक्षणम्। स्वमसाधारणं लक्षणं तत्त्वं स्वलक्षणम्। द्विविधं हि वस्तुनस्तत्त्वं साधारणमसाधारणञ्चेति। साधारणमसामान्यं स्वलक्षणं प्रत्यक्षग्राह्यम्। सामान्यञ्च अनुमानविषयः। द्विविधो हि प्रमाणस्य विषयो ग्राह्यश्च यदाकारं प्रमाणमुत्पद्यते। प्रापणीयश्च यमध्यवस्यति। अन्यो ग्राह्योऽन्योऽध्यवसेयः। प्रत्यक्षस्य हि क्षण एको ग्राह्यः। अध्यवसेयस्तु प्रत्यक्षबलेनोत्पन्नेन निश्चयेन सन्तान एव। सन्तान एव क्षणभङ्गवादे प्रत्यक्षस्य प्रापणीयः, क्षणस्य प्रापयितुमशक्यत्वात्।

स्वलक्षणञ्च अर्थस्य सन्निधानासन्निधानाभ्यां ज्ञानप्रतिभासभेदः। प्रतिभासः अकारः। प्रत्यक्षविषय एव स्वलक्षणम्, तस्यैव परमार्थसत्त्वात्। परमार्थोऽनारोपितरूपम्। तेनानारोपितरूपेणास्तीति परमार्थसत्। अनुमानेन हि आरोपितोऽर्थो गृह्यते। परमार्थसदेव अर्थक्रियासमर्थम्। अर्थस्य क्रिया हानोपादानरूपा। तस्य हानोपादानस्य सामर्थ्यं परमार्थसति एव वस्तुनि नारोपितेऽस्ति।

तदयमर्थो यस्मादर्थक्रियासमर्थं परमार्थसदुच्यते सन्निधानासन्निधानाभ्याञ्च ज्ञानप्रतिभासस्य भेदकोऽर्थोऽर्थक्रियासमर्थः, तस्मात् स एकः परमार्थसत्। तत एव हि प्रत्यक्षविषयाद् अर्थक्रिया प्राप्यते, न विकल्पविषयात्। सामान्यञ्च यद्रूपं तदनुमानस्य विषयः।

**प्रत्यक्षफलविमर्शः**

अर्थप्रतीतिरेव प्रत्यक्षप्रमाणफलम्। सा च प्रतीतिः प्रत्यक्षा। प्रापकं ज्ञानं प्रमाणम्। अर्थादुत्पन्नज्ञानस्य प्रत्यक्षस्यास्ति कश्चिदवश्यकर्तव्यः प्रापकव्यापारः प्रापणरूपो येन कृतेनार्थः प्रापितो भवति। तदेव प्रमाणफलम्। एतदनुष्ठानात् प्रापकं भवति ज्ञानम्। प्रापणञ्च ज्ञानेन न केवलमर्थाविनाभावाद् भवति। प्रवृत्तिविषयप्रदर्शनमेव प्रापकस्य प्रत्यक्षस्य प्रापणव्यापारः। तत् प्रदर्शनं प्रतीतिः, अर्थदर्शनरूपं प्रमाणस्य फलम्।

ननु प्रत्यक्षार्थप्रतीतिस्तदवगमो वा प्रत्यक्षस्य फलं तर्हि किमिति तत् प्रमाणम्। न च प्रत्यक्षप्रतीतिरेव प्रमाणं तत् फलञ्चेति युज्यत इति चेदुच्यते, अर्थसारूप्यमत्र प्रमाणम्। अर्थेन सह ज्ञानस्य यत् सारूप्यं सादृश्यं तदेव प्रमाणं ज्ञानस्य। ज्ञानं हि सम्भवद् अर्थाकारं भवति। यथा नीलादर्थादुत्पद्यमानं ज्ञानं नीलाकारं नीलसदृशं वा भवति। तच्च सारूप्यं सादृश्यमाकार आभास इति व्यपदिश्यते। ज्ञानेऽर्थाकारसादृश्यं प्रमाणम्। तत् सारूप्यसामर्थ्यादेव अर्थप्रतीतिसिद्धिर्भवति। यथा नीलनिर्भासाद् विज्ञानान्नीलस्य प्रतीतिरवसीयते। न हि

चक्षुष उत्पद्यमानं ज्ञानं नीलस्येति शक्यते व्यवस्थापयितुं यावज्ज्ञाने तस्मिन् नीलाकारता नीलसारूप्यं वा न व्यवस्थितं भवति। नीलसदृशं तु विज्ञानं नीलप्रतीतिकारकं भवति। एकस्यापि वस्तुनः किञ्चिद् रूपं प्रमाणं फलं किञ्चिद्रूपमिति न विरुध्यते। प्रत्यक्षज्ञानस्य ह्यर्थसारूप्यं प्रमाणमर्थप्रतीतिः फलमिति भावः। एकस्मिन्नेव विज्ञाने व्यवस्थापकमर्थसारूप्यं व्यवस्थाप्यमर्थप्रतीतिरिति। एवं प्रत्यक्षस्य विषयः फलं स्वरूपं भेदश्चैतत् सर्वं व्याख्यातम्। कल्पनापोढत्वम-भ्रान्तत्वं स्वरूपम्, स्वलक्षणं विषयः। अर्थप्रतीतिः फलम्। इन्द्रियजन्यादिचत्वारो भेदाः। अर्थसारूप्यमस्य प्रमाणम्। एतेनान्येषां मतं निरस्तं वेदितव्यम्।

### अनुमानविमर्शः

वस्तुनोऽसाधारणरूपं स्वलक्षणमुक्तम्, अन्यत् स्वलक्षणात् सामान्यं रूपम्। तच्चानुमानगम्यम्। सकलवह्निसाधारणं रूपं समारोप्यमाणम्। क्षणिकस्य सर्वस्य स्वलक्षणत्वात्, तद्ग्राहि अनुमानम्।

अनुमानस्यापि प्रमाणफलव्यवस्था प्रत्यक्षवद् बोध्या। यथा नीलाकारस्योत्पद्यमानस्यानुमानस्य नीलप्रतीतिः फलम्। सा च प्रतीतिर्विकल्परूपा। नीलसारूप्यमस्यानुमानस्य प्रमाणम्।

अनुमीयते अनेनेति अनुमानम्, करणसाधनेन मानशब्देन सारूप्यलक्षणं प्रमाणमभिधीयते। लिङ्गग्रहणात् सम्बन्धस्मरणस्य पश्चान्मानमनुमानम्। गृहीते पक्षधर्मे स्मृते च साध्यसाधनसम्बन्धेऽनुमानं प्रवर्तत इति पश्चात्कालभाव्युच्यते। यथा अर्थाविनाभावित्वाद् अर्थं प्रापयत् प्रत्यक्षं प्रमाणं तथा अर्थाविनाभावादर्थं परिच्छिन्नं प्रापयद् अनुमानं प्रमाणम्। तच्च द्विधा स्वार्थं परार्थञ्चेति। येन स्वयं प्रतिपद्यते तत् स्वार्थम्। येन च परं प्रतिपादयति तत् परार्थम्।

### स्वार्थानुमानम्

त्रिरूपाल्लिङ्गाद् यदनुमेयं ज्ञानं तत् स्वार्थानुमानम्। लिङ्ग्यते गम्यते अनेनार्थ इति लिङ्गम्। अनुमेयोऽत्र जिज्ञासितविशेषो धर्मी। जिज्ञासितो ज्ञातुमिष्टो विशेषो धर्मो यस्य धर्मिणः स जिज्ञासितविशेषो धर्मी पक्षः। साध्यधर्मसामान्येन समानोऽर्थः सपक्षः। न सपक्षः असपक्षो विपक्ष इति। एवञ्च अनुमेयपक्षसत्त्वं सपक्षसत्त्वं विपक्षासत्त्वमित्येतत् त्रिरूपं लिङ्गस्य बोध्यम्। तदेव लिङ्गं यत् पक्षे सत् सपक्षे सद् विपक्षे असन्निश्चितम्।

तस्य त्रिरूपस्य लिङ्गस्य त्रयः प्रकाराः—अनुपलब्धिः, स्वभावः, कार्यञ्चेति। उपलब्धिर्ज्ञानम्। न उपलब्धिरनुपलब्धिः। प्रतिषेधस्य साध्यस्यानुपलब्धिरुक्तरूपेण त्रिधा। विधेयस्य साध्यस्य स्वभावोऽपि पक्षसत्त्वादिना त्रिरूपः। एवं कार्यमपि त्रिरूपम्। अनुपलब्धिरर्थाभावावेदिका। स्वभावकार्ये तु भावबोधके इति विज्ञेयम्।

अनुपलब्धेरुदाहरणं यथा—अत्र प्रदेशविशेषे घटो नोपलभ्यते, उपलब्धिलक्षण-प्राप्तस्यानुपलब्धेः। अत्र क्वचित् प्रदेशविशेषो धर्मी, घटाभावः साध्यः, उपलब्धिलक्षणप्राप्तस्यानुपलब्धेरिति हेतुः। उपलब्धिर्ज्ञानं तस्या लक्षणं जनिका सामग्री तया हि अनुपलब्धिर्लक्ष्यते। उपलब्धिलक्षणप्राप्तिरुपलम्भप्रत्ययान्तरसाकल्यं स्वभावविशेषश्च। उपलम्भप्रत्ययाश्चत्वारोऽधिपतिसहकारिसमनन्तरालम्बनरूपाः। तेषु आलम्बनप्रत्ययं परित्यज्य प्रत्ययान्तराणां समवधानम् उपलब्धिलक्षणप्राप्तिः। अथवा स्वभावविशेष एव सा। स च स्वभावः सत्सु अन्येषु समनन्तरादिप्रत्ययेषु यत्प्रत्यक्ष एव भवति, स स्वभावः। एवञ्चानुपलब्धिरभावावेदिका।

द्वितीयो लिङ्गभेदः स्वभावः, स च स्वसत्तामात्रभाविनि साध्यधर्मे हेतुः। यथा वृक्षोऽयं शिंशपात्वात्। तत्र स्वस्यात्मनो हेतोः सत्तामपेक्ष्यैव विद्यमानो भवति, न तु हेतुसत्ताया व्यतिरिक्तं कञ्चिद् हेतुमपेक्षते। स स्वसत्तामात्रभावी साध्यः। तस्मिन् साध्ये यो हेतुः, स स्वभावः। यथात्र दृष्टान्ते वृक्षत्वं शिंशपातिरिक्तं न किञ्चिद् उच्चत्वादिकमपेक्षते। अयं हेतुः स्वभावः तादात्म्यप्रयोज्यः।

तृतीयो लिङ्गभेदः कार्यमिति। यथा—अग्निरत्र धूमात्। धूमः कार्यं वह्नेरिति लोकदृष्टम्। न हि धूमोऽग्निं विहायोत्पद्यते, तेन लिङ्गेन वह्निसिद्धिः साध्यस्य साधनेन सह अव्यभिचरितसम्बन्धोऽविनाभावो वा तादात्म्यात् स्वभावात्, साध्यादुत्पत्तेश्च सिध्यति। साध्यसाधनयोर्गम्यगमकभावतादात्म्योत्पत्त्यधीन इति भावः। अत एवोक्तम्—

कार्यकारणभावाद्वा स्वभावाद्वा नियामकात्।
अविनाभावनियमो दर्शनान्न च दर्शनात्।।

एवञ्च पक्षसपक्षदर्शनाद् विपक्षादर्शनाद् अन्वयव्यतिरेकाभ्यां साध्यसाधनयोरविनाभावस्य निश्चयो जायते। अविनाभावस्य सम्बन्धस्य प्रयोजकौ तदुत्पत्तिस्तदात्मत्वं द्वावेव स्थितौ।

## परार्थानुमानम्

त्रिरूपलिङ्गाख्यानं परार्थानुमानम्। पक्षसत्त्वादि त्रिरूपं लिङ्गस्योक्तम्, त्रिरूपस्य लिङ्गस्य आख्यानं कथनं वचनं वा परार्थानुमानम्। त्रिरूपलिङ्गाख्यानात् त्रिरूपलिङ्गस्मृतिरुत्पद्यते, स्मृतेश्चानुमानं भवति। तस्यानुमानस्य यद्यपि साक्षात् त्रिरूपं लिङ्गमेव कारणम्, तथापि परम्परया तदाख्याने कारणत्वोपचारो भवति। अत एव त्रिरूपलिङ्गाख्यानं परार्थानुमानमिति न्यायबिन्दौ व्युत्पादितम्।

अनुमानस्य निमित्तं त्रिरूपं लिङ्गम्। तच्च स्वयं प्रतीतं परेण वा प्रतिपादितं सद् अनुमानस्य निमित्तं भवतीति अनुमानद्वैविध्यं जातम्। तच्च परार्थानुमानं द्विविधं प्रयोगभेदाद् भवति। प्रयोगस्य अभिधानशब्दस्य भेदादेव द्वैविध्यं न

पुनरर्थतो भेदः। तच्च द्वैविध्यं साधर्म्यवद् वैधर्म्यवच्चेति। सधर्मस्य भावः साधर्म्यम्। विधर्मस्य भावो वैधर्म्यम्। दृष्टान्तधर्मिणा साध्यधर्मिणः सादृश्यं हेतुकृतं साधर्म्यमुच्यते। असादृश्यं च हेतुकृतं वैधर्म्यमुच्यते। साधर्म्ये यथा यत् कृतकं तदनित्यं यथा घटः, तथा च कृतकः शब्दः। वैधर्म्ये यथा—यन्नित्यं तत्कृतकं दृष्टं यथा आकाशम्, शब्दस्तु कृतक इति। कृतकत्वाकृतकत्वकृतं शब्दाकाशयोः साध्यदृष्टान्तधर्मिणोरसादृश्यमिहाभिधेयम्। पूर्वस्मिन् प्रयोगे कृतकत्वकृतं साध्यदृष्टान्तधर्मिणोः सादृश्यमभिधेयम्।

अत्रापि त्रिरूपस्य लिङ्गस्य त्रयः प्रकाराः—अनुपलब्धिः, स्वभावः, कार्यञ्चेति। यथोदाहरणानि—

साधर्म्यवत्परार्थानुमानस्य अनुपलब्धिभेदस्योदाहरणम्—यदुपलब्धिलक्षणं प्राप्तं सन्नोपलभ्यते सोऽसद्व्यवहारविषयः सिद्धः। यथान्यः कश्चिद्दृष्टः शशविषाणादिः, साध्यधर्मिणोऽन्यो दृष्टान्त इत्यर्थः। अयं भावः—उपलब्धिलक्षणं प्राप्तोऽपि यो न दृश्यते, सोऽसद्व्यवहारविषयः सिद्धः। यथान्यः कश्चिद् दृष्टः शशविषाणादिः। दृश्यानुपलम्भात् साधर्म्यात् क्वचित् प्रदेशविशेषे तथा उपलब्धि-लक्षणप्राप्तोऽपि घटो नोपलभ्यते। दृश्यमनुपलब्धमसद्व्यवहारयोग्यमेव।

स्वभावहेतोः साधर्म्यवतः प्रयोगो यथा—यत्सत् तत् सर्वमनित्यं यथा घटादिः। सत्त्वेन स्वभावेन हेतुना पक्षदृष्टान्तयोः साधर्म्यमत्र।

कार्यहेतोः साधर्म्यवतः प्रयोगो यथा—यत्र धूमस्तत्राग्निः, यथा महानसादौ, अस्ति चेह धूम इहापि सिद्ध एवाग्निरिति।

त्रिरूपलिङ्गप्रकारत्रयस्य वैधर्म्यवतः प्रयोगाः—

अनुपलब्धिहेतोर्वैधर्म्यवतः प्रयोगो यथा—यत् सद् उपलब्धिलक्षणं प्राप्तं तदुपलभ्यत एव यथा नीलादिविशेषः। न चैवमिहोपलब्धिलक्षणप्राप्तस्य सतो घटस्योपलब्धिः। अत्र सत्त्वासत्त्वेन नीलघटयोर्वैधर्म्यम्। दृष्टान्ते सत्त्वेनोपलब्धिः साध्यते पक्षे च घटे उपलब्ध्यभावेनासत्त्वं साध्यते।

स्वभावहेतोर्वैधर्म्यवतः प्रयोगो यथा—असत्यनित्यत्वे नास्ति सत्त्वमुत्पत्तिमत्त्वं वा कृतकत्वं वा, स च शब्द उत्पत्तिमान् कृतको वा। अत्र हेत्वभावेन साध्याभावो व्याप्त उक्तः। साध्यस्यानित्यत्वरूपस्याभावः सत्त्वादिहेतोरभावेन व्याप्तः। पक्षे च शब्दे सत्त्वादिसद्भावादनित्यत्वं साध्यते।

कार्यहेतोर्वैधर्म्यवतः प्रयोगो यथा—असत्यग्नौ न भवत्येव धूमः, अत्र चास्ति। अत्रापि वह्न्यभावो धूमाभावेन व्याप्तः। एवं संक्षेपेण स्वार्थपरार्थानुमानमत्र प्रदर्शितम्, विस्तरेण न्यायबिन्दौ प्रतिपादितम्, तत्रैव विस्तरार्थिना द्रष्टव्यमिति।



# श्रीनीलकण्ठदीक्षितस्य शिवलीलार्णवः

**डॉ. ददन-उपाध्यायः**
सहायकसम्पादकः, प्रकाशनसंस्थानस्य
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये
वाराणसी



इह खलु महतः हर्षप्रकर्षस्य विषयोऽयं यद् प्रज्ञाधनैः प्रतिभाभासुरहृदयैः महाकविभिः श्रीनीलकण्ठदीक्षितैः प्रणीतं शिवलीलार्णवनाम महाकाव्यं श्रीपरब्रह्मपरमेश्वरशिवस्वरूपस्य सुन्दरेश्वरस्य श्रवणमनननिदिध्यासनाख्यसंस्तव-स्वरूपं सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य प्रकाशनसंस्थानेन प्रकाशतामानीतम्। तस्य शिवलीलार्णवस्यात्र परिचयात्मको विमर्शः प्रस्तूयते।

शिवलीलार्णवमहाकाव्यस्य रचयिता भरद्वाजगोत्रीयः श्रीनीलकण्ठदीक्षितोऽस्ति। महाकाव्यमिदं द्वाविंशतिसर्गात्मकम्। महाकाव्यस्यास्य वर्ण्यविषयो मदुरैस्थितस्य हालास्यनाथस्याख्यानं विद्यते। यथा तेनैवोक्तम्—

**लीलां चतुष्षष्टिमिमां प्रणीतां हालास्यनेतुस्तरुणेन्दुमौलेः।**
**श्रीनीलकण्ठे मयि कर्णजाहमानीय मीनाक्षि! चिरं दयेथाः ।।**

(शिवली. २२.९६)

## नीलकण्ठदीक्षितस्य व्यक्तित्वम्

श्रीनारायणदीक्षितस्यात्मजः श्रीनीलकण्ठदीक्षितः सप्तदशशताब्द्यां स्वजनुषा भारतभुवमलञ्चकार। अस्य मातुर्नाम भूमिदेवी आसीत्। अयं भारद्वाजगोत्रीयः कर्मनिष्ठः श्रोत्रियो याज्ञिको ब्राह्मणश्चासीत्। महानुभावोऽयं स्वकीयब्राह्मणत्वोपरि गर्वमनुभवति स्म। अस्य गुरुः श्रीवेङ्कटेश्वरः 'अय्यादीक्षितः' इत्यपरनामासीत्। स्वकीयाद् भ्रातृव्यादप्पयदीक्षिताद् व्याकरणं धर्मशास्त्रञ्चाधीतवान्। स्वयं गङ्गावतरणस्य पुष्पिकायां स्वपरिचयमुपस्थापितवान्। यथा—श्रीमद्भरद्वाजकुल-जलधिकौस्तुभश्रीनीलकण्ठमतप्रतिष्ठापनाचार्यचतुरधिकशतप्रबन्धनिर्वाहकमहा-व्रतवाजिश्रीमदप्पयदीक्षितसोदर्यश्रीमदाच्चादीक्षितपौत्रेण नारायणदीक्षितात्मजेन

श्रीनीलकण्ठदीक्षितेन ....। स्वकीये महाकाव्ये तस्याप्पयदीक्षितस्य नाम सबहुमानं स्मृतवान्। यथा—

**कालेन शम्भुः किल तावतापि कलाश्चतुष्षष्टिमिताः प्रणिन्ये ।**
**द्वासप्ततिः प्राप्य समाः प्रबन्धाञ्छतं व्यधादप्पयदीक्षितेन्द्रः ।।**

(शिवली. १.६)

मदुरैनगरस्य तिरुमलनायकादीनां राज्ञां सचिवपदे पञ्चत्रिंशद्वर्षं यावत् कार्यं कृतवान्। तत एकोनषष्ट्यधिकषोडशशततमे वर्षे सेवानिवृत्तः ताम्रपर्ण्यास्तटे पालामदुईग्रामे आश्रमं निर्माय जीवनयापनं कृतवान्। ग्रामोऽयं राज्ञः अग्रहाररूपेण प्राप्तः। अस्मिन् ग्रामे श्रीदीक्षितस्य समाधिस्थलमद्यापि विद्यमानं वर्तत इति श्रूयते। अयं परमशैवो याज्ञिक आसीत्। शैवागमसिद्धान्तप्रचारायैव काव्यमिदं प्रणीतम्।

**तस्य कृतित्वम्**

श्रीनीलकण्ठदीक्षितस्यानेके ग्रन्थाः समुपलभ्यन्ते। इमे अवलोकनीयाः सन्ति—

| | | |
|---|---|---|
| १. अघविवेकः | – | धर्मशास्त्रस्य |
| २. कैय्यटव्याख्या | – | व्याकरणस्य |
| ३. शिवतत्त्वरहस्यम् | – | दर्शनस्य |
| ४. शिवलीलार्णवः | – | द्वाविंशतिसर्गात्मकं महाकाव्यम्। |
| ५. गङ्गावतरणम् | – | अष्टसर्गात्मकं महाकाव्यम्। |
| ६. कलिविडम्बनम् | – | खण्डकाव्यम् |
| ७. सभारञ्जनम् | – | ,, |
| ८. शान्तिविलासः | – | ,, |
| ९. अन्यायदेशशतकम् | – | ,, |
| १०. वैराग्यशतकम् | – | ,, |
| ११. आनन्दसागरस्तवः | – | भक्तिकाव्यम् |
| १२. शिवोत्कर्षमञ्जरी | – | ,, |
| १३. चण्डीरहस्यम् | – | ,, |
| १४. रामायणसारसङ्ग्रहः | – | ,, |
| १५. रघुवीरस्तवः | – | भक्तिकाव्यम् |

१६. नलचरितनाटकम् – दृश्यकाव्यम्
१७. नीलकण्ठविजयम् – चम्पूकाव्यम्
१८. मुकुन्दविलासः – (अप्रकाशितम्)

ग्रन्थसरणिमवलोक्य ज्ञायते यदयं श्रीनीलकण्ठदीक्षितः सर्वशास्त्रकोविदो लेखनकलानिपुणश्चासीत्। स्वकीयग्रन्थवैभवेन संस्कृतसाहित्यवाङ्मयस्य श्रीवृद्धिं कृतवान्।

**शिवलीलार्णवः**

श्रीनीलकण्ठदीक्षितप्रणीतः शिवलीलार्णवो द्वाविंशतिसर्गात्मकं महाकाव्यमस्ति। शिवा च शिवश्च शिवौ, लीलाश्च लीलाश्च लीलाः, शिवयोः लीला अर्णव इव, शिवलीला एवार्णवो वा तमधिकृत्य कृतो ग्रन्थः शिवलीलार्णवः। यद्यपि शिवलीलाः समुद्र इवावगाह्यमानाः सन्ति, तथाप्यत्र काव्ये चतुष्षष्टिलीलानां वर्णनं वर्तते। यथा स्वयं कविनैवोक्तम्—

**लीलां चतुष्षष्टिमिमां प्रणीतां हालास्यनेतुस्तरुणेन्दुमौलेः ।**
**श्रीनीलकण्ठे मयि कर्णजाहमानीय मीनाक्षि! चिरं दयेथाः ।।**

(शिवली. २२.९६)

काव्यस्यास्याख्यानं स्कान्दस्यागस्त्यसंहितायाः गृहीतम्, तदेव कविवर्णनानैपुण्येन काव्यरूपेण प्रस्तौति महाकविः। तत्र शिवतत्त्वविषये कश्चिद् विचारः प्रस्तूयते। शेतेऽस्मिन् सर्वमिति शिवः, व्युत्पत्त्याऽनया शीङ्शयने धातोः वन्प्रत्यये कृते निपातनाद् ह्रस्वे जाते शिवशब्दः निष्पद्यते। यस्मिन् समस्तः प्रपञ्चः शेते, अवस्थितो भवति। यत्र समस्तः प्रपञ्च उत्पद्यते, तिष्ठति, लीयते च तत्तत्त्वं शिव इति। अनेन शिवशब्दः सर्वजगदधिष्ठानस्य वाचकोऽस्ति। शिव एव जगतो निमित्तोपादानकारणम्। संसारस्य श्रेयसः सम्पादनात् शङ्करः कथ्यते। स्वयं भूतसिद्धनित्यानादिस्वरूपत्वात् शम्भुः, अविकारी-निश्चल-सर्वविक्रियाशून्यत्वात् स्थाणुः, समस्तस्य संसारस्य लयस्थानत्वात् शर्वः, मृडः, रुद्र इत्यभिधीयते। अयं महान् ईश्वरः, देवो वेति, महेश्वरः, महेशः महादेवो वास्ति। सम्पूर्णचराचरभूतस्य पतिः, पालकः, अधिष्ठाता, अतो भूतेशः, भूतपतिरयम्। समस्तानां पशूनां जीवानामधिपतिः आत्मा, तस्मात्पशुपतिः। अनेन प्रकारेण शिवस्यानन्तानि नामानि अनन्तान् गुणान् प्रकटयन्ति। तापत्रयविनाशकस्य त्रिशूलधारिणो भूतपतेर्भवानीपतेरष्टमूर्तेः शिवस्य महिमा अगमः, अगोचरः, अकथनीयश्च वर्तते। तस्य महिमानं गणयितुं वागधिष्ठातृदेवी शारदाऽपि नैव क्षमा। सुष्ठूक्तं पुष्पदन्ताचार्यैः शिवमहिम्नःस्तोत्रे—

**असितगिरिसमं स्यात् कज्जलं सिन्धुपात्रे**
**सुरतरुवरशाखा लेखनी पत्रमुर्वी ।**
**लिखति यदि गृहीत्वा शारदा सर्वकालं**
**तदपि तव गुणानामीश पारं न याति ।।** (शिवम., श्लोक ३२)

स एव शिवो देवानामप्यधीश्वरः, सर्वश्रेष्ठः सर्वपूज्यश्चास्ति। श्वेताश्वतरोपनिषदि प्रोक्तम्—

**तमीश्वराणां परमं महेश्वरं तं देवतानां परमं च दैवतम् ।**
**पतिं पतीनां परमं परस्ताद् विदाम देवं भुवनेशमीड्यम् ।।**

(श्वेता. ६.७)

अथर्वशिरस्युपनिषद्यपि कथितम्—

**'यत् सूक्ष्मं तद् वैद्युतं, यद् वैद्युतं तत्परं ब्रह्म, यत्परं ब्रह्म स एकः, य एकः स रुद्रः स ईशानः, य ईशानः स भगवान् महेश्वरः'।**

(अथर्वशि. ३)

सर्वागमसारभूतमव्याजकारुण्यामृताब्धि शिवतत्त्वमेवैकमालम्बं त्रयाणां जगताम्। तदेवोक्तं शिवलीलार्णवे श्रीनीलकण्ठदीक्षितेन—

**आलम्बमेकं जगतां त्रयाणामव्याजकारुण्यसुधानिधानम् ।**
**तं तादृशं त्वामपहाय शम्भो! किं तावदन्यैरिह किम्पचानैः ।।**

(शिवली. २२.९२)

अतः शिवतत्त्वमेव श्रोतव्यं मन्तव्यं ध्यातव्यं द्रष्टव्यं वर्तते। यथोक्तं तत्रैव—

**श्रोतव्यं निधिरस्ति कोऽपि निहितो हालास्य इत्यग्रतो**
**मन्तव्यं स निधिर्जगन्निधिरिति न्यायैरथोच्चावचैः ।**
**ध्यातव्यं हृदि मूललिङ्गमथ च श्रीसुन्दरेशाभिधं**
**द्रष्टव्यं शफरेक्षणासहचरं तत्त्वं ततः शाङ्करम् ।।** (शिवली. २२.९५)

**लीलातत्त्वम्**

अथ लीलातत्त्वोपरि विदुषां दृष्टिराक्षिप्यते। 'लयनं लीः' इति व्युत्पत्त्या 'लीङ् श्लेषणे' (दि.आ.अ.) धातोः 'सम्पदादित्वात् क्विप्' (वा.३.३.१०८) इति क्विपप्रत्यये कृते, लियं लातीति व्युत्पत्त्या 'ला आदाने' (अ.प.अ.) धातोः 'आतोऽनुपसर्गे कः' (पा. ३.२.३) इति कप्रत्यये कृते लीलाशब्दो निष्पद्यते, ''लेलायनं लीला' इति व्युत्पत्त्या 'लेला दीप्तौ' इति कण्ड्वादिधातोः

'षिद्भिदादिभ्योऽङ्' (पा. ३.३.१०४) इति अङ्, 'अप्रत्ययात्' (पा. ३.३.१०२) इति 'अ'प्रत्यये वा कृते लीलाशब्दो निष्पद्यते, तस्माद् वाग्वेषचेष्टितैः श्लिष्टा प्रियस्यानुकृतिर्लीला कथ्यते। यथोक्तं हैमे—

**लीला केलिविलासश्च शृङ्गारभावजा क्रिया।** (हैम. २.५२०)

अमरकोशेऽपि शृङ्गारभावजा क्रिया लीला कथिता, यथा तत्रोक्तम्—

**हेला लीलेत्यमी हावाः क्रियाः शृङ्गारभावजाः।** (अमर.१.७.३२)

नाटकरत्नकोशेऽप्युक्तम्—

**लीला विलासो विच्छित्तिर्विभ्रमः किलकिञ्चितम् ।**
**मोट्टायितं कुट्टमितं विब्बोको ललितं तथा ।**
**विहृतं चेति मन्तव्या दश स्त्रीणां स्वभावजाः ।।**

साहित्यदर्पणेऽपि लीलाशब्दस्य व्याख्यानं कृतं श्रीविश्वनाथमहापात्रैः। तद्यथा—

**अङ्गैर्वेषैरलङ्कारैः प्रेमभिर्वचनैरपि ।**
**प्रीतिप्रयोजितैर्लीलां प्रियस्यानुकृतिं विदुः ।।** (सा.द. ३.१४०)

विश्वकोशेऽपि लीलाशब्द व्याख्यातः। यथा—

**लीलां विदुः केलिविलासखेलाशृङ्गारभावप्रभवक्रियासु।** इति।
(विश्व. १५२.४५)

सा लीला प्रकटाप्रकटभेदेन द्विधा भवति। यथोक्तं पद्मपुराणे—

**प्रकटाप्रकटा चेति लीला सेयं द्विधोच्यते।**

पुराणेषु भगवतः शिवस्यासंख्या लीला वर्णिताः। तस्य लीलाः समुद्र इव मानवैरनवगाह्या विद्यन्ते। मानवाः स्वविवेकबुद्ध्या शिवस्य लीलां वर्णयन्ति। श्रीनीलकण्ठदीक्षितोऽपि शिवस्य लीलामसंख्येयामनवगाह्यां च सिन्धुमिव मत्वा चतुष्षष्टिलीलानां वर्णनं कृतवान् काव्येऽस्मिन्। यथा तैरेवोक्तम्—

लीलास्वनन्तास्वपि यस्य दृष्टा लीला चतुष्षष्टिरियं पुराणे। (शि., २२.९१)

परब्रह्मणः परमेश्वरस्य शिवस्य चतुष्षष्टिलीलानां वर्णनं कृतं महाकविना दीक्षितेन। पुनश्च तासामुद्देशकथनपूर्वकमन्तिमे द्वाविंशे सर्गे देवैः कृते सुन्दरेश्वरस्य स्तुतौ वर्णनमस्ति। येन चतुष्षष्टिलीलानां परिज्ञानं सङ्क्षेपण भवितुमर्हति। ते च श्लोकाः तत्रैव काव्ये (२२/६१-९६) अवलोकनीयाः शिवस्वरूपस्य सुन्दरेश्वरस्य माहात्म्यं वर्णयता महाकविना तत्रैवोक्तम्। तद्यथा—

भोगाङ्गपूजावसरे पुरारेः समागतास्तत्र सुराः समस्ताः।
आलोक्य लीलायितमद्भुतं तद् भक्त्या नतास्तुष्टुवुरिन्दुचूडम् ।।
क्व ते दया वाङ्मनसातिभूमिः क्व दुर्लभो वा त्वदवाप्त्युपायः।
अहो जितं सुन्दरनाथ! मर्त्यैरहो जितं तत्र च दीनदीनैः।।
गुप्तं वृथा कोटिभिरागमानां गुप्तं वृथाहो गुरुभिः पुराणैः।
कोणे यदत्र त्वमिहानुकम्पाकोशालयद्वारमपावृणोषि ।।
अस्माभिरज्ञानपि तारयद्भिः कियान् प्रकर्षो विबुधेषु कार्यः।
इति त्वया चिन्तयता किमीश! प्रतारिता स्मस्त्रिदिवार्पणेन ।।
पाण्ड्यप्रियं त्वां विदती शिवापि पाण्ड्यात्मजासीद्यदि का कथा नः।
पाण्ड्येषु जायेमहि खञ्जरीटाः कोयष्टयः कोलकिशोरका वा ।।
लीलासु ते लब्धसरूपभावा ग्राम्या इमे पाण्डुषु चन्द्रमौले!।
जिघ्रन्ति केचिद् विलिखन्ति केचिच्चर्वन्ति केचिदवतंसमिन्दुम् ।।
त्वं तावदत्यन्तमृदुः प्रजासु त्वत्तोऽपि मृद्वी गृहिणी तवेयम् ।
अद्यायतौ वा चरतोः किलैवमात्मैकशेषो भविता ध्रुवं वाम् ।।
कैवल्यदानाय कृतप्रतिज्ञौ काशीपतिः पाण्ड्यपतिर्युवां द्वौ ।
शिष्यैकविश्रान्तममुष्य दानं सार्वत्रिकं तारकमेव शम्भो! ।।
विश्वस्य दीर्घां श्रवणादिभङ्गीं वीतोद्यमाः स्मश्चिरमीश! मोक्षे ।
सम्प्रत्यवाबुद्ध्यत वाक्यशेषपञ्चाक्षरीयं मधुरा विनेति ।।
ये ये जना यद्यदिहार्थयन्ते तत्तन्निरस्तोपधि तेषु तेषु ।
ओमित्यलोभादनुजानतः किमोमित्यभिख्यैव तवेयमासीत् ।।
अन्वेषणीयं किमनाहते ते तत्त्वं हताः स्मो वयमागमौघैः।
विस्पष्टमत्राहत एव तत्त्वं वेत्रेण पाण्ड्यस्य यदीक्षितं तत् ।।
स्वरूपमेतत् तव सुन्दरेश! शुद्धा दयेत्येव तु लक्षयामः।
कदम्बमूलन्तु तटस्थलक्ष्म कारुण्यसिन्धो! तव तर्कयामः।।
(शिवली.२२.४९-६०)

अन्ते महाकविः श्रीनीलकण्ठदीक्षितोऽद्भुतं शिवलीलार्णवकाव्यं शिवयोः चरणकमलेष्वर्पयति। प्रकारेणानेन शिवलीलार्णवः सम्पूर्णतां याति।

**काव्यसमीक्षा**

श्रीमद्भरद्वाजकुलावतंसेन श्रीमदाच्चादीक्षितपौत्रेण नारायणदीक्षितात्मजेन श्रीनीलकण्ठदीक्षितेन विरचितेऽस्मिन् शिवलीलार्णवे महाकाव्ये द्वाविंशतिः सर्गाः शिवभक्तितत्पराणां मीनाक्षीसहितसुन्दरेश्वरसमुपासकानां पाण्ड्यवंशोद्भवानां विंशत्यधिकानां भूपानां वर्णनं विद्यते। अत्र शान्तरसः प्रधानरूपेण वर्णितः, अन्येषामपि सर्वेषां रसानां वर्णनमुपलभ्यते। स्कान्दस्यागस्त्यसंहितातो वृत्तमुद्भावितम्। आदौ वस्तुनिर्देशात्मकं मङ्गलमाचरितम्। यथा—

**पूतं स्वतः पूततरं यद् गाङ्गं पयः शङ्करमौलिसङ्गात् ।**
**तत्पातु मातुः प्रणयापराधपादाहतैः पूततमं ततो नः ।।**

(शिवली० १.१)

खलनिन्दाप्रसङ्गे कविः कथयति यद् ब्रह्मा सृष्टिकाले दुर्बुद्धीनां खलानां वक्त्रं लशुनैर्निम्बसारैश्च पूरितवान्, तेनैव तेषां मुखे पूतिगन्धः तिक्तभावश्च विद्यते। यथा—

**आपूर्य वक्त्रं लशुनैर्विधाता किं निम्बसारैः कुधियामसिञ्चत् ।**
**न चेत् कथं वाचि ततः क्षरन्त्यां स पूतिगन्धः स च तिक्तभावः ।।**

(शिवली० १.४३)

एकवृत्तमयैः पद्यैर्नातिस्वल्पा नातिदीर्घा द्वाविंशतिः सर्गाः काव्येऽत्र वर्तन्ते। विंशैकविंशौ सर्गौ नानावृत्तमयौ रचितौ। अस्य काव्यस्य वृत्तनिर्धारणमस्मत्कृते परिशिष्टेऽवलोकनीयम्। काव्येऽस्मिन् अष्टाविंशतिच्छन्दसां प्रयोगो विहितः। तत्र द्रुतविलम्बितस्य छटामवलोकयन्तु सुधयः—

**यदि मरुद् विजितं विजितं मनो यदि मनो विजितं विजितं जगत् ।**
**जितवतां मरुतं च तदर्वतां किमभिधेयमतस्त्रिजगज्जये ।।**

(शिवली० २१.४१)

महाकविना युग्मक-कलापक-कुलक-चक्कलकानां पद्यानां प्रयोगो विहितः। कुलकस्य प्रयोगमवलोकयन्तु विज्ञाः। 'पञ्चभिः कुलकं मतम्' इत्यनया रीत्या कुलकस्य प्रयोगः। यथा—

**चूडासङ्घटितसुवर्णपद्मदामव्यामिश्रग्रथितविलम्बिमौक्तिकौघा ।**
**प्रालम्बालकनिकरान्तराललक्ष्यव्यावल्गच्छफरविलोललोचनश्रीः ।।**

**कर्णाभ्यां मदनकराङ्गुलीयकाभं ताटङ्कं मणिखचितं विभूषयन्ती ।**
**अव्याजस्मितभणितान्तरालदृश्यप्रत्यग्रप्रसृमरदन्तकुन्तपङ्क्तिः ।।**

**वक्त्रेन्दुव्यतिषजदेणभीतिहेतोर्वैयाघ्रं नखमधिकन्धरं दधाना ।**
**त्रातुं त्रीनिव तनयान् विधीशविष्णुंस्त्रीन् वक्षोरुघ्वलयान् समुद्वहन्ती ।।**

**अभ्यग्रोन्मिषदमरद्रुपल्लवाभे कुर्वाणा कुवलयकन्दुकं कराग्रे ।**
**सौवर्णाम्बरविलसन्नितम्बबिम्बव्यालम्बिस्फुटमणिमेखलाकलापा ।।**

**अम्बाम्बेत्यमृतरसं गिरा किरन्ती मञ्जीरक्वणितमनोहरं चरन्ती ।**
**सा बाला स्वयमभजन्नृपालपत्न्याः पर्यङ्कं श्रुतिशिखरैः कृताभ्यसूयम् ।।**

(शिवली० ६. ७२-७६)

सन्ध्यासूर्येन्दुरजनीप्रदोषध्वान्तवासरप्रातर्मध्याह्नमृगयाशैलर्तुवननदीसागरादीनां च वर्णनं यत्र तत्र काव्येऽत्र समुपलभ्यते। नदीवर्णनप्रसङ्गे ताम्रपर्णीं नदीं वर्णयता महाकविना प्रोक्तं यत् ताम्रपर्णीं विहाय शङ्करस्य गङ्गां प्रति प्रीतिः कैतके सत्यपि अर्के प्रीतिरिव वर्तते। यथा—

**यां सर्वरत्नैकखनिं विहाय गङ्गामधात् केन गुणेन शम्भुः ।**
**का प्रीतिरर्के सति कैतकेऽपि न हीश्वरा पर्यनुयोज्यशीलाः ।।**

(शिवली० २.२३)

वसन्तर्तुं वर्णयन् कविः कथयति—

**अध्वर्युं मलयसमीरमन्यपुष्टं होतारं वनभुवि सामगं द्विरोकम् ।**
**ब्रह्माणं मधुमपि सादरं वृणाना आजह्रुर्मदनमष्टाध्वरं युवानः ।।**

(शिवली० ६.१६)

नगरवर्णनक्रमे कविश्चतुर्थे सर्गे मधुरां पुरीमवर्णयत्।

तत्र तस्या मधुराया नगर्य्या नामसार्थक्यं वर्णयति। यथा—

**दिव्यैः सुधामयैर्मेघैर्देवो जीमूतवाहनः ।**
**नगरं सेचयामास नवीनं त्रीण्यहानि सः ।।**

**मधुरोदकसंसिक्ता मधुरेयं महापुरी ।**
**इत्यश्रूयत तत्रत्यैर्दिव्या वागशरीरिणी ।।** (शिवली० १०५-१०६)

नवनवानां शब्दानां प्रयोगे तु महाकविः श्रीनीलकण्ठो माघमपि अतिशेते। प्रतीयते शब्दपुनरुक्तिस्तु नगण्या वर्तते। अतः मम मनसि भासते, यत्—

**नवसर्गे गते माघे रिक्ता तस्य सरस्वती ।**
**नवसर्गप्रयोगेऽपि जितानेन सरस्वती ।।**

एकस्य शब्दस्य बहुष्वर्थेषु चैकत्र प्रयोगो दृश्यतेऽस्मिन् काव्ये। पुष्करशब्दस्य चतुर्ष्वर्थेषु प्रयोगोऽवलोकयन्तु सहृदयाः—

**पुष्करैरभिषिच्येशौ पुष्करोपहृतैरयम् ।**
**पुष्करैरेव चानर्च पुष्करं गाहितुं पुनः ।।** (शिवली० ४.३५)

अत्र चतुर्णां पुष्करपदानां जलशुण्डादण्डपद्मव्योमानीति क्रमेणार्थाः सन्ति। जितशब्दस्य प्रयोगच्छटा सहृदयमनांसि जयति। अवलोकयन्तु तावत्—

**जिता त्वया यत् पृथिवी न तज्जितं जिताश्च यद्देवि! सुरा न तज्जितम् ।**
**अनेन यूना यदनन्यनिर्जितं जितं वधूजन्म तदूर्जितं जितम् ।।**

(शिवली० ११.४७)

अलङ्काराणां प्रयोगे कविः सर्वत्र दत्तावधानो दृश्यते। अस्मिन् काव्ये उपमारूपकोत्प्रेक्षाविरोधाभासव्यतिरेकदीपकादीनामलङ्काराणां रामणीयकं द्रष्टुं शक्यते।

तत्रोपमां पश्यन्तु—

**क्षुद्रद्वीपमिव चण्डमारुता शुष्कगुल्ममिव दानपावकः ।**
**ध्वान्तवृन्दमिव भास्करोदयस्तद्बलं नरबलं व्यनीनशत् ।।**

(शिवली० १०.८१)

उत्प्रेक्षाया छटापि प्रेक्षणीया वर्तते। तत्र हरो विवाहसमये काञ्चनमम्बरं धृतवान्। तस्य वर्णनमवलोकयन्तु—

**दिगम्बरः काञ्चनमम्बरं हरो बभारेति न विस्मयाय नः ।**
**तनुत्विषा तस्य दिशो दशापि यत् प्रतप्तकार्तस्वरभास्वरीकृता ।।**

(शिवली० ११.२८)

शङ्कराय जनानां कस्तूरिकाकर्पूरार्पणं प्रति कवेरुत्प्रेक्षावलोकनीयास्ति। यथा—

**कृष्णार्जुनाभ्यां परिपूज्य लिङ्गमासादिता सिद्धय इत्यवेत्य ।**
**कस्तूरिकाभिर्घनसारकैश्च लिम्पन्ति लोका खलु लिङ्गमेतत् ।।**

(शिवली० २.५४)

महाकविरयं कस्यापि वस्तुन आलङ्कारिकं चित्रणं कर्तुं सिद्धहस्तः प्रतिभाति। नारीनिर्माणविषये विचारोऽवलोकनीयः, तद्यथा—

**दुर्दान्तं मदनमवेक्ष्य निर्ममे किं वर्मैकं युवसु वधूमयं विधाता ।**
**यद्योगे मदनशराः प्रसूनमात्रं यत्त्यागे कुलिशदशाममी वहन्ति ।।**

(शिवली० ६.२८)

राज्ञः प्रतापस्य कीर्तेर्मनोहरं वर्णनमवलोकयन्तु—

**भेरीरवश्चलति योजनमेव यावत् तावत् ततो दशगुणं चलितः प्रतापः ।**
**कीर्तिस्ततो दशगुणं व्यचलत् ततोऽपि चेलुस्ततो दशगुणं विमता विदूरे ।।**

(शिवली० ९.१५)

कान्तासम्मितोपदेशाय काव्यं भवति; परन्तु कुलशेखरेण नृपेण पुत्रस्य मलयध्वजस्य शिक्षणमाध्यमेन लोकान् उपदिशति कविः। तद्यथा—

**धृतां चिराय त्रिजगद्धुरन्धरे धुरं धरायास्तनयेऽवरोपयन् ।**
**स्वतः स्थितं धर्मपथेऽपि तं पुनः शशास धर्मं सुतवत्सलो नृपः ।।**

(शिवली० ५.१२)

उपदेशोऽयं बाणस्य शुकनाशोपदेशं स्मारयति। एकस्मिन् स्थले कन्यामुपदिशति माता। यथा—

**शुश्रूषष्व प्रेयसः पादपद्मं क्षान्त्या धृत्या प्रेमवत्या च भक्त्या ।**
**लब्ध्वा पुत्रं राज्यभारेऽभिषिच्य द्रष्टास्मि त्वां स्वं पदं प्रत्युपेताम् ।।**

(शिवली. १३.४०)

अयं शकुन्तलां प्रति कण्वस्योपदेशमुखेन कालिदासमनुगमयति।

शैवदर्शनतत्त्वं महाकविः स्वप्रतिभाचातुर्येण काव्ये समुपस्थापयति। शिवभक्तिप्रवणत्वात् शान्तरसप्रधानमिदं काव्यम्; किन्तु रसानामन्येषामपि वर्णनमङ्गत्वेन कृतम्। युद्धवर्णनप्रसङ्गे वीररसस्यानुभूतिर्भवति। मध्ये मध्ये शृङ्गाररसस्य मार्दवमविस्मरणीयमस्ति। कुचद्वयस्य वर्णनप्रसङ्गे कविः कथयति। तद्यथा—

**परस्परस्पर्ध्यपि तत् कुचद्वयं विजेतुकामं किल मेरुमन्दरौ ।**
**तथा समेतं समये मिथः स्वयं यथोपलभ्येत न किञ्चिदन्तरम् ।।**
(शिवली० ११.६६)

नायिकायाः सौन्दर्यवर्णनप्रसङ्गे कवेः काव्यपाटवतावलोकनीया वर्तते। यथा—

**उपासितुं सा पतिमुत्पलप्रियं करे च कर्णे च निवेशितोत्पला ।**
**बभार भूयो नयनोत्पले ततः स्वयं बभूवोत्पलदामकोमला ।।**
(शिवली० ११.६९)

वैदर्भीरीतिप्रधानमिदं काव्यं प्रसादगुणगुम्फितं विराजते। काव्ये शास्त्रान्तरस्य पुटपाकोऽपि सहृदयान् शास्त्रविचारणायामुन्मुखीकरोति। वेदान्तस्यैकेश्वरवादस्य सिद्धान्तं महता कौशलेनोपस्थापयति महाकविः श्रीदीक्षितः। यथा—

**एकं किल ब्रह्म यदद्वितीयं वक्तुं चतस्रः श्रुतयोऽपि नालम् ।**
**तादृग्विधान्येव भजन्ति तस्य ब्रह्माणि पञ्चावयवत्वमुद्राम् ।।**
(शिवली० २.४९)

पञ्चावयवत्वमुद्रा शङ्करस्य सद्योजातवामदेवतत्पुरुषाघोरेशानाख्यमुखपञ्चकत्वं स्मारयति। षष्ठसर्गे ऋषीणां शास्त्रचर्चाप्रसङ्गे सर्वदर्शनानां मतमुपस्थापितम्। शिवागमप्रतिष्ठापनाचार्यो महाकविः श्रीनीलकण्ठदीक्षितः शिवैकनिष्ठतां प्रतिपादयति। यथा—

**शिवं यजाग्नौ शिवमर्च भास्करे शिवं स्मरान्तः शिवमेव कीर्त्तय ।**
**शिवं द्विजेषु प्रतिपूजयानिशं शिवैकनिष्ठो भव तात! सर्वथा ।।**
**शिवात् परं नास्ति यथा तथैव नः शिवोऽपि नान्यो मधुरेश्वरादिति ।**
**सुनिश्चितालम्बितसुन्दरेश्वरः सुखं महीं पालय शाश्वतीः समाः ।।**
(शिवली० ५.२८-२९)

काशीपतेर्विश्वेश्वरस्य तारकमन्त्रदानेन कैवल्यप्रदानस्य माहात्म्यं वर्णयति कविः। यथा—

**कैवल्यदानाय कृतप्रतिज्ञौ काशीपतिः पाण्ड्यपतिर्युवां द्वौ ।**
**शिष्यैकविश्रान्तममुष्य दानं सार्वत्रिकं तारकमेव शम्भोः ।।**
(शिवली० २२.५६)

शिवस्य समुत्कृष्टदयालुतां वर्णयन् तस्य 'ॐ' इति नामसार्थक्यं प्रतिपादयति कवि:। यथा—

**ये ये जना यद्यदिहार्थयन्ते तत्तन्निरस्तोपधि तेषु तेषु ।**
**ओमित्यलोभादनुजानतः किमोमित्यभिख्यैव तवेयमासीत् ।।**

(शिवली० २२.५८)

अनन्तलीलाकारिण: शिवस्य चतुष्षष्टिलीलानां वर्णनमत्र विहितम्। अन्तिमे द्वाविंशे सर्गे तासां गणनामपि कृता सुरस्तुतिव्याजेन।

## संस्करणस्यास्य वैशिष्ट्यम्

यद्यपि ग्रन्थस्यास्य प्रकाशनमित: पूर्वमप्यभवत्; किन्तु मूलमात्रप्रकाशनेनास्य रहस्योद्घाटनं न भवति। पादटिप्पणीपरिशिष्टादिना विभूष्य विस्तृतया पुरोवाचा ग्रन्थस्यालोडनं कृतम्, तेन प्राप्तं रत्नमपि सहृदयानां समक्षमुपस्थापितमस्मिन् संस्करणे, तथापि पूर्वसंस्करणस्याधमर्ण्यं बिभ्रन् कृतज्ञतां व्याहरामि। ग्रन्थस्यान्ते प्रथमपरिशिष्टे सूक्तिरत्नानि समुद्धृतानि। द्वितीये परिशिष्टे काव्ये प्रयुक्तानि प्रमुखशब्दरत्नानि प्रस्तुतानि, यस्यावलोकनेन महाकवेर्नव-नवशब्दप्रयोगचातुरी प्रकटिता भवति। तृतीये परिशिष्टे वृत्तनिर्धारणं प्रस्तुतं, येन काव्यस्यास्य बहुवृत्तताया ज्ञानं भवति, अथ च छन्दोनिर्धारणप्रक्रियाया: प्रयोजनं लक्षणादिकज्ञानपुरस्सरं काव्यकर्त्तु: छन्दःप्रागल्भ्यं ज्ञातुं शक्यते चतुर्थे परिशिष्टे श्लोकानुक्रमणी चानुसन्धानकार्यसहायिका प्रस्तुता भविष्यतीति। पुरोवाग्भागे काव्यस्य कथासार: समीक्षा च यथामति प्रस्तूयते। तस्मात् पूर्वसंस्करणस्य विद्यमानत्वेऽपि संस्करणस्यास्य वैशिष्ट्यमक्षुण्णमिति विभावयामि। यथा कविना शब्दार्थप्रयोगे सुष्ठूक्तम्—

**यानेव शब्दान् वयमालपामो यानेव चार्थान् वयमुल्लिखामः ।**
**तैरेव विन्यासविशेषभव्यैः सम्मोहयन्ते कवयो जगन्ति ।।**

(शिवली० १.१३)



लघु-ग्रन्थमाला

[ ६० ]

# पराम्बास्तुतिशतकम्


प्रणेता सम्पादकश्च

**श्रीविद्याधरदत्तपाण्डेयः**

ऋषिंमन्दिरम्, नई कालोनी

देवरिया






**सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयः**

**वि.सं. २०५८**

# सम्पादकीयम्

**सर्वचैतन्यरूपां वामाद्यां विद्याञ्च धीमहि ।**
**या नः बुद्धिं प्रचोदयात् ।।** (देवीभागवते)

मङ्गलभूतायाः त्रिपदागायत्र्याः सृष्टेरादौ स्थितायाः सर्वचैतन्यरूपाया आद्याया विद्याया ज्ञानस्वरूपाया ध्यानं कुर्महे, या अस्माकं बुद्धिं प्रेरयति, श्रीदेवीभक्तिं प्रवर्तयतीति भावैर्देवीं स्तुवता मया, पुनः स्तवनरूपेणैव किञ्चिद्विनिवेदनीयं प्रस्तूयते—

यद्यपि चराचरात्मकजगत उत्पत्तिस्थितिसंहारकारणभूताया मनोवाञ्छितफल-कल्पलतारूपायाः स्वल्पोपलब्धपाद्यपुष्पाद्युपचारैः प्रसाद्यमानायाः सद्यः सर्वशक्ति-सम्पत्प्रदानशीलायाः पराम्बाया अर्चनवन्दनादीनामस्मिन् अखण्डे भारतवर्षे नैको ग्रामो नगरं महानगरं वनं पर्वतं वा विद्यते, यत्र मृण्मयी प्रस्तरमयी धातुमयी काष्ठमयी विशिष्टा विशिष्टाश्च वा प्रतिमा नास्ति, यत्र तत्रत्या जनाः सर्वसाधारणाः स्त्रियः सर्वे समानरूपेण पर्वणि पर्वणि उत्सवे अन्येष्वपि शुभावसरेषु सङ्घीभूय पृथक्-पृथक् च पूजनं न कुर्वते वरं च नाधिगच्छन्ति।

एतादृशे देवीपूजापरायणे देशे तत्राप्युत्तरप्रदेशीयसरयूपारीणब्राह्मणकुले तत्रापि येन तपसाराधनया च देवी प्रसादिता तस्य पराशरनामर्षेर्गोत्रे पवित्रे प्रसूतस्य मे हृदये देवीपराम्बाचरणारविन्दे भक्तिभावना न भवेदित्यत्र न हि किञ्चित्कारणं भवितुमर्हति, तथापि मम मित्रस्य चुनारे मिर्जापुरस्थस्य डॉ. रामप्यारेमिश्र-व्याकरणशास्त्राचार्यमहोदयस्य प्रश्नोत्तरव्याजेन स्वमनसि पराम्बा-भक्तिप्रादुर्भावस्य कानिचित् कारणान्युद्ध्रियन्ते प्रथमतस्तु कथनीयमेतद् यन्मदीयं कुलं जनपदेऽस्मिन् परम्परया प्रसिद्धेषु विद्वत्कुलेष्वन्यतमतया विख्यातं विशुद्धाचारव्यवहारशीलतया सर्वसाधारणजनानां च सम्मानभाजनमस्ति। मम पितृपितामहपितृव्यादीनां "**ब्राह्मणेन निष्कारणं षडङ्गो वेदोऽध्येयो ज्ञेयश्च**" इति महाभाष्योक्तिमनुसृत्य षडङ्गवेदानामध्ययनमध्यापनं व्यसनमासीत्। तैः स्वभवन एव स्थित्वा पाठशालारूपेण निःस्वार्थतया छात्रा अध्यापिता भवन्ति स्म। तत्रासन्नवर्तिनो दूरतश्चागत्य स्थित्वा चाधीयन्ते स्मान्तेवासिनः। छात्राणां भोजनावासप्रबन्धं च गुरव एव कुर्वन्ति स्म। तत्र नियमतो व्याकरण-काव्यकोश-ज्योतिष-वेद-पुराण-कर्मकाण्डादिग्रन्थानामध्यापनक्रमो निरन्तरं प्राचलत्। मम

पितामहस्य श्रीपण्डितमहावीरदत्तपाण्डेयस्य, तज्ज्येष्ठभ्रातुः श्रीकृष्णदत्तपाण्डेयस्य, मध्यमभ्रातुः श्रीविष्णुदत्तपाण्डेयस्य चोत्कृष्टवैदुष्यतया मम ग्रामस्थपाठशालाया यशः सुदूरं प्रसृतम्। फलतो विद्यार्थिनां संख्या वृद्धिमुपगता। तत्र क्वचिदध्यापनं प्रचलति स्म, क्वचित्पुराणेतिहासकथा, क्वचिच्च श्रावका आगत्य स्वजन्मपत्री-फलादेशं ग्रहशान्तेरुपायं च पृच्छन्ति स्म। तत्र गुरुजना ग्रहशान्त्यैऽभीष्टसिद्ध्यै च प्रतिपादयन्ति बहुश उपायाः, किन्तु समस्तवाञ्छासिद्धिप्रदा करुणावरुणालया पराम्बा श्रीदुर्गादेव्येवेति। सैव सरलतया प्रसीदति। तस्मात् सैवाराधनीयेति बहुधा श्रुतं मया स्वबाल्यावस्थायामिति पुनः पुनः श्रीदेवीमाहात्म्यश्रवणेन मम कोमलमानसपटले सर्वकामदुघा पराम्बैवाराधनीयेति श्रुत्वा भक्तिभावो दृढतयाङ्कितः श्रीजगदम्बायाश्चरणारविन्दे।

अपरञ्च ममाराध्यपितृचरणैः पण्डितप्रवरश्रीऋषिराजदत्तपाण्डेयमहोदयैर्मयि एकाकिनि तनयेऽधिकस्नेहतया ममाध्ययनाय जगज्जननी विन्ध्यवासिनी देवी बहुश आराधिता। तस्याः सन्निधौ सङ्कल्पश्च तेन कृतो यन्मदीयतनयो यदा व्याकरणाचार्यपरीक्षामुत्तरिष्यति तदा तव स्थाने श्रीमद्भागवतं महापुराणं श्रावयिष्यतीति। ममाचार्यपरीक्षोत्तीर्णतानन्तरं पूज्यपादतातप्रवरैः स्वसङ्कल्पवार्ता कथिता। तेषामेवादेशाच्छ्रीविन्ध्यवासिनीदेवीसन्निधावेकवारं श्रीमद्भागवतं तथा देवीभागवतं बहुवर्षाणि निरन्तरं तत्र श्रावितम्। एवं श्रीदेवीभक्तिं प्रति मनः-प्रवणताया निरन्तरता समागता।

एवमेव मम पूज्यपितामहभ्रातृपादैः प्रसिद्धैर्विद्वद्वरेण्यैः कृताः कारिताश्च सफलशक्त्यर्चाप्रयोगा मया स्वयं दृष्टास्तथा तैः कथ्यमाना आकर्णिताश्चेति।

पितृचरणारविन्दानां पितामहभ्रातृचरणारविन्दानामादेशात्स्वयमपि देव्याः कृतमाराधनम्। तत्फलान्यपि स्वजीवने सदैव लब्धानि। यथा शिक्षाकाले श्रेष्ठा गुरवः प्राप्ताः। तातपादानामर्थकार्श्येऽपि पठने कोऽप्यन्तरायो नागतः, चञ्चलमपि मे मनोऽध्ययने सरलतया प्रवर्तितम्। अप्रतिमप्रतिभानां श्रीयमुनाप्रसादपाण्डेय-वैयाकरणधुरीणश्रीनारायणदत्तत्रिपाठिसदृशसहृदयगुरूणां सकाशाद् वाराणस्यां नव्यव्याकरणन्यायकाव्यकोशादीनां शिक्षाधिगता। तत्रानेके सुहृद्वराः, मान्याः सन्तो महात्मानो सन्मार्गदर्शकाः संन्यासिनोऽपि मिलिताः। १९४७ ईसवीये वर्षे आचार्यपरीक्षोत्तीर्णतासमकालमेवाङ्ग्लमाध्यमिकविद्यालयेऽध्यापकत्वरूपा जीविकाऽपि प्राप्ता। ततः शनैः शनैः पितृचरणानामर्थचिन्तापि दूरिता। क्षेत्राणि क्रीतानि। तातपादानां सर्वेषु क्षेत्रेषु साहाय्यं कृतम्।१९५९ ईसवीयाब्दे तातपादेषु वाराणस्यां शिवसायुज्यमुपेतेषु तच्छत्रच्छायायामपगतायामकस्माच्छिरस्यापतितं

दुर्भरमपि परिवारभारं गृहीतम्। पराम्बाराधनाबलेनैव परिवारः पालितः। पञ्च पुत्रास्तिस्रः कन्याश्चावाप्ताः, पञ्च पौत्रा अपि सम्प्रति सन्ति। आर्थिकस्थितेरुन्नयनकाले सम्मुखागताः प्रबला अपि रिपवो जगदम्बाप्रसादादेव पराजयं प्रापिताः। देवरियानगरे स्वनदवानाम्नि ग्रामे च भवनानि निर्मापितानि। प्रतिष्ठापि सर्वक्षेत्रेष्वर्जिता। जीवने अनेकेऽसाध्या रोगा अपि प्रकटितास्तेऽपि तत्कृपयैव नष्टाः। एवं पराम्बानुकम्पाया अगणितानि सुखान्यनुभूतानि। एते स्वकीया अनुभवा अपि देवीभक्तिदार्ढ्यवर्धने कारणीभूताः। यद्यपि दैवदुर्विपाकतया पुत्रद्वयमृत्युरूपासह्यक्लेशोऽप्यनुभूतो जीवने। तमपि पराम्बानुकम्पामेव मन्यमानोऽनायासेन सहे। एतस्याभिव्यक्तिः पराम्बास्तुति-शतके—

**जननि तव विधानं नैव जानन्ति केचि-**
**दुपकृतिपरिपाटी योगिभिश्चाप्यगम्या।**
**समविषमविधौ ते भाति यन्नानुकूलं**
**यदपि च परिणामे सौख्यदं नूनमेव ।।** इत्यादिश्लोकेषु कृता।

अन्यच्च, यदा स्वतः शास्त्राणामध्ययने तदर्थावगमे स्वकीये प्रवेशे जाते पुराणानि पठितानि श्रीदुर्गासप्तशतीप्रभृतयो ग्रन्थाश्चाधीतास्तदा तु सर्वत्रैवैतदेवोग्दीतं पठितं यद् देवी पराम्बैव चराचरात्मकजगत एव नहि अपि तु निखिलब्रह्माण्डानां जननी। लूतेव सैव निमित्तोपादानकारणभूता। सैवाखण्डब्रह्माण्डनायिका। सैव नित्या शाश्वती च सैवात्मानं विश्वरूपेण विवर्तयति। सैव सृष्टिपालनसंहारार्थं ब्रह्मविष्णुशङ्कररूपाणि प्रकटयति। सैव स्वयं महाकाली-महालक्ष्मी-महासरस्वती भूत्वा ब्रह्मविष्णुरुद्राणां शक्तिरूपा सती सृष्टिकार्याणि करोति पालयति संहरति च। साम्बैव पुत्रदारतनयादिभौतिकसुखदात्री, यथोक्तं श्रीदुर्गासप्तशतीस्तोत्रे—

**स्तुता सम्पूजिता पुष्पैर्धूपदीपादिभिस्तथा ।**
**ददाति वित्तं पुत्रांश्च मतिं धर्मे गतिं शुभाम् ।।**

इति द्वादशाध्याये पठितम्। सैव मोक्षमपि ददाति, यथा—

**या मुक्तिहेतुरविचिन्त्यमहाव्रता त्व-**
**मभ्यस्यसे सुनियतेन्द्रियतत्त्वसारैः।**
**मोक्षार्थिभिर्मुनिभिरस्तसमस्तदोषै-**
**र्विद्यासि सा भगवती परमा हि देवि ।।**

इति चतुर्थाध्याये द्रष्टव्यम्।

सैव साम्राज्यं ज्ञानमपि ददाति। यथा राजा सुरथः मेधसो मुनेरुपदेशेन देवीमाराध्य परस्मिन् जन्मनि सावर्णिमन्वन्तराधिपतित्वं प्राप। समाधिनामा वैश्यश्च दुर्लभं ज्ञानमपि प्राप्तवान्।

सैव परम्बा प्रचण्डानपि शत्रून् नाशयति। देवैराराधिता सा प्रकटिता भूत्वा महिषासुर-शुम्भ-निशुम्भसदृशान् दुर्धर्षान् राक्षसान् नाशितवतीति सर्वं सप्तशती-पाठादेवावगम्यते।

देव्यथर्वशीर्षे देवीसूक्ते तु देव्या स्वयं कथितं यदहं ब्रह्मस्वरूपिणी। मत्तः प्रकृतिपुरुषात्मकं जगत्। शून्यं चाशून्यं च। अहं विज्ञानाविज्ञाने अहमानन्दानन्दे। अहं ब्रह्माब्रह्मणी वेदितव्ये। अहं पञ्चभूतान्यपञ्चभूतानि। अहमखिलं जगद् इत्यादि (अथर्वशीर्षे)। एवं देवीसूक्तेऽपि—''अहं रुद्रेभिर्व-सुभिश्चरामि अहमादित्यैरुत विश्वेदेवैः......परो दिवा पर एना पृथिव्यैतावती महिना सम्बभूव'' इत्यष्टाभिः सूक्तैस्तदेव स्पष्टं भवति यत्पराम्बैव सच्चिदानन्दब्रह्मरूपा। सैव कर्तुमकर्तुमन्यथाकर्तुं च समर्था। सा सर्वदेवजननी सुखाराध्या। सैव साधकानां कामार्थदायिनी अस्तीत्यादि पठितमेव।

पुराणेतिहासपठनेनैतद्विज्ञातं भवति यद्भगवतः सर्वेष्ववतारेषु देव्याराधना कृता सर्वैः। यथा रामावतारे श्रीरामचन्द्रं पतिं प्राप्तुं सखीभिः सह गत्वा पुष्पवाटिकायां श्रीसीतया श्रीगिरिजादेवी समाराधिता। अरण्ये श्रीजानक्या रावणेनापहृताया प्राप्तये ऋष्यमूकपर्वते स्थितेन श्रीरामचन्द्रेण नवरात्रविधिना व्रतानुष्ठानपूर्वकं देव्या आराधनं कृतम्। श्रीकृष्णावतारेऽपि भगवतैव कंसभयात्स्वरक्षार्थं नन्दव्रजे श्री-यशोदागर्भाद्देव्या जन्मनः, तस्या आनयनस्य, तत्र प्रापणस्य चोपदेशः कृतः। तथा कृते सति भगवतः श्रीकृष्णस्य कंसाद् रक्षणं जातम्। ततः स्यमन्तकमणिहरण-कलङ्कपङ्कमार्जनार्थं गतस्य परावर्तनावध्यतिक्रमणे जातेप्यनागतस्य श्रीकृष्णस्य पुनः प्राप्तये यदुवंशिनो जगदम्बाशरणमेव गत्वाऽऽराधनां कृतवन्तः। नन्दव्रजकुमारि-काभिः कृष्णं पतिं प्राप्तुं देव्याः सिकतामयीर्मूर्ती रचयित्वा देवी आराधिता, तथा—

**'कात्यायनि महामाये महायोगिन्यधीश्वरि।**
**नन्दगोपसुतं कृष्णं पतिं मे कुरु ते नमः'।।**

इति मन्त्रं जपित्वा च देव्या वाञ्छितं वरं प्राप्तम्। इत्यादिसर्वं श्रीमद्भागवते पठितम्।

एवञ्च देशकालपरिस्थितेरनुकूलत्वात्, वंशपरम्पराप्राप्तत्वात्, पितापितामह-मुखात्कथाप्रसङ्गावसरे देव्याराधनमहिमश्रवणात्, तद्द्वारा कृतसिद्धप्रयोगदर्शनात्,

तातपादद्वारा ममाध्ययनार्थं कृतसङ्कल्पश्रवणात्, स्वजीवने स्वयमेव प्रतिपदं साफल्योपलब्ध्यनुभवात्, श्रीदुर्गासप्तशती-पुराणेतिहास-रामायणादिपठनाच्च श्रीपराम्बाभक्तौ मे परम्परातो बीजरूपेण स्थिता श्रद्धा क्रमशोऽङ्कुरिता पुष्पिता फलिता सम्प्रति च निश्चलतां गता विराजते। एवमनवरतमेधमानया सुस्थिरया देवीभक्त्या तत्प्रसादाय स्वगृह एव द्विवारं श्रीशतचण्डीपाठानुष्ठानमपि कारितम्। तदनुकम्पया तत्प्रेरणयैव शब्दार्थसुवर्णाक्षराणां वृत्तगुणैर्ग्रथितैका प्रस्तुतपराम्बास्तुतिशतकरूपा रम्या मालिका पराम्बाचरणारविन्दयोः समर्पिता चेति, यथा—

**'मनसि संस्थितयैव शिवे त्वया रचयिता स्तुतिपद्यसुमालिका।**
**सविनयं चरणेषु समर्प्यते मुदितया कृपया परिगृह्यताम्'**।। इति।

ततः पराम्बाप्रेरणयैव गतशारदनवरात्रानन्तरमेव पद्मभूषणप्रवरा वैदुष्य-यशश्चुम्बितदिक्चक्रवलया **डॉ. विद्यानिवासमिश्रमहोदया** एतत्प्रकाशनप्रबन्धार्थं निवेदिताः। तैश्च महानुभावैः स्वकीयस्वाभाविकौदार्यपारवश्यात्सहर्षं समस्तो भारः स्वीकृतः। माननीयैः पद्मभूषणविभूषितैः श्रीमिश्रमहोदयैः कृतं महत्तममुपकारभारं सहर्षं शिरसा वहामः, बहुशः कृतज्ञतां प्रकटयन्तस्तेषां चिरायुष्याय यशसे नैरुज्यादिसुखप्राप्तये च पराम्बाचरणारविन्देषु सविनयं प्रार्थयामहे।

एतस्य पुस्तकस्य पाण्डुलिपिसंशोधनार्थं मम मातुलेयेन **श्रीसुदामाप्रसाद-द्विवेदिना** परिश्रमः कृतस्तदर्थं तस्मै शुभाशिषो दीयन्ते।

अन्ते च पाठकाः सुधियो विद्वद्वरेण्याश्च सादरं निवेद्यन्ते यदेतस्मिन् लिखितनिवेदने स्वमनसि पराम्बाभक्तिप्रादुर्भावस्य यानि यानि कारणानि लिखितानि तान्यस्मिन् 'पराम्बास्तुतिशतके' यत्र यत्र श्लोकेषु निःस्यूतानि भवन्ति चाभिव्यक्तानि।

ममायं सुदृढो विश्वासो यद् एतत्पराम्बास्तुतिशतकपाठेन श्रीदेवीचरणा-रविन्दयोर्भक्तिरनुदिनं वृद्धिं गमिष्यतीति—

**प्रीत्यै च ते पठतु यः स्तुतिपद्यमाला-**
**मेनां समर्पयतु चेच्चरणारविन्दे ।**
**तस्मै प्रसीद जगदम्ब दयासुधाब्धे**
**दातुं सदैव च वरान् मनसोऽनुकूलान् ।।**

इति जगदम्बाचरणारविन्दे प्रार्थना कृता मयेति निवेदयति—

**विद्याधरदत्तपाण्डेयः**



**श्रीविद्याधरदत्तपाण्डेयविरचितं**

# परामबास्तुतिशतकम्

**परामबामेव तां ध्यात्वा सर्वकारणकारणाम् ।**
**स्तुतिं कर्तुं प्रवृत्तोऽस्मि तस्याः सद्यःप्रसादिनीम् ।।१।।**

**अन्वयः**—(अहम्) सर्वकारणकारणां तां परामबाम् एव ध्यात्वा तस्याः सद्यःप्रसादिनीं स्तुतिं कर्तुं प्रवृत्तः अस्मि।

**अर्थः**—मैं समस्त कारणों की कारण उस परामबा का ही ध्यान कर उसे सद्यः प्रसन्न करने वाली स्तुति की रचना करने में प्रवृत्त हुआ हूँ।।१।।

**स्फुरिततिग्मतडिद्द्युतिसुप्रभां प्रणततापहरां हरिवाहनाम् ।**
**विशिखशूलगदासिधनुर्धरां त्रिनयनां च भजे मनसाऽम्बिकाम् ।।२।।**

**अन्वयः**—स्फुरिततिग्मतडिद्द्युतिसुप्रभाम्, प्रणततापहराम्, हरिवाहनाम्, विशिखशूलगदासिधनुर्धराम्, त्रिनयनां च अम्बिकां मनसा भजे।

**अर्थः**—चमकती हुई बिजली की तीव्र द्युति के सदृश जिसकी सुन्दर प्रभा है, शरणागत जनों के दैहिक, दैविक और भौतिक तापों का जो हरण करती है, सिंह जिसका वाहन है तथा जो बाण, शूल, गदा, खड्ग और धनुष धारण करती है, उस त्रिनयना श्री अम्बिका देवी का मैं मन से भजन करता हूँ।।२।।

**त्रिभुवनं ललितं परिकल्प्य या विहरते च सुखेन समन्ततः ।**
**हरति चाशु विहृत्य यदृच्छया भवतु सा जयिनी जननी शिवा ।।३।।**

**अन्वयः**—या ललितं त्रिभुवनं परिकल्प्य सुखेन विहरते, विहृत्य च यदृच्छया आशु हरति च सा जननी शिवा जयिनी भवतु।

**अर्थः**—जो अपने सङ्कल्प से सुन्दर तीनों (भूलोक, पाताल और स्वर्ग) लोकों की रचना कर उन पर सुख से क्रीडा करती है और विहार कर अपनी इच्छा से पुनः उन्हें समेट लेती है, उस अम्बा पार्वती की सदा जय हो।।३।।

**तव कथं करवाणि विचिन्तनं जननि मानसमस्त्यतिचञ्चलम् ।**
**विषयसक्तमदो हि मनागपि न रमते चरणे रमणे तव ।।४।।**

**अन्वयः**—हे जननि तव विचिन्तनं कथं करवाणि? हि मानसम् अति-चञ्चलम् अस्ति। विषयसक्तम् अदः रमणे तव चरणे मनाग् अपि न रमते।

**अर्थः**—हे माँ, तेरा चिन्तन मैं कैसे करुँ; क्योंकि मन अतिचञ्चल है। विषयों में आसक्त हुआ वह आपके रमणीय चरण में थोड़ा भी रमण नहीं करता है, अर्थात् आनन्द का अनुभव नहीं करता है।।४।।

**भुवि न कोऽपि नरः करुणार्णवे तव कृपारहितो न हि मोहितः ।**
**इति विचिन्त्य च मां शरणागतं सपदि पालय लालयं चाम्बिके ।।५।।**

**अन्वयः**—हे करुणार्णवे अम्बिके तव कृपारहितः कः अपि नरः भुवि न (अस्ति यः) मोहितः न हि (भवेत्) इति विचिन्त्य शरणागतं मां सपदि लालय पालय च।

**अर्थः**—हे दयासागर अम्बिके, तेरी कृपा से वञ्चित कोई भी मनुष्य इस धरती पर नहीं है, जो मोहग्रस्त न हुआ हो। ऐसा विचार कर मैं आपकी शरण में आया हुआ हूँ। शीघ्रतापूर्वक मेरा लालन-पालन करें।।५।।

**तव कृपाऽकथनीयमहीयसी दृशि दिशाप्यतिविस्मयकारिणी ।**
**दुरितदानवदर्पनिपातिनी भव भवानि सदा वरदायिनी ।।६।।**

**अन्वयः**—हे भवानि, तव कृपा अकथनीयमहीयसी (अस्ति) दृशि दिशा अपि अतिविस्मयकारिणी अस्ति। (त्वम्) दुरितदानवदर्पनिपातिनी (असि) मे च सदा वरदायिनी भव।

**अर्थः**—हे भवानी माँ, तेरी कृपा की महत्ता अवर्णनीय है। तेरी कृपादृष्टि की दिशा भी अत्यन्त आश्चर्यजनक है तथा आप पापरूपी दानवों के गर्व को नष्ट करने वाली हैं। सदा आप मेरे लिए वर देने वाली हों।।६।।

**जगदशेषमनित्यमवस्तु यत् सदसदीश्वरि भाति च वस्तुतः ।**
**सुतकलत्रधनादिमनोरमं निखिलमम्ब च ते कृतिकौशलम् ।।७।।**

**अन्वयः**—हे ईश्वरि, यत् सद् असद् अशेषं जगद् अनित्यम् अवस्तु च (अस्ति; किन्तु) सुतकलत्रधनादिमनोरमं (सत्) वस्तुतः च भाति। हे अम्ब, निखिलं ते कृतिकौशलम् अस्ति।

**अर्थः**—हे ईश्वरि, यह कार्य-कारणरूप समस्त जगत् जो अनित्य और अवास्तविक है; किन्तु पुत्र, पत्नी एवं धन आदि से मन को आनन्दित करता हुआ वास्तविक प्रतीत हो रहा है। वह सब आपकी रचना कला की ही कुशलता है।।७।।

**चरितमम्ब न ते कियदद्भुतं विरचने भुवने तव का समा ।**
**विततनीलवितानमिवाम्बरं विरचितं च कया वद चान्यया ।।८।।**

**अन्वयः**—हे अम्ब, तव चरितं कियद् अद्भुतं न (अस्ति) भुवने विरचने तव का समा? विततनीलवितानम् इव इदम् अम्बरं (त्वत्) अन्यया कया विरचितम् (इति) वद।

**अर्थः**—हे अम्ब, तेरे आश्चर्यजनक चरित में क्या विक्षणता नहीं है? सभी लोको में रचना करने में तुम्हारे समान कौन है, तू ही बता कि विस्तृत नील वितान सदृश इस आकाश की रचना आपके सिवा दूसरे किसके द्वारा की गयी है?।।८।।

**तपति यज्जगती रविरुष्णगुर्नयति दूरमसौ च घनं तमः ।**
**चरति चाविरतं नभसीश्वरि त्वमसि तत्र च हेतुरहेतुकी ।।९।।**

**अन्वयः**—असौ उष्णगुः रविः यत् जगती तपति घनं तमः च दूरं नयति नभसि अविरतं च चरति। हे ईश्वरि! तत्र च त्वम् एव अहेतुकी हेतुः असि।

**अर्थः**—उष्ण किरणों वाला वह सूर्य जो समस्त लोकों को तपाता है, गहन अन्धकार को दूर करता है तथा आकाश में निरन्तर चलता रहता है, उसमें भी तू ही निःस्वार्थ हेतु है।।९।।

**तव च शक्तिलवेन गरीयसी वहति चाब्धिवनान्यगदिग्गजान् ।**
**मृदुलशस्यदला हरिताञ्चलाऽन्ववति साप्यवनी जननीनिभा ।।१०।।**

**अन्वयः**—(हे जननि), गरीयसी सा अवनी तव शक्तिलवेन अब्धिवनानि अगदिग्गजान् च वहति। मृदुलशस्यदला हरिताञ्चला च (सती) जननीनिभा (सर्वान्) अन्ववति।

**अर्थः**—हे माँ, वह विशाल पृथिवी भी तेरी शक्ति के सूक्ष्मतम अंशमात्र से समुद्रों, अरण्यों, पर्वतों और दिग्गजों को भी अपने ऊपर वहन करती है। साथ ही कोमल मधुर फलों एवं पत्रों से युक्त तथा हरे-भरे अञ्चलों से विभूषित होती हुई सम्पूर्ण जगत् का पालन करती है।।१०।।

**अरणितः कृश उद्गत एधितो वहति चैव हुतं स हुताशनः ।**
**भवति सर्वभुगप्यभिवन्दितः श्रुतिगते तव नाम्नि न किं भवेत् ।।११।।**

**अन्वयः**—स हुताशनः अरणितः कृशः उद्गतः एधितः च हुतं वहति, सर्वभुग् अपि अभिवन्दितः भवति। तव नाम्नि श्रुतिगते किं न भवेत्?

**अर्थः**—हे अम्ब, वह अग्नि जो अरणि-मन्थन द्वारा अति अल्प मात्रा में प्रकट होकर बहुत ही दीप्त हो जाता है तथा हवन की गयी वस्तुओं को अभीष्ट

देवताओं के पास पहुँचाता है, साथ ही पवित्र तथा अपवित्र सभी वस्तुओं का भोजन करने पर भी सबके द्वारा अभिवन्दित होता है; क्योंकि तुम्हारे 'स्वाहा' नाम के कान में पड़ने पर क्या नहीं हो सकता? (तुम्हारे नामों के श्रवण की ही यह महत्ता है)।।११।।

**त्वदधिगत्य च शब्दगुणं नभः स्तुतिमदो विदधाति च तेन ते ।**
**पुनरवाप्य ततोऽन्यगुणं हि तद् विदितमस्त्यवकाशदतागुणि ।।१२।।**

**अन्वयः**—(हे अम्ब) अदः नभः त्वत् शब्दगुणम् अधिगत्य तेन ते स्तुतिं विदधाति। ततः तद् (त्वत्) अन्यगुणं पुनरवाप्य अवकाशदतागुणि विदितम् अस्ति।

**अर्थ**—हे माँ, वह आकाश आपसे शब्दगुण पाकर उससे आपकी स्तुति करता है। इस कारण आपसे उसे दूसरा गुण भी प्राप्त हुआ, जिससे वह शब्द से अतिरिक्त समस्त जगत् को रहने के लिए अवकाश देना भी उसका दूसरा गुण प्रसिद्ध हो गया।।१२।।

**क्रमश आविरभूत्तव वर्ष्मणः सलिलमम्ब सलीलमुदूर्मिभिः ।**
**सुरसरिद्वरवारिभिरर्चति चरणकञ्जमहो जडता कुतः ।।१३।।**

**अन्वयः**—(हे) अम्ब, सलिलं तव वर्ष्मणः क्रमशः आविरभूत्, ततः उदूर्मिभिः सुरसरिद्वरवारिभिः (तव) चरणकञ्जम् अर्चति (तथापि) अहो! जडता कुतः?

**अर्थः**—हे अम्ब, यह जल आपके शरीर से क्रमशः (आकाश आदि क्रम से) प्रकट हुआ। तदनन्तर वह उत्ताल तरङ्गों वाले श्रेष्ठ गङ्गाजल से आपके चरणकमलों का अर्चन करता है, तथापि आश्चर्य है कि वह कैसे जड कहा जाता है।।१३।।

**यदि न तेऽस्तु दया च समीरणे स्पृशतु रूपमृते नु कुतोऽन्वसौ ।**
**व्यभिचरन्नपि हेतुपरम्परां गिरिनिपातनवेगबलः कथम् ।।१४।।**

**अन्वयः**—(हे अम्ब) यदि समीरणे ते दया न अस्तु (तदा) असौ रूपम् ऋते कुतः स्पृशतु। (तथा च) हेतुपरम्परां व्यभिचरन् गीरिनिपातनवेगबलः कथं (भवेत्)।

**अर्थः**—हे माँ, यदि वायु पर आपकी अनुकम्पा न हो, तो रूपवान् न होने पर भी किसी भी वस्तु का स्पर्श कैसे करता? एवं हेतु के न रहने पर भी पर्वतों को भी धराशायी करने का अपार वेग और बल उसमें कैसे आ जाता?।।१४।।

**जननि ते गुणवर्णनलालसा सुरुचिरैर्निजकाव्यनिबन्धनैः ।**
**मनसि मेऽतिचिराय विराजते सफलतां लभतां प्रतिभेश्वरि ।।१५।।**

**अन्वयः**—हे प्रतिभेश्वरि जननि, सुरुचिरैः निजकाव्यनिबन्धनैः ते गुणवर्णनलालसा मे मनसि अतिचिराय विराजते, सा सफलतां लभताम् ।

**अर्थः**—हे प्रतिभा की अधीश्वरी माँ, अतिसुन्दर स्वरचित काव्यकला के द्वारा आपके गुणों के वर्णन करने की लालसा चिरकाल से मेरे मन में है। वह आपकी अनुकम्पा से सफलता प्राप्त करे।।१५।।

**वितर मे रुचिरार्थपदावलीः स्फुरतु काव्यकलालसिता मतिः ।**
**विरचयानि सुवृत्तगुणैर्यथा तव मुदे च सुवर्णसुमालिकाम् ।।१६।।**

**अन्वयः**—(हे अम्ब) मे रुचिरार्थपदावलीः वितर। काव्यकलालसिता मतिः स्फुरतु। यथा तव मुदे सुवृत्तगुणैः सुवर्णसुमालिकाम् विरचयानि।

**अर्थः**—हे माँ, मुझे मनोहर अर्थ एवं शब्दावली प्रदान करें तथा काव्यकला से युक्त प्रतिभा भी स्फुरित हो, जिनसे सुन्दर छन्दरूपी सूत्रों से सुन्दर शब्दरूपी स्वर्ण की दर्शनीय माला की आपकी प्रसन्नता हेतु मैं रचना कर सकूँ।।१६।।

**नवरसै रसितास्तु मयोदिता स्तुतिरियं विबुधेषु यथा श्रुतिः ।**
**गुणसुवृत्तिसुरीतिचमत्कृतिप्रकृतिचारुतनुः सदलङ्कृतिः ।।१७।।**

**अन्वयः**—मयोदिता इयं स्तुतिः गुणसुवृत्तिसुरीतिचमत्कृतिप्रकृतिचारुतनुः सदलङ्कृतिः सती विबुधेषु नवरसैः तथा रसिता अस्तु यथा श्रुतिः रसिता (भवति)।

**अर्थः**—हे अम्ब, मेरे द्वारा रचित यह स्तुति (प्रसाद आदि) गुणों (मधुरा आदि) वृत्तियों (पाञ्चाली, वैदर्भी आदि) रीतिओं, चमत्कारों, प्राकृतिक सौन्दर्य एवं सुन्दर अलङ्कारों से विभूषित होकर अभिनव रसों के कारण विशिष्ट विद्वानों में उसी प्रकार आस्वाद्य हो, जैसे श्रुति होती है।।१७।।

**तव च रूपमहो कथयानि किं त्वमसि सुन्दरताजननी शिवे ।**
**तव च कान्तिलवेन जगत्त्रयी भवति कान्तिमती हरते मतिम् ।।१८।।**

**अन्वयः**—अहो! हे शिवे, तव रूपं किं कथयानि? त्वं सुन्दरताजननी असि। तव कान्तिलवेन जगत्त्रयी कान्तिमती भवति मतिं च हरते।

**अर्थः**—हे शिवे, तेरे सौन्दर्य का मैं कैसे वर्णन करूँ? तू तो सुन्दता की जन्मदात्री हो। तेरे सौन्दर्य के एक क्षुद्र अंशमात्र से ही तीनों लोक सौन्दर्य से विभूषित होते हैं तथा लोगों की मति आकृष्ट कर लेते हैं।।१८।।

**तव चरित्रसुधाम्बुधिपारगा विपुलशक्तिसुरा अपि नाभवन् ।**
**तमपि पारयितुं प्रयतेऽधमः कथनलौल्यमहो दुरतिक्रमम् ।।१९।।**

**अन्वयः**—(हे अम्ब, यद्यपि) विपुलशक्तिसुराः अपि तव चरित्रसुधाम्बुधि-पारगाः न अभवन्। तम् अपि अहम् अधमः पारयितुं प्रयते। अहो! कथनलौल्यं दुरतिक्रमम् अस्ति।

**अर्थः**—यद्यपि अपारशक्तिसम्पन्न देवगण भी आपके अपार चरित्रसुधासिन्धु के पारगामी न हुए, तथापि अतिक्षुद्र व्यक्ति मैं उसे पार करने का प्रयत्न कर रहा हूँ। यद्यपि यह असम्भव है, तथापि आपके गुणवर्णन का लोभ इतना तीव्र हो गया है कि उसका अतिक्रमण नहीं किया जा सकता।।१९।।

**वितरिता नरता द्विजजन्मता श्रुतिपरायणता च शिवे त्वया ।**
**अथ च नो क्रियतां तव वन्दनं कथमहोऽनृणताऽधिगता भवेत् ।।२०।।**

**अन्वयः**—हे शिवे, त्वया मे नरता, द्विजजन्मता, श्रुतिपरायणता च वितरिता। अथ च तव वन्दनं नो क्रियतां तदा अहो अनृणता कथम् अधिगता भवेत्।

**अर्थः**—हे शिवे, आपने मुझे मनुष्य शरीर, उत्तम ब्राह्मण कुल और वेद-शास्त्र अध्ययन करने का पवित्र कार्य दिया। तब भी यदि आपका स्तवन न किया जाय, तो आपके ऋण से मुक्ति कैसे मिल सकती है।।२०।।

**गलितमोहकयौवनमम्बिके पलितमुण्डवितुण्डहतप्रभम् ।**
**धृतशिखान्तककर्षणपीडितं नय च मां शरणं हरणं रुजाम् ।।२१।।**

**अन्वयः**—हे अम्बिके, गलितमोहकयौवनं पलितमुण्डवितुण्डहतप्रभं धृतशिखान्तककर्षणपीडितं च मां रुजां हरणं शरणं नय।

**अर्थः**—हे अम्बिके, मेरा मोहक यौवन ढल गया, शिर के बाल पक गये, दाँत मेरे टूट गये हैं, शरीर की प्रभा भी क्षीण हो गयी है, यमराज मेरी शिखा पकड़ कर अपनी ओर खींच रहा है, उससे मुझे असह्य पीड़ा हो रही है। अतः शीघ्र ही तुम सब प्रकार के रोगों का हरण करने वाले अपने शरण में मुझे ले लो।।२१।।

**निखिलमम्ब गतं मम जीवनं तनयदारपरिग्रहपालने ।**
**तव च नैव कृतं विधिनार्चनं भव तथापि भवाम्बुधितारिणी ।।२२।।**

**अन्वयः**—हे अम्ब, मम निखिलं जीवनं तनयदारपरिग्रहपालने गतम्, तव च विधिना अर्चनं न कृतम्, तथापि मम भवाम्बुधितारिणी भव।

**अर्थः**—हे अम्ब, यद्यपि मेरा सम्पूर्ण जीवन पुत्र-पत्नी आदि परिवार के पालन-पोषण में ही व्यतीत हो गया। इस कारण आपका विधिवत् अर्चन-वन्दन नहीं किया। तब भी आप मुझे इस संसार-सागर के पार पहुँचा दें।।२२।।

**त्वमसि शैशवतः प्रतिपालिकाऽभ्युदयदा धनमानसुखप्रदा ।**
**रिपुदुरामयनाशिनि हे शिवे जरसि मां न कथं समविष्यासि ।।२३।।**

**अन्वयः**—हे रिपुदुरामयनाशिनि शिवे, त्वं शैशवतः मे प्रतिपालिका अभ्युदयदा धनमानसुखप्रदा च असि (तर्हि) जरसि वार्धके मां कथं न समविष्यसि?

**अर्थः**—शत्रुओं और कठिन रोगों का नाश करने वाली हे शिवे, तुम बचपन से ही मेरा पालन करती रही हो तथा अभ्युदय, धन-मान (प्रतिष्ठा) एवं सुख देती आ रही हो, तो इस वृद्धावस्था में मेरी रक्षा क्यों नहीं करोगी?।।२३।।

**न हि कृतं सुकृतं न तपो जपस्त्वमसि केवलमम्ब बलं मम ।**
**तव च शीलमिदं प्रथितं यतो ह्यभजतो भजतोऽपि करोषि शम् ।।२४।।**

**अन्वयः**—हे अम्ब, (मया) सुकृतं न हि कृतं, जपः (अपि) न कृतः। त्वम् एव केवलं मम बलम् असि, यतो हि तव इदं शीलं प्रथितम् (अस्ति,यत्) अभजतः भजतः अपि शं करोषि।

**अर्थः**—हे अम्ब, मैंने पुण्य नहीं किया और तप एवं जप भी नहीं किया। केवल मुझे तेरा ही बल है; क्योंकि तेरा यह स्वभाव प्रसिद्ध है कि जो तेरा भजन करता हैं और नहीं भी भजन करता है, उन दोनों प्रकार के लोगों का कल्याण करती हो।।२४।।

**वशमितं च हरिं घननिद्रया विगतनिद्रममुं प्रविधाय या ।**
**विधिनुताऽऽर्तिहरा मधुकैटभौ मृतिमुखं च निनाय नमामि ताम् ।।२५।।**

**अन्वयः**—विधिनुता आर्तिहरा या (दुर्गा) घंननिद्रया वशम् इतं हरिं विगतनिद्रं प्रविधाय मधुकैटभौ मृतिमुखं निनाय ताम् अम्बां नमामि।

**अर्थः**—ब्रह्मा जी के स्तुति करने पर कष्टों को हरने वाली जिस माता दुर्गा जी ने गम्भीर निद्रा के वश में गये हुए भगवान् विष्णु को निद्रामुक्त कर मधु तथा कैटभ नामक राक्षसों को मृत्यु के घाट पहुँचा दिया, उस करुणामयी माँ को मैं नमन करता हूँ।।२५।।

**सुरवरं च हरिं वरितुं वरं कृतवती मधुकैटभमोहनम् ।**
**विसदृशं न हि तेऽस्ति शिवे यतस्त्वमसि बुद्धिमतामपि मोहिनी ।।२६।।**

**अन्वयः**—हे शिवे, सुरवरं हरिं वरं वरितुं मधुकैटभमोहनं कृतवती, तत् ते विसदृशं न अस्ति यतः त्वं बुद्धिमताम् अपि मोहिनी असि।

**अर्थः**—हे शिवे, देवताओं में श्रेष्ठ (जो स्वयं सबको वर देते हैं, उस) भगवान् विष्णु से वर मँगवाने हेतु तूने जो मधु और कैटभ नामक राक्षसों की बुद्धि को मोहित कर लिया, यह तेरे लिए कोई विरुद्ध अथवा स्वभाव के प्रतिकूल कार्य नहीं है; क्योंकि तुम तो बड़े-बड़े ज्ञानी जनों को भी मोह लेती हो।।२६।।

**विजितदेवपुरं महिषासुरं महदतिक्रमदुर्दमविक्रमम् ।**
**लघुतया विनिहत्य च लीलया विजयसे नयसे स्म सुरान् दिवम् ।।२७।।**

**अन्वयः**—(हे अम्ब) विजितदेवपुरं महदतिक्रमदुर्दमविक्रमं महिषासुरं लीलया लघुतया विनिहत्य सुरान् दिवं नयसे स्म विजयसे च।

**अर्थः**—हे अम्ब, जिसने समस्त देवपुरी पर विजय प्राप्त कर ली थी और बड़े-बड़े देवताओं का भी अतिक्रमण करने का जिसमें अदम्य पराक्रम था, उस महिषासुर की खेल में ही हाथ की सफाई के साथ हत्या कर देवताओं को उनके स्थान स्वर्ग को प्राप्त करा दिया। अतः तुम सबसे श्रेष्ठ हो। तुम्हारी सदा जय हो।।२७।।

**गुणवती भवतीत्युत निर्गुणा कथयितुं प्रभवन्ति न केचन ।**
**मतमिदं तव तत्त्वविदीरितं त्वमगुणा सगुणा च विलक्षणा ।।२८।।**

**अन्वयः**—(हे अम्ब) भवती गुणवती उत निर्गुणा इति केचन अपि कथयितुं न प्रभवन्ति, (किन्तु) इदं मतं तव तत्त्वविदीरितम्, यत् त्वम् अगुणा सगुणा विलक्षणा च असि।

**अर्थः**—हे माँ, आप सगुण हैं अथवा निर्गुण हैं, यह बताने में कोई समर्थ नहीं है; किन्तु तेरे तत्त्ववेताओं ने यह मत व्यक्त किया है कि तुम निर्गुण, सगुण और उनसे विलक्षण भी हो।।२८।।

**विपददम्यदवानलचञ्चलज्ज्वलनदग्धजनेषु कृपासुधा ।**
**सहजशीतलतापरिवर्षिणी वसतु मे हृदये सदयेश्वरी ।।२९।।**

**अन्वयः**—विपददम्यदवानलचञ्चलज्ज्वलनदग्धजनेषु कृपासुधा सहज-शीतलतापरिवर्षिणी सदया ईश्वरी मे हृदये वसतु।

**अर्थः**—विपत्तिरूपी अदम्य वनाग्नि की चञ्चल ज्वाला से जो लोग जले हुए हैं, उन पर कृपारूपी अमृत की स्वाभाविक शीतलता की जो वर्षा करती हैं, वह दयालु भुवनेश्वरी मेरे हृदय में निवास करें।।२९।।

**मदधिको न हि कोऽपि नराधमस्त्वदधिका न हि काप्यधमाश्रया ।**
**तव च लक्ष्यमरक्षितरक्षणं भव च मे पततोऽप्यवलम्बनम् ।।३०।।**

**अन्वयः**—(हे अम्ब), मदधिकः कः अपि नराधमः न अस्ति। त्वदधिका च का अपि अधमाश्रया न अस्ति। अरक्षितरक्षणं तव लक्ष्यम् अस्ति। अतः पततः अपि मे अवलम्बनं भव।

**अर्थः**—हे अम्ब, मुझसे बढ़कर दूसरा कोई नीच पुरुष नहीं है और तुमसे बड़ा नीचों को आश्रय देने वाला कोई नहीं है। अतः मेरा पतन हो रहा है, तुम मुझे अवलम्बन दो।।३०।।

**निचितसुन्दरतानवरूपिणीं शिरसि चान्द्रकलास्फुरितच्छटाम् ।**
**निशितचञ्चलशस्त्रसमुच्छलत्प्रभतनुं जननीं प्रणमामि ताम् ।।३१।।**

**अन्वयः**—निचितसुन्दरतानवरूपिणीं चान्द्रकलास्फुरितच्छटां निशितचञ्चल-शस्त्रसमुच्छलत्प्रभतनुं ताम् जननीं प्रणमामि।

**अर्थः**—जिसका नवीन रूप पुञ्जीभूत सौन्दर्य सदृश है, जिसके शिर पर चन्द्रकला की छटा स्फुरित हो रही है तथा जिसके शरीर की प्रभा तेज एवं चञ्चल शस्त्रों की प्रभा से और भी दीप्त हो रही है, उस अम्बा को मैं नमस्कार कर रहा हूँ।।३१।।

**त्वमसि मानवतां च समग्रणीः सुररिपूद्धतमुण्डविखण्डिनी ।**
**वद न शुम्भनिशुम्भमुखेषु को निशिचरोऽन्यतमोऽन्धतमो हतः ।।३२।।**

**अन्वयः**—(हे अम्ब) त्वं मानवतां समग्रणीः सुररिपूद्धतमुण्डविखण्डिनी च असि। वद, शुम्भनिशुम्भमुखेषु अन्यतमः कः अन्धतमः निशिचरो न हतः।

**अर्थः**—हे अम्ब, तुम स्वाभिमानियों में अग्रणी एवं देवताओं के शत्रुओं के उद्दण्डता से ऊपर उठे मस्तकों को खण्ड-खण्ड करने वाली हो। बताओ कि शुम्भ एवं निशुम्भ आदि प्रमुख किस मदान्ध असुर का वध तुमने नहीं किया?।।३२।।

**तव च नोत्तमनीचविचारणा निशिचरोत्खननेऽप्यवने सताम् ।**
**अधिगतास्त्रकृतावधतावरारुणमहो धृतभृङ्गवपुः शिवे।।३३।।**

**अन्वयः**—(हे) शिवे,) निशिचरोत्खनने सताम् अवने अपि तव उत्तमनीचविचारणा न (अस्ति) (यतः) धृतभृङ्गवपुः अधिगतास्त्रकृतावधता-वरारुणम् अहः।

**अर्थः**—हे अम्ब, निशाचरों का उन्मूलन करने और सज्जनों की रक्षा करने में तुम ऊँच और नीच वेष अथवा शरीर का विचार नहीं करती हो; क्योंकि जिसे

अस्त्रों से अबध्य होने का वर प्राप्त हो चुका था, उस अरुण नामक राक्षस का वध भ्रमर जैसा तुच्छ रूप धारण कर किया।।३३।।

**कमलकोमलकान्तकलेवरं कुलिशकर्कशराक्षसखण्डनम्।**
**रुधिरछर्द्धरिमुण्डचलत्स्रजा विहितमण्डनमस्ति न तेऽसमम्।।३४।।**

**अन्वयः**—(हे अम्ब), कमलकोमलकान्तकलेवरं कुलिशकर्कशराक्षसखण्डनं रुधिरछर्द्धरिमुण्डचलत्स्रजा विहितमण्डनं ते असमं न अस्ति।

**अर्थः**—हे अम्ब! तुम्हारा यह कमल के समान कोमल और सुन्दर शरीर तथा वज्र सदृश कठोर राक्षसों को खण्ड-खण्ड करना तथा जिनसे रक्त की धारा निकल रही है, उन राक्षस मुण्डों की चञ्चल माला से अलङ्कृत होना तुम्हारे लिए विरुद्ध कार्य नहीं है; क्योंकि तुम अशेष विरोधी गुणों की आश्रय हो।।३४।।

**भवति सत्त्वमयी कमला हरौ कमलजे रजसा सह शारदा।**
**शिवसुसङ्गतिमेत्य शिवा च या भवतु मे मुदिताऽभ्युदिता च सा।।३५।।**

**अन्वयः**—या हरौ सत्त्वमयीं कमला, कमलजे रजसा सह शारदा शिवसुसङ्गतिम् एत्य शिवा च भवति अभ्युदिता सा मे मुदिता भवतु।

**अर्थः**—जो भगवान् विष्णु के यहाँ सत्त्वगुणविशिष्ट लक्ष्मी, ब्रह्मा के पास रजोगुणविशिष्ट शारदा और शिव की सुन्दर सङ्गति पाकर शिवा रूप धारण कर लेती है, वह अभ्युदय से युक्त पराम्बा मेरे लिए प्रसन्न हो जाय।।३५।।

**शुचि मनो न वचश्चरितामृतं स्वदितुमम्ब रुचिर्नहि कर्णयोः।**
**मधुधिया विषपानरुचिभ्रमं झटिति नाशय भासय मानसम्।।३६।।**

**अन्वयः**—(हे) अम्ब, मे मनः वचः च शुचि न (अस्ति) कर्णयोः चरितामृतं स्वदितुं न रुचिः। मे मधुधिया विषपानरुचिभ्रमं झटिति नाशय मानसं भासय च।

**अर्थ**—हे अम्ब, मेरा मन एवं वाणी पवित्र नहीं है और कानों में आपके चरितामृत के आस्वादन की रुचि नहीं है। अतः मुझे शहद की बुद्धि से विषपान का जो भ्रम हो गया है, उसका शीघ्र ही नाश करो तथा ज्ञान के प्रकाश से मेरे मन को आलोकित करो।।।३६।।

**सुरवरेषु नरेष्वसुरेषु च महिमवन्ति पदानि च ये गताः।**
**इह पुराऽप्यथवा विततैश्च तैर्नियतमेव समार्चि पराम्बिका।।३७।।**

**अन्वयः**—सुरवरेषु नरेषु असुरेषु च ये महिमवन्ति पदानि गताः, विनतैः तैः इह अथवा पुरा नियतम् एव पराम्बिका समार्चि।

**अर्थः**—सुरों, मनुष्यों और असुरों में जो लोग महिमामण्डित पदों पर पहुँचे हुए हैं, उन्होंने इस जन्म या पूर्वजन्म में नम्रतापूर्वक निश्चय ही पराम्बा की अर्चना की है।।३७।।

**त्वमिह तत्र परत्र च कुत्रचित् प्रतिगृहं नगरेषु वने गिरौ ।**
**विविधनामवपुः स्वहितैषिभिर्जयसि पुष्पदलादिभिरर्चिता ।।३८।।**

**अन्वयः**—हे अम्ब, त्वम् (एव) इह तत्र परत्र प्रतिगृहं नगरेषु वने गिरौ कुत्रचित् च स्वहितैषिभिः विविधनामवपुः पुष्पदलादिभिः अर्चिता जयसि।

**अर्थः**—हे अम्ब, तुम ही यहाँ वहाँ अन्यत्र प्रति घर, नगर, वन, पर्वत तथा कहीं भी अपना हित चाहने वाले व्यक्तियों के द्वारा भिन्न-भिन्न नाम और शरीरों से, पत्र-पुष्पों आदि उपचारों से पूजित होती हुई विजयिनी हो रही हो।।३८।।

**समहिता महिता च शिवार्चिता शमदमप्रवणैर्नियमेन यैः ।**
**सकलमीप्सितमेव सुलभ्यते सुखसमेतमपेतभयैश्च तैः।।३९।।**

**अन्वयः**—शमदमप्रवणैः यैः नियमेन समहिता महिता च शिवा अर्चिता तैः अपेतभयैः सुखसमेतं सकलम् ईप्सितम् एव सुलभ्यते।

**अर्थः**—अनन्य निष्ठा एवं इन्द्रियदमनपूर्वक जिन लोगों के द्वारा समान हित करने वाली तथा महिमामण्डित शिवा की अर्चना नियम से की गयी, उनके सारे भय नष्ट हो गये तथा उन्हें सुखसहित सभी मनोरथ सरलता से प्राप्त हो जाते हैं।।३९।।

**त्वमसि यत्र परम्परयार्चिता कुलमदस्तु सुतीर्थमिहोच्यते ।**
**वहति तत्र च शान्तिसुधापगा सुतमहीधनधीरमणीरमा ।।४०।।**

**अन्वयः**—हे अम्ब, यत्र त्वं परम्परया अर्चिता असि अदः कुलम् इह सुतीर्थम् उच्यते। तत्र च सुतमहीधनधीरमणीरमा शान्तिसुधापगा वहति।

**अर्थः**—हे अम्ब, जहाँ परम्परा से तुम्हारा अर्चन पूजन होता आ रहा है, वह कुल तो यहाँ पवित्र तीर्थ कहा जाता है तथा वहाँ पुत्र, भूमि, धन, सद्बुद्धि तथा रमणी आदि से रमणीय शान्ति सुधा की नदी बहती है।।४०।।

**न हि यदाम्बुधरागगनानिलानलरवीन्दुपयोधिगिरिद्रुमाः ।**
**स्थितवती च तदा भवती महोमहिमराजिविराजितविग्रहा ।।४१।।**

**अन्वयः**—हे अम्ब, यदा अम्बुधरागगनानिलानलरवीन्दुपयोधिगिरिद्रुमाः न (आसन्) तदा भवती महोमहिमराजिविराजितविग्रहा स्थितवती।

**अर्थः**—हे अम्ब, (सृष्टि के पूर्व) जब जल, धरती, गगन, अनिल, अग्नि, सूर्य, चन्द्र, समुद्र, पर्वत, तथा वृक्ष आदि कुछ भी नहीं थे, तब भी आपका यह विग्रह तुम्हारे तेजःपुञ्ज में विराजमान होकर स्थित था; क्योंकि तुम अनादि हो।।४१।।

**पुनरपि प्रलये च हि भाविनि सदसती च यदा लयमेष्यतः ।**
**त्वमखिलं च निधाय निजौजसि चिदवशेषवती च भविष्यसि ।।४२।।**

**अन्वयः**—हे अम्ब, पुनः अपि भाविनि प्रलये यदा सदसती च लयम् एष्यतः, तदा अखिलं निजौजसि निधाय त्वं चिदवशेषवती च भविष्यसि।

**अर्थः**—हे अम्ब, पुनः भावी प्रलयकाल में जब सत्-असत् (कारण-कार्य) रूप जगत् तुम्हारे अन्दर लीन हो जायेगा, तब सम्पूर्ण विश्व को अपने तेज में विलीन (समेट) कर तुम केवल चिन्मात्र ही अवशिष्ट होकर रहोगी।।४२।।

**चलमनःकरणासुगणस्त्यजेत् क्षणसुखां विषयाभिरतिं शिवे।**
**भवतु शाश्वतसौख्यसुरद्रुमे चरणपङ्कज एव रतश्च ते ।।४३।।**

**अन्वयः**—हे शिवे, चलमनःकरणासुगणः क्षणसुखां विषयाभिरतिं त्यजेत्। शाश्वतसौख्यसुरद्रुमे ते चरणपङ्कज एव रतः च भवतु।

**अर्थः**—हे शिवे, चञ्चल मन, इन्द्रिय और प्राण क्षणिक सुख देने वाले विषय-प्रेम का त्याग करें तथा शाश्वत सुख के कल्पवृक्ष स्वरूप आपके चरणकमल में रत हो जाँय।।४३।।

**सीतापहृत्य च यदाधमरावणेन**
**नीता तदाधिहतधैर्यविवेकमानः ।**
**रामोऽपि यामनिशमर्चयदनादिशक्तिं**
**तां भक्तकल्पलतिकां जननीं नमामि ।।४४।।**

**अन्वयः**—यदा अधमरावणेन अपहृत्य सीता नीता तदाधिहतधैर्य-विवेकमानः रामः अपि याम् आदिशक्तिं समर्चयत् तां भक्तकल्पलतिकां जननीं नमामि।

**अर्थः**—जब नीच रावण सीता को चुरा ले गया, तब उस मानसिक व्यथा से जिसका धैर्य, विवेक और स्वाभिमान जाता रहा, उस राम ने भी जिस आदि-शक्ति की पूजा की तथा कराई, उस भक्तों की कल्पलता स्वरूप पराम्बा को नमस्कार करता हूँ।।४४।।

**ये त्वां वहन्ति शिरसा विपदब्धिमग्ना-**
**स्तेषां सुखाय दयितात्मतनुं जहासि।**
**कारागृहं प्रति गता वसुदेवमौलौ**
**स्थित्वाऽश्मपातनमुरीचकृषे हिताय ।।४५।।**

**अन्वयः**—विपदब्धिमग्ना ये त्वां शिरसा वहन्ति तेषां सुखाय दयितात्मतनुं जहासि। वसुदेवमौलौ स्थित्वा कारागृहं प्रति गता (तस्य) हिताय अश्मपातनम् उरीचकृषे।

**अर्थः**—विपत्ति के सागर में डूबने पर जो लोग तुम्हें अपने सिर पर रखते हैं, उनके सुख के लिए तुम अपने प्रिय शरीर का त्याग कर देती हो। जब वसुदेव जी मुझे यशोदा जी के यहाँ से अपने शिर पर उठा कर कारागार में ले गये, तो तुमने उनके हित के लिए कंस के द्वारा पत्थर पर पटका जाना और शरीर त्यागना भी स्वीकार किया।।४५।।

**कृष्णं दुर्दान्तरक्षोगणकृतदुरितैर्दीर्यमाणां धरित्रीं**
**त्रातुं हर्तुं च भारं भुवमवतरितुं देवकीगर्भजातम्।**
**मृत्योश्चामोचयद्या यममुखकवलत्रस्तकंसप्रयुक्तात्**
**सूतां तां नन्दगेहे त्रिदशवरनुतामम्बिकां वै नमामि।।४६।।**

**अन्वयः**—या दुर्दान्तरक्षोगणकृतदुरितैः दीर्यमाणां धरित्रीं त्रातुं भारं च हर्तुं भुवम् अवतरितुं देवकीगर्भजातं कृष्णं यममुखकवलत्रस्तकंसप्रयुक्तात् मृत्योश्च अमोचयत् तां त्रिदशवरनुतां नन्दगेहे सूताम् अम्बिकां नमामि।

**अर्थः**—जिसने दुर्दान्त राक्षसों के किये गये दुष्कर्मों से विदीर्ण हो रही धरती की रक्षा तथा उसके भार को हलका करने हेतु पृथ्वी पर अवतीर्ण हुए देवकी के गर्भ से उत्पन्न श्रीकृष्ण को यमराज के मुख के ग्रास के भय से त्रस्त कंस के द्वारा की गयी मृत्यु से मुक्त कर दिया, देवताओं द्वारा स्तुति की गयी नन्द के घर में उत्पन्न उस अम्बिका देवी को प्रणाम करता हूँ।।४६।।

**प्रसेने सत्राजिन्मणिमहिमरश्मेरधिगतं**
**गले बद्ध्वाऽरण्यं मृगयितुमिते सिंहनिहते।**
**ह्यनायाते कृष्णो मणिहरणलोभेन हतवान्**
**ततेयं दुर्वार्ता प्रतिजनमुखीना दश दिशः।।४७।।**

**अन्वयः**—अहिमरश्मेः अधिगतं सत्राजिन्मणिं गले बद्ध्वा प्रसेने अरण्यं मृगयितु इते सिंहनिहते अनायाते सति मणिहरणलोभेन कृष्णः हतवान् हि इयं दुर्वार्ता प्रतिजनमुखीना दश दिशः तता।

**अर्थः**—जब भगवान् सूर्य से प्राप्त सत्राजित् के मणि को अपने कण्ठ में बाँध-कर प्रसेनजित् वन में शिकार खेलने गया और सिंह द्वारा मारे जाने के कारण नहीं लौटा, तब जन-जन के मुख से होती हुई यह बात दशों दिशाओं में व्याप्त हो गयी कि कृष्ण ने ही मणि लेने के लोभ से प्रसेनजित् की हत्या करा दी।।४७।।

**इमां कुत्सां कृष्णोऽपगमयितुकामो वनमितः**
**विलान्नो जाम्बीयान्निरगमदसौ चावधिगते ।**
**तदा त्वामेवाप्ताः शरणममराम्बां च यदवो**
**यतस्तेऽङ्घ्र्यापन्ना न हि विफलतां यान्ति जननि ।।४८।।**

**अन्वयः**—कृष्णः इमां कुत्साम् अपगमयितुकामः वनम् इतः, असौ (यदा) जाम्बीयात् विलात् अवधिगते नो निरगमत् तदा यदवः अमराम्बां त्वाम् एव शरणम् आप्ताः। यतः हे जननि, ते अङ्घ्र्यापन्नाः विफलतां न यान्ति।

**अर्थः**—श्रीकृष्ण जी इस कलङ्क को दूर करने की इच्छा से वन में गये। जब वे अवधि के बीत जाने पर भी जाम्बवान् के विल से बाहर नहीं निकले, तब उनके प्रिय परिजन यदुवंशी लोग तुम्हारे ही शरण में पहुँचे; क्योंकि तुम समस्त देवताओं की माता हो। हे माँ, तुम्हारे शरण में पहुँचे हुए कोई भी विफल नहीं होता है ।। ४८।।

**स्तुता कृष्णस्यैवागमनशुभकामैश्च यदुभिः**
**परन्त्वेकः कृष्णो न हि प्रकटितस्तेऽम्ब कृपया ।**
**अपि त्वानीतोऽसौ सह च मणिना जाम्बसुतया**
**वदान्ये त्वद् याञ्चाधिकमपि वरं के नु ददते ।।४९।।**

**अन्वयः**—(यद्यपि) यदुभिः कृष्णस्य एव आगमनशुभकामैः त्वं स्तुता। हे अम्ब, त्वया कृपया एकः कृष्णः न हि प्रकटितः, अपि तु असौ मणिना सह जाम्बसुतया अपि आनीतः। वद त्वद् अन्ये के याञ्चाधिकम् अपि वरं ददते?

**अर्थः**—हे माँ, यद्यपि यदुवंशियों ने एक कृष्ण की ही प्राप्ति के निमित्त तुम्हारी स्तुति की थी; परन्तु तुमने कृपा कर अकेले कृष्ण को ही नहीं प्राप्त कराया; अपि तु उन्हें तो आपने दिया ही, साथ ही उस मणि सहित ऋक्ष जाम्बवान् की पुत्री जाम्बवती को भी दे दी। बताओ तो तुम्हारे अतिरिक्त कौन तुम्हारे सदृश उदार देवता है, जो माँगे गये वर से अधिक भी दान करता है ।।४९।।

**त्वया वृन्दारण्ये तरणितनयातीरसिकता-**
**मयाराध्यस्वेष्टाकृतिविनतिपूजामुदितया ।**
**वरं दत्तं प्रापुर्हरिमपि पतिं गोपवनिता**
**न तत्तत्त्वं सच्चित्सुखमपि वशे तेऽम्ब च कथम् ।।५०।।**

**अन्वयः**—वृन्दारण्ये तरणितनयातीरसिकतामयाराध्यस्वेष्टाकृतिविनति-पूजामुदितया त्वया वरं दत्तं गोपवनिताः हरिम् अपि पतिं प्रापुः। हे अम्ब, तत् सच्चित्सुखम् अपि तत्त्वं ते वशे कथं न (अस्ति)?

**अर्थः**—वृन्दावन में गोपवधूटियों ने यमुना के पावन तट पर अपनी आराध्य इष्ट देवी आपकी बालू की मूर्ति बनाकर स्तुति-पूजा की, उनके उस अर्चन, पूजन, नमन से प्रसन्न होकर आपने हरि (श्रीकृष्ण) को पति पाने का वर दिया, जिससे उन्हें कृष्ण पति के रूप में प्राप्त हुए, तो जो वस्तुतः सच्चिदानन्दस्वरूप परम तत्त्व है, वह कृष्णस्वरूप ब्रह्मतत्त्व आपके वश में कैसे नहीं है, अर्थात् वह भी तुम्हारे वश में ही है।।५०।।

**सुरबलविजयेच्छू राक्षसो रक्तबीज-**
**स्तव निशितशराग्रैर्यर्हि गात्रेषु विद्धः।**
**क्षतजकणसमुत्थैस्तस्य तादृक्प्रवीरै-**
**रभवदमितसंख्यैराकुला युद्धभूमिः।।५१।।**

**अन्वयः**—यर्हि सुरबलविजयेच्छुः राक्षसः रक्तबीजः तव निशितशराग्रैः गात्रेषु विद्धः, तदा तस्य क्षतजकणसमुत्थैः अमितसंख्यैः तादृक्प्रवीरैः युद्धभूमिः आकुला अभवत्।

**अर्थः**—जब देवसेनाओं पर विजय चाहने वाला रक्तबीज नामक राक्षस तुम्हारे बाणों की तीक्ष्ण नोक से क्षत-विक्षत हो गया, तब उसके शरीर से निकले हुए रक्त के कणों से वैसे ही बलवान् असंख्य रक्तबीज उत्पन्न हो गये, जिनसे रणभूमि व्याप्त हो गयी।।५१।।

**इति निशिचरमायाविस्मिता देववर्या**
**हतमतिबलवेगा रक्षिताश्च त्वयाऽम्ब।**
**क्षणमिव रुधिरौघं भूमिपातं विनैव**
**रणभुवि विचरन्ती पाययित्वा च कालीम्।।५२।।**

**अन्वयः**—इति निशिचरमायाविस्मिता हतमतिबलवेगा देववर्याः रुधिरौघं भूमिपातं विना एव हे अम्ब, त्वया रणभुवि विचरन्तीं कालीं पाययित्वा क्षणमिव रक्षिताः।

**अर्थः**—इस प्रकार की राक्षसी माया से जो आश्चर्य में पड़ गये थे तथा जिनकी बुद्धि, बल और वेग नष्ट हो गया था, उन श्रेष्ठ देवों की रक्षा हे अम्ब, तुमने मानो एक क्षण में ही रणभूमि पर विचरण करने वाली काली को भूमि पर गिरने के पूर्व ही रक्तराशि पिलाकर की।।५२।।

**जननि त्वमसि धन्या लोककल्याणकामा**
**न हि गणयसि हेयं नैव मेयं कदाचित् ।**
**अविहितमपि पीतं रक्षसां रक्तजातं**
**निखिलरुधिरजाताश्चर्विता राक्षसाश्च ।।५३।।**

**अन्वयः**—हे जननि, लोककल्याणकामा त्वं धन्या असि। कदाचिद् अपि त्वं हेयं मेयं च न गणयसि। हि अविहितम् अपि रक्षसां रक्तजातं पीतम् । निखिलरुधिरजाताः राक्षसाः चर्विताः च।

**अर्थः**—हे अम्ब, लोककल्याण चाहने वाली तुम धन्यवाद के योग्य हो; क्योंकि कभी भी यह विचार नहीं करती हो कि क्या ग्राह्य है और क्या त्याज्य है। उसी कारण शास्त्रों में जिसके पीने का विधान नहीं है, उक्त राक्षसों के उस रक्त को तूँ पी गयी और उस रक्त से उत्पन्न सभी राक्षसों को चबा गयी।।५३।।

**जननि तव विधानं नैव जानन्ति केचि-**
**दुपकृतिपरिपाटी योगिभिश्चाप्यगम्या।**
**समविषमविधौ ते भाति यन्नानुकूलं**
**तदपि च परिणामे सौख्यदं नूनमेव ।।५४।।**

**अन्वयः**—हे जननि, केचिद् अपि ते विधानं न जानन्ति। ते उपकृति-परिपाटी अपि योगिभिश्च अगम्या। ते समविषमविधौ यद् अनुकूलं न भाति तद् अपि परिणामे नूनम् एव सौख्यदं भवति।

**अर्थः**—हे माँ, तुम्हारे विधान के रहस्य को कोई नहीं जानता और उपकार करने की तुम्हारी प्रणाली तो योगियों को भी अगम्य है। आपके द्वारा किये गये अनुकूल अथवा प्रतिकूल कार्यों में जो प्रतिकूल प्रतीत होता है, वह भी परिणाम में निश्चय ही सुखद होता है।।५४।।

**स्वरूपं ते रम्यं निखिलदुरितौघप्रशमनं**
**भवत्यक्ष्णां प्रीत्यै जनिमरणमुक्त्यै च भजताम् ।**
**न तद्दृश्यं किन्तु त्वमसि यदि नैव प्रमुदिता**
**प्रहृष्यातः सद्यो भव च मम प्रत्यक्षविषया ।।५५।।**

**अन्वयः**—हे अम्ब, निखिलदुरितौघप्रशमनं ते स्वरूपं भजताम् अक्ष्णां प्रीत्यै जनिमरणमुक्त्यै च भवति; किन्तु यदि त्वं प्रमुदिता न असि तदा तद् दृश्यं न भवति। अतः प्रहृष्य सद्यः मम प्रत्यक्षविषया भव।

**अर्थः**—हे अम्ब, समस्त पापों का नाश करने वाला तुम्हारा स्वरूप भक्तों के नेत्रों को प्रसन्नता प्रदान करने वाला और जन्म-मृत्यु के बन्धन से मुक्त करने वाला है; किन्तु वह भी यदि तुम प्रसन्न नहीं हो, तो दृष्टिगोचर नहीं होता। अतः प्रसन्न होकर तुम मुझे प्रत्यक्ष दर्शन दो।।५५।।

**त्वमोङ्काराराध्या भवसि च सदैङ्कारसुलभा**
**त्वदन्या नो काचिद्भवति मुदिता ह्रींपदजपैः ।**
**त्वमेवेशानि क्लींजपरतजनानाञ्च फलदा**
**प्रसीदाश्वम्ब त्वच्चरणकमले नौमि शिरसा।।५६।।**

**अन्वयः**—हे अम्ब, त्वम् ओङ्काराराध्या, त्वं च सदैङ्कारसुलभा असि। त्वद् अन्या काचित् ह्रींपदजपैः मुदिता न भवति। हे ईशानि! त्वम् एव क्लीं-जपरतजनानां च फलदा असि। त्वं प्रसीद। त्वच्चरणकमले शिरसा नौमि।

**अर्थः**—हे अम्ब, तुम ही ओङ्कार से आराध्य हो, ऐङ्कार के जप से भी तुम ही सुलभ हो। ह्रीं के जप से भी तुमसे अन्य कोई नहीं प्रसन्न होता है। हे ईशानि, क्लीं के जप में तत्पर जनों को भी तुम ही फल देती हो। तुम मेरे ऊपर प्रसन्न हो। मैं तुम्हारे चरणकमलों का शिर से नमस्कार करता हूँ।।५६।।

**त्वदिन्द्राणी स्वाहा यमसहचरी निर्ऋतिवधू-**
**रपां पत्युः पत्नी पवनरमणी सोमगृहिणी।**
**महेशानीत्याद्या दिगधिपतिजायाः प्रकटिता**
**गमिष्यन्त्येवैता विहितनिजकार्यास्त्वयि लयम् ।।५७।।**

**अन्वयः**—हे अम्ब, त्वद् एव इन्द्राणी, स्वाहा, यमसहचरी, निर्ऋति-वधूः, अपां पत्युः पत्नी, पवनरमणी, सोमगृहिणी, महेशानी इत्याद्याः दिगधि-पतिजायाः प्रकटिताः। एताः सर्वाः विहितनिजकार्याः त्वयि लयं गमिष्यन्ति एव।

**अर्थः**—हे अम्ब, तुमसे ही पूर्व दिशा के स्वामी इन्द्र की पत्नी इन्द्राणी (शची), अग्निकोण के स्वामी अग्नि की शक्ति स्वाहा, दक्षिण दिशा के स्वामी यम की पत्नी (यमी), नैर्ऋत्यकोण के स्वामी की पत्नी, पश्चिम दिक्पति वरुण की वरुणानी, वायव्यकोण के स्वामी वायु की पत्नी तथा ईशानकोण के अधिपति की पत्नी ईशानी आदि समस्त शक्तियाँ आपसे ही प्रकट हुई हैं और अपना-अपना कार्य सम्पन्न कर सभी आपमें ही विलीन हो जायेंगी।।५७।।

**यदुद्गीतं शास्त्रे सकलललनास्ते तनुभुव-**
**स्तदम्ब प्रत्यक्षं कृतमपि रणे शुम्भनिहने।**
**सहाया आयाता अखिलसुरपत्न्योऽस्त्रसहिता-**
**स्त्वया नाट्यात् सर्वा निजवपुषि लीनाश्च विहिताः।।५८।।**

**अन्वयः**—हे अम्ब, शास्त्रे यद् उग्दीतं (यत्) सकलललनाः ते तनुभुवः तत् शुम्भनिहने रणे त्वया प्रत्यक्षं कृतम्। सहायाः अस्त्रसहिताः अखिलसुरपत्न्यः आयाताः (पश्चात्) त्वया सर्वाः नाट्यात् निजवपुषि लीनाश्च विहिताः।

**अर्थः**—हे अम्ब! शास्त्र में (दुर्गासप्तशती में) जो कहा गया है कि समस्त स्त्रियाँ तुम्हारे शरीर से ही प्रकट हुई हैं; उसे तो तुमने शुम्भ का वध जहाँ हुआ, उस रणभूमि पर प्रत्यक्ष कर दिखा दिया। वहाँ आपकी सहायता हेतु अस्त्र-शस्त्रों सहित सभी देवताओं की शक्तियाँ आयीं और उन्हें नाटकीय ढंग से तुमने अपने दिव्य शरीर में ही विलीन कर लिया।।५८।।

**सुदुर्दर्शं युद्धं विजयिभटदर्पापहरणं**
**स्वसैन्यैः शुम्भेन स्फुटकपटमिश्रं च विहितम्।**
**त्वयैकाकिन्येव प्रतिभटदलानां निहननं**
**कृतं साश्चर्यं यद्भुवि च गगनेऽभूदनुपमम्।।५९।।**

**अन्वयः**—हे अम्ब, शुम्भेन स्वसैन्यैः सुदुर्दर्शं स्फुटकपटमिश्रं च विजयिभट-दर्पापहरणं यद् युद्धं विहितम्, तत्र एकाकिन्या एव त्वया भुवि गगने च साश्चर्यं प्रतिभटदलानां निहननं कृतं तद् अनुपमम् अभूत्।

**अर्थः**—हे अम्ब, शुम्भ ने अपनी सेनाओं के साथ स्फुट कपट मिश्रित (प्रत्यक्ष एवं परोक्ष युक्त) जो देखने में भी भयङ्कर विजयशील योद्धाओं के गर्व को नष्ट करने वाला युद्ध किया, उसमें अकेले ही तुमने भूमि पर और आकाश में भी प्रतिद्वन्द्वी शत्रुदल का जिस आश्चर्यजनक ढंग से हनन किया, उसकी उपमा किसी से नहीं दी जा सकती।।५९।।

**रामो लोकाभिरामो धृतशररुचिरो न्यक्कृतासंख्यकामो**
**देवो गृह्णातु पाणिं स्वसरसहृदये न्यास्य भावं तथैनम्।**
**जानक्याऽऽराधिता या स्मितवरदमुखी सम्बभूव प्रमोदात्**
**सा देवी कामदाद्या भवतु मम सदा दृष्टिदेशागता हि।।६०।।**

**अन्वयः**—धृतशररुचिरः न्यक्कृतासंख्यकामः लोकाभिरामः रामः, मे पाणिं गृह्णातु, एनं भावं स्वसरसहृदये न्यास्य जानक्या आराधिता या स्मितवरदमुखी सम्बभूव सा कामदा आद्या दुर्गा सदा मम दृष्टिदेशागता भवतु हि।

**अर्थः**—जो बाणों को धारण करने से और भी मनोहर हो गये हैं, जिन्होंने असंख्य कामदेवों को अपने सौन्दर्य से तिरस्कृत कर दिया है, वे समस्त लोकों का मन हरने वाले राम मेरा पाणिग्रहण करें, इस सात्त्विकभाव को अपने सरस हृदय में धारण कर जनकनन्दिनी जानकी जी ने जिसकी आराधना की और उससे प्रमुदित होकर जो मन्द मुस्कान सहित वर देने हेतु उन्मुख हो गयी, वह अभीष्ट सिद्ध करने वाली आदिशक्ति दुर्गा जी मुझे अपना शुभ दर्शन प्रदान करें।।६०।।

**शैवश्चापो गरिष्ठो मिलदमितभटैर्वज्रतुल्यैरचाल्यो**
**जातः सद्यो लघिष्ठः कुसुमसममृदुः यत्कृपातः क्षणेन।**
**रामेणोत्क्षिप्त एवाभवदवयवशः खण्डखण्डोऽञ्जसैव**
**सा मे चाम्बाश्वसाध्याभिमतसुरलता मानसं वै पुनातु ।।६१।।**

**अन्वयः**—वज्रतुल्यैः मिलदमितभटैः मे अचाल्यः गरिष्ठः शैवः चापः यत्कृपातः सद्यः लघिष्ठः कुसुमसममृदुः जातः (तथा च) रामेण अञ्जसा एव उत्क्षिप्त एव क्षणेन अवयवशः खण्डखण्डः अभवत्, सा आशु एव असाध्याभिमतसुरलता देवी मे मानसं पुनातु वै।

**अर्थः**—जो वज्रतुल्य एक साथ मिलकर असंख्य वीरों के हिलाने पर भी नहीं हिल पाता था तथा जो बहुत ही भारी था, वह शिव जी का धनुष भी जिसकी कृपा से तुरन्त हल्का और पुष्प के समान कोमल हो गया और राम के द्वारा सरलता से ऊपर क्षेपण करने पर ही क्षण में ही अङ्ग-प्रत्यङ्ग टूटकर टुकड़े-टुकड़े हो गया, वह शीघ्र ही असाध्य कामनाओं को भी सिद्ध करने वाली कल्पलतास्वरूप देवी निश्चय ही मेरे मन को पवित्र करें।।६१।।

**यस्याः प्रीत्यात्यलभ्याखिलभटविजयावाप्तरामः सकामः**
**कण्ठे वै वैजयन्त्या दशरथतनयो न्यस्तया सीतयाऽसौ ।**
**सर्वोत्कृष्टच्छटाभिर्नृपधनुरजिरे सम्बभौ पुष्पलाजै-**
**राकीर्णैश्चाऽभ्यनन्दि प्रियजयनिनदैर्नौमि सीतानुतां ताम् ।।६२।।**

**अन्वयः**—यस्याः प्रीत्या अत्यलभ्याखिलभटविजयावाप्तरामः सकामः अभूत् तथा च सीतया कण्ठे न्यस्तया वैजयन्त्या असौ दशरथतनयः रामः नृपधनुरजिरे सर्वोत्कृष्टच्छटाभिः सम्बभौ, पुष्पलाजैः आकीर्णैः प्रियजयनिनदैः अभ्यनन्दि च तां सीतानुताम् अम्बां नौमि।

**अर्थः**—समस्त वीरों पर विजय प्राप्त करना जो अतिकठिन था, उसे भी जिसकी प्रसन्नता से प्राप्त कर श्रीराम सकाम हो गये। साथ ही सीता के द्वारा जिसके कण्ठ में जयमाला डाल दी गयी, वे दशरथतनय श्रीराम राजा जनक के धनुष-यज्ञ

के प्राङ्गण में सर्वोत्कृष्ट छटा से चमक उठे तथा बिखेरे गये पुष्पपुञ्जों एवं लाजों (लावा) से एवं प्रिय जयजयकार की ध्वनि द्वारा अभिनन्दित हुए, उस सीता जी के द्वारा स्तुति की गयी जगदम्बा को मैं नमस्कार करता हूँ।।६२।।

**त्वमम्बार्थो वाच्यो भवसि विदितस्तत्पदगतः**
**न लक्ष्यार्थो भिन्नोऽप्यणुरपि ततो भाति विदितः।**
**न च त्वां व्यङ्ग्यार्थो व्यभिचरति किञ्चित्क्षणमपि**
**सदा वृत्तित्रय्यावगतविषया त्वं विजयसे।।६३।।**

**अन्वयः**—हे अम्ब, त्वं तत्पदगतः वाच्यः अर्थः विदितः भवसि, ततः लक्ष्यार्थः अपि अणुः अपि भिन्नः विदितः न भाति, व्यङ्ग्यार्थः अपि क्षणम् अपि किञ्चित् त्वां न व्यभिचरति। वृत्तित्रय्या अवगतविषया त्वं सदा विजयसे।

**अर्थः**—हे अम्ब, उपनिषदों में प्रतिपादित 'तत् त्वमसि' महावाक्य में प्रयुक्त 'तत्' पद का वाच्यार्थ तुम ही ज्ञात होती हो, लक्ष्यार्थ भी उससे किञ्चित्मात्र भी भिन्न नहीं प्रतीत होता तथा व्यङ्ग्यार्थ भी एक क्षण के लिए तुमसे पृथक् नहीं प्रतीत होता। इस प्रकार अभिधा, लक्षणा एवं व्यञ्जना नामक तीनों वृत्तियों से तुम्हारा ही ज्ञान होता है। अतः तुम सर्वश्रेष्ठ हो, विजयिनी हो रही हो।।६३।।

**स जीवस्त्वंशब्दावगमविषयो नो कथमपि**
**त्वमेवाधिष्ठानस्त्वयि भवति सत्यां च सदसत्।**
**अतस्त्वामेव त्वम्पदविषयता याति सहसा**
**महावाक्यार्थस्यापि भवसि हि तात्पर्यमखिलम्।।६४।।**

**अन्वयः**—स जीवः त्वंशब्दावगमविषयः कथमपि न अस्ति। त्वम् एव अधिष्ठानः असि (यतः) त्वयि सत्यां सत् असत् च भवति। अतः त्वाम् एव त्वम्पदविषयता अपि सहसा याति। महावाक्यार्थस्य अपि अखिलं तात्पर्यं त्वम् एव भवसि।

**अर्थः**—हे अम्ब, उपनिषत्प्रतिपादित 'तत् त्वमसि' इस महावाक्य में जो 'त्वं' शब्द का अर्थ जीव कहा जाता है, वह किसी प्रकार घटित नहीं होता है; क्योंकि तुम ही अधिष्ठान हो। तुम्हारी सत्ता से भी सत् (कारण) और असत् (कार्य) की सत्ता देखी जाती है। अतः सम्पूर्ण 'तत् त्वमसि' महावाक्य का तात्पर्य तुम ही हो।।६४।।

**त्वमेव या माता ह्युपनिषदुदीर्येड्यचरिता**
**निराकाराखण्डा नयनवचनागोचरतनुः।**
**गुणातीता भक्ताखिलकलुषनाशाय सगुणा**
**हरासौ त्वं शीघ्रं हृदयघनमोहान्धपटलम्।।६५।।**

**अन्वयः**—हे अम्ब, उपनिषदुदीर्येड्यचरिता या त्वम् एव माता निराकारा अखण्डा वचननयनागोचरतनुः गुणातीता (सती अपि) भक्ताखिलकलुषनाशाय सगुणा भवसि, असौ त्वं मे हृदयघनमोहान्धपटलं शीघ्रं हर।

**अर्थः**—हे अम्ब, उपनिषदों के द्वारा इस प्रकार स्तुत्य और प्रशंसनीय जिसका चरित है, जो निराकार अखण्ड है और जिसका शरीर नेत्र तथा वाणी का विषय नहीं है एवं सभी गुणों से परे है, इस प्रकार होती हुई भी जो भक्तो के दुष्कृत का नाश करने के निमित्त सगुण रूप धारण कर लेती है, वह तुम माता मेरे हृदय के दृढ अज्ञानान्धकार को दूर कर दो।।६५।।

**विष्णुं शिवं द्रुहिणमित्युत ये भजन्ति**
**मातस्त्वमेव रचयस्यखिलान् स्वशक्त्या ।**
**सन्दर्शनाय च सुरान् शुभदानमीषां**
**नो चेदमी गतगुणाः सगुणाः कथं स्युः ।।६६।।**

**अन्वयः**—हे मातः, ये विष्णुं शिवं द्रुहिणं भजन्ति, अमीषां सन्दर्शनाय त्वम् एव स्वशक्त्या अखिलान् शुभदान् सुरान् रचयसि। नो चेद् गतगुणा अमी सगुणाः कथं स्युः?

**अर्थः**—हे माँ, जो लोग तुम्हें छोड़कर विष्णु, शिव अथवा ब्रह्मा आदि देवताओं की आराधना करते हैं, उन भक्तों के दर्शन के लिए तुम ही अपनी (माया) शक्ति से शुभ देने वाले समस्त आराध्य देवों की भी रचना करती हो, अन्यथा वे गुणहीन होने पर सगुण, साकार कैसे हो सकते हैं।।६६।।

**या त्वं सदैव मनसा स्मरतां स्वभासा**
**चेतोगृहस्थकलुषं विनिहंसि हर्षात्।**
**सा त्वं समस्तजनिसञ्चितकल्मषघ्ने**
**मातः प्रसीद मम चित्ततमोऽपहर्तुम् ।।६७।।**

**अन्वयः**—या त्वं सदैव मनसा स्मरतां हर्षात् स्वभासा चेतोगृहस्थ-कलुषं विनिहंसि, सा त्वं समस्तजनिसञ्चितकल्मषघ्ने मातः मम चित्ततमः अपहर्तुं प्रसीद।

**अर्थः**—जो तुम मन से सदैव स्मरण करने वाले लोगों के हृदय-मन्दिर में स्थित दुष्कृतों का प्रसन्नतापूर्वक नाश कर देती हो, वह समस्त जन्मों के सञ्चित पापों का नाश करने वाली माँ, तुम मेरे चित्त के अन्धकार को दूर करने हेतु प्रसन्न हो।।६७।।

**सकलभुवनरम्यं ते स्वरूपं च भव्यं**
**स्वयमिह विधृतं यत्स्वेच्छया चिन्मयं तत् ।**
**कथमिव तुलनीयं प्राकृतैर्वस्तुजातै-**
**स्त्रिगुणहतविकारैर्यानि सृष्टानि धात्रा।।६८।।**

**अन्वयः**—हे अम्ब, इह स्वेच्छया स्वयं यत् सकलभुवनरम्यं ते भव्यं स्वरूपं विधृतं (त्वया) तत् तु चिन्मयम् (अस्ति) ततः प्राकृतैः वस्तुजातैः कथम् इव तुलनीयं यानि धात्रा त्रिगुणहतविकारैः सृष्टानि।

**अर्थः**—हे अम्ब, यहाँ स्वेच्छा से समस्त लोकों में रमणीय एवं भव्य स्वरूप तुमने जो धारण किया है, वह तो चिन्मय है, ज्ञानरूप है, उसकी तुलना प्राकृत प्रकृति से उत्पन्न वस्तुओं से कैसे की जा सकती है; क्योंकि उनकी सृष्टि तो सत्त्व, रज, एवं तम के दूषित विकारों से ब्रह्मा जी के द्वारा की गयी है।।६८।।

**अरुणपदतलं ते चोपमीयेत केन**
**क्वचिदपि नहि लभ्यं चोपमानं ह्यदुष्टम्।**
**मृदुलसुरभिरक्तोत्फुल्लकञ्जेन साम्यं**
**यदि भवतु विधेयं तन्न रात्रौ चकास्ति।।६९।।**

**अन्वयः**—हे अम्ब, ते अरुणपदतलं केन च उपमीयेत, क्वचिद् अपि अदुष्टम् उपमानं हि न लभ्यम्। यदि मृदुलसुरभिरक्तोत्फुल्लकञ्जेन साम्यं विधेयं भवतु तद् रात्रौ न चकास्ति।

**अर्थः**—हे अम्ब, आपके लाल चरणों के तलवे की उपमा किस वस्तु से दी जाय? क्योंकि कोई भी वस्तु दोषरहित नहीं प्राप्य है। यदि कोमल, सुगन्धित विकसित रक्त कमल से उसकी तुलना की जाय, तो वह रात में विकसित ही नहीं होता। आपके चरणतल तो क्षण प्रतिक्षण विकसित रहते हैं।।६९।।

**तव चरणनखास्ते कानिचिद्दर्पणानि**
**न हि भवति च दृष्टं केवलं यत्र वक्त्रम् ।**
**अपि तु तव कृपामृद्वञ्जनावाप्तनेत्रै-**
**र्विधिकृतमखिलं तत्रेक्ष्यतेऽखण्डविश्वम् ।।७०।।**

**अन्वयः**—हे अम्ब, तव ते चरणनखाः कानिचिद् दर्पणानि सन्ति यत्र केवलं वक्त्रं न हि दृष्टं भवति, अपि तु तव कृपामृद्वञ्जनावाप्तनेत्रैः तत्र विधिकृतम् अखिलम् अखण्डविश्वम् ईक्ष्यते।

**अर्थः**—हे अम्ब, तुम्हारे चरणों के वे नख तो कोई विलक्षण ही दर्पण हैं, जिनमें केवल मुख ही नहीं दिखाई देता, वरन् जिन्हें आपके कृपाप्रसादरूप अञ्जन के प्रयोग से दिव्य दृष्टि प्राप्त हो गयी है, उन्हें तो विधाता द्वारा रचित अखिल विश्व का दर्शन उनमें होता है।।७०।।

**तवाम्बैतद्वक्त्रं निरतिशयशोभाधवलितं**
**नवां नव्यां चैव द्युतिमनिशमाधत्त उदिताम्।**
**अजेशश्रीशानां भवति हृदयं वीक्ष्य चकितं**
**तदेतत् किं वर्ण्यं शतवदनशेषेण च मुखैः ।।७१।।**

**अन्वयः**—हे अम्ब, निरतिशयशोभाधवलितं तव एतद् यद् वक्त्रम् अनिशम् उदितां नवां नव्यां चैव द्युतिम् आधत्ते, यद् वीक्ष्य अजेशश्रीशानां च हृदयं चकितं भवति, तद् एतत् शतवदनशेषेण च मुखैः किं वर्ण्यं स्यात्?

**अन्वयः**—हे अम्ब, निरतिशय शोभा से प्रकाशित तुम्हारा यह मुख जो निरन्तर स्फुरित होती हुई नयी नयी छटा धारण कर रहा है और जिसे देखकर ब्रह्मा, शिव एवं विष्णु का भी हृदय चकित हो जाता है, उसका वर्णन क्या सैकडों मुख वाले शेषनाग के समस्त मुखों से भी किया जा सकता है।।७१।।

**सौन्दर्यापारसिन्धोः स्मितलसितमुखस्यानवद्यस्य तेऽम्ब**
**साम्यं कर्तुं न योग्यं कथमपि कविना पूर्णबिम्बेन्दुनाऽपि।**
**हेतुस्तत्रायमेवान्तरितमपि तमो हन्ति दीप्त्या मुखं ते**
**पूर्णश्चन्द्रस्तु नित्यं क्षयभयविकलो बाह्यमेवान्धकारम् ।।७२।।**

**अन्वयः**—हे अम्ब, सौन्दर्यापारसिन्धोः स्मितलसितमुखस्य अनवद्यस्य बिम्बेन्दुना अपि कविना कथम् अपि साम्यं कर्तुं न योग्यम्। तत्र अयम् एव हेतुः (अस्ति यत्) ते मुखं दीप्त्या अन्तरितम् अपि तमो हन्ति, पूर्णः चन्द्रस्तु नित्यं क्षयभयविकलः बाह्यम् एव अन्धकारं हन्ति।

**अर्थः**—हे अम्ब, सौन्दर्य के अपार सागर स्वरूप प्रशंसनीय एवं मन्द मुसकान से सुशोभित तुम्हारे मुख की समस्त कलाओं से परिपूर्ण चन्द्रमा से भी कवि के द्वारा समता करना उचित नहीं है। उसमें कारण यही है कि आपका मुख तो अपनी विलक्षण द्युति से हृदय के अन्दर रहने वाले अन्धकार का भी नाश कर देता है; किन्तु पूर्ण चन्द्रमा तो नित्य अपनी कलाओं के क्षय के भय से व्याकुल रहने के कारण केवल बाहरी अन्धकार का ही नाश करता है, न कि आन्तरिक अन्धकार का भी।।७२।।

**पद्मेनाप्युपमीयतां कथमहो दिव्याननं तेऽम्बिके**
**वक्त्रं ते क्व च कल्मषघ्नममलं स्वेच्छामयं भास्वरम्।**
**पुण्यं पुण्यजनाश्रयञ्च कमलं पद्मं क्व पङ्कोद्भवम्**
**उच्छिष्टं कविभिश्च नश्यति हिमे साम्यं न किञ्चित्तयोः।।७३।।**

**अन्वयः**—हे अम्बिके ते दिव्याननं पद्मेन अपि कथम् उपमीयताम्? ते स्वेच्छामयं पुण्यं पुण्यजनाश्रयं च कल्मषघ्नम् अमलं भास्वरं वक्त्रं क्व? कमलं पङ्कोद्भवं कविभिः उच्छिष्टं हिमे नश्यति च यत् तत् पद्मं क्व? तयोः किञ्चित् अपि साम्यं नास्ति।

**अर्थः**—हे अम्बिके, इस अलौकिक सौन्दर्यविशिष्ट मुख की उपमा कमल से भी कैसे दी जा सकती है; क्योंकि जो स्वेच्छामय पवित्र है और पुण्यात्मा जनों द्वारा जिसका दर्शन, चिन्तन किया जाता है तथा जो नित्य निर्मल देदीप्यमान और पापों का नाश करता रहता है, वह तुम्हारा मुख कहाँ और यह कमल जो जल का मैल है, कीचड़ से उत्पन्न हुआ है, व्यक्तियों के द्वारा अनेक बार उपमित होकर जूठा हो गया है तथा जो शीतकाल में नष्ट हो जाता है, वह पद्म कहाँ? अर्थात् दोनों के सौन्दर्य में महान् अन्तर होने के कारण दोनों में कुछ भी समता नहीं है।।७३।।

**उद्यल्लोहितभास्करोऽपि भजते नैवोपमानास्पदं**
**दीप्त्या दृष्टिविलोभनोऽपि मुनिभिर्द्रष्टुं निषिद्धः सदा।**
**हेयो दुग्धमुखो यथा विषघटः किन्त्वाननं तेऽम्बिके**
**शश्वच्छर्मदमेव भक्तमतिभिर्ध्यातं स्मृतं चेक्षितम्।।७४।।**

**अन्वयरः**—हे अम्बिके, उद्यल्लोहितभास्करः अपि ते मुखस्य उपमानास्पदं नैव भजते (यतः) दीप्त्या दृष्टिविलोभनः अपि स यथा दुग्धमुखः घटः हेयः, तथैव मुनिभिः द्रष्टुं निषिद्धः, किन्तु ते आननं तु भक्तमतिभिः ध्यातं स्मृतम् ईक्षितं च शश्वत् शर्मदम् एव अस्ति।

**अर्थ**—हे अम्बिके, उदीयमान अरुणवर्ण सूर्य भी तुम्हारे मुख का उपमान होने की पात्रता को नहीं धारण करता; क्योंकि यद्यपि वह अपनी आभा से दृष्टि को लुभा लेता है, फिर भी मुनियों ने उसके दर्शन का उसी प्रकार निषेध किया है, जैसे अन्दर विष और ऊपर दूध रखा हुए घड़ा त्याज्य होता है; किन्तु आपका मुख तो भक्तिविशिष्ट मति से ध्यान, स्मरण और दर्शन करने पर सदा सुखद ही होता है।।७४।।

**तवाक्ष्णां या कान्तिस्तव नयनकान्त्यैव सदृशी**
**न तादृग्वस्त्वन्यत्प्रकृतिकृतसृष्ट्यां क्वचिदपि।**
**तदाकृत्या किञ्चित्सममलिमिलन्नीलकमलं**
**न नेत्राणां मातः त्वणुरपि गुणैस्तत्र समता।।७५।।**

**अन्वयः**—हे मातः, तव अक्ष्णां या कान्तिः सा तव नयनकान्त्या एव सदृशी। तादृग् अन्यद् वस्तु प्रकृतिकृतसृष्ट्यां क्वचिद् अपि नास्ति। यद्यपि अलिमिलत् नीलकमलं तदाकृत्या किञ्चित् समम् अस्ति; किन्तु तत्र नेत्राणां गुणैः अणुः अपि समता नास्ति।

**अर्थः**—हे अम्ब, तुम्हारी आँखों की जो शोभा है, वह तुम्हारे नयनों की कान्ति के ही सदृश है; क्योंकि वैसी सुन्दर वस्तु प्रकृति द्वारा रचित सृष्टि में कही भी नहीं है। यद्यपि भ्रमरयुक्त नीलकमल में उसकी आकृति से कुछ समानता है; किन्तु उसमें भी नेत्रों के गुणों से कुछ भी समानता नहीं है।।७५।।

**अहो लीलालास्यं तव च नयनानामनुपमं**
**क्षणं दुष्टान् दग्धुं स्फुरति च यतः कालदहनः।**
**विपन्नाँश्चोद्धर्तुं करुणरससिन्धोऽश्रुसलिलैः**
**सरित्स्रोतोजालं सरति च ततस्तापशमनम् ।।७६।।**

**अन्वयः**—हे करुणरससिन्धो अम्ब, अहो! तव नयनानाम् अनुपमं लीलालास्यम्। यतः दुष्टान् दग्धुं क्षणं कालदहनः स्फुरति, विपन्नान् उद्धर्तुं च ततः तापशमनं सरित्स्रोतोजालं च सरति।

**अर्थः**—हे करुणारससागर माँ, तुम्हारे नेत्रों का लीलाविलास कितना विलक्षण एवं आश्चर्यजनक है कि क्षण में दुष्टों को जला देने के लिए उसमें कालाग्नि प्रकट हो जाता है तथा आपद्ग्रस्त जनों का उद्धार करने हेतु उसमें ताप शान्त करने वाला नदियों और झरनों का जल बहने लगता है।।७६।।

**श्रुतं प्राग्वृत्तं यच्छतसममनावृष्टिसमये**
**क्वचित्सस्याप्राप्त्या मृतिमुखविशत्त्रस्तजनता।**
**शताक्ष्यास्तेऽम्बाया निःसृतनिजनेत्राम्बुनिवहैः**
**परित्रातोत्पाद्यामृतमयफलान्नादिनिकरान् ।।७७।।**

**अन्वयः**—हे अम्ब, प्राग्वृत्तं श्रुतं यत् शतसमम् अनावृष्टिसमये क्वचित् सस्याप्राप्त्या मृतिमुखविशत्त्रस्तजनता ते अम्बायाः शताक्ष्याः निःसृतनिज-नेत्राम्बुनिवहैः अमृतमयफलान्नादिनिकरान् उत्पाद्य परित्राता।

**अर्थः**—हे अम्ब, यह प्राचीन इतिहास सुना गया है कि पहले कभी सैकड़ों वर्षों तक जब अनावृष्टि हुई थी, उस समय कहीं भी भोजन-सामग्री न मिलने के कारण जब जनता मृत्यु के मुख में प्रविष्ट हो रही थी, तब उसकी रक्षा आपने अपनी सैकड़ों आँखों से निकले हुए अश्रुजल से अमृतमय फल-मूल एवं अन्नराशि उत्पन्न कर की।।७७।।

**सदा स्वभ्रूभङ्गाकुलकुटिलनेत्राग्निशिखया**
**प्रचण्डाखण्डौजोबलजवमदोत्सिक्तमनसाम् ।**
**रिपूणां गर्वं या दहति सहसा सामरमयी**
**पराम्बा मे सर्वं कृतमशुभजातं जरयतु।।७८।।**

**अन्वयः**—या सदा स्वभ्रूभङ्गाकुलकुटिलनेत्राग्निशिखया प्रचण्डाखण्डौजो-बलजवदोत्सिक्तमनसां रिपूणां गर्वं सहसा दहति सा अमरमयी पराम्बा में कृतं सर्वम् अशुभजातं जरयतु।

**अर्थः**—जो सदा अपने भ्रूभङ्ग से व्याकुल एवं कुटिल नेत्रों की अग्निज्वाला से प्रचण्ड अखण्ड ओज, बल एवं वेग के घमण्ड से युक्त शत्रुओं का गर्व सदा नष्ट कर देती है, वह देवमयी पराम्बा मेरे किये गये समस्त अशुभों को नष्ट कर दे।।७८।।

**पुराणे शास्त्रे च त्वमसि गदिताऽम्ब त्रिनयना**
**शताक्षी देवी च श्रुतिमुपगतं नाम सुभगम्।**
**ममायं विश्वासो यदसि गणनातीतनयना**
**यतोऽक्षीण्यप्येते रविशशिसमेता उडुगणाः।।७९।।**

**अन्वयः**—हे अम्ब, पुराणे शास्त्रे च त्वं त्रिनयना गदिता असि। शताक्षी देवी च सुभगं नाम श्रुतिम् उपगतम् (अस्ति); किन्तु मम अयं विश्वासः अस्ति (यत्) त्वं गणनातीतनयना असि। यतः एते रविशशिसमेता उडुगणा अपि ते अक्षीणि एव सन्ति।

**अर्थः**—हे अम्ब, पुराणों और शास्त्रों में तुम्हारा वर्णन त्रिनयना (त्रिनेत्रधारिणी) नाम से किया गया है तथा सुन्दर शताक्षी देवी नाम भी सुना गया है; किन्तु मेरा तो यह विश्वास है कि तुम गणनातीतनयना (असंख्यनेत्रधारिणी) हो; क्योंकि ये दृश्यमान सूर्य, चन्द्र सहित समस्त तारागण भी तो आपके नेत्र ही हैं।।७९।।

**दयोल्लोलः सिन्धुस्तव च हृदयं कीदृगतुलं**
**यदापन्नांस्त्रातुं कृशकटितटे सौधकलशम् ।**
**वहन्ती प्रीत्या तान् रसयसि सुधां स्वर्णचषकैः**
**कृपापीयूषं तत् प्रदिश कणशो मेऽपि सरसम् ।।८०।।**

**अन्वयः**—हे अम्ब, दयोल्लोलः सिन्धुः तव हृदयं कीदृग् अतुलम् अस्ति यद् आपन्नान् त्रातुं कृशकटितटे सौधकलशं वहन्ती प्रीत्या तान् स्वर्णचषकैः सुधां रसयसि। तत् सरसं कृपापीयूषं मे कणशः अपि प्रदिश।

**अर्थः**—हे माँ, दया की उत्ताल तरङ्गों से लहराता हुआ समुद्र तुम्हारा हृदय कितना अतुलनीय है कि तुम शरणापन्न जनों की रक्षा के लिए अत्यन्त कृश अपने कटिप्रदेश पर अमृतपूर्ण कलश रखकर स्वर्णचषकों से प्रेम से उन्हें अमृत का रसास्वादन कराती हो। कृपारूपी अमृत के कुछ बिन्दु मुझे भी प्रदान करो।।८०।।

**विशालो बाहूनामसिकुलिशशङ्खाभयवता-**
**मखण्डः सङ्घातो ग्रसितुमिव रक्षांसि लुलति ।**
**यथा हन्तॄन् दंष्टुं विषवमनदुर्व्यग्रफणिनां**
**गणः स्फारं स्फारं निजनिजफणानुत्पतति ते ।।८१।।**

**अन्वयः**—हे अम्ब, असिकुलिशशङ्खाभयवतां ते बाहूनां विशालः अखण्डः सङ्घातः रक्षांसि ग्रसितुम् इव लुलति। यथा विषवमनदुर्व्यग्रफणिनां गणः हन्तॄन् दंष्टुं निजनिजफणान् स्फारं स्फारम् उत्पतति।

**अर्थः**—हे अम्ब, खड्ग, वज्र, शङ्ख एवं अभय (मुद्रा) आदि अस्त्रों को धारण करने वाली आपकी बाँहों का विशाल एवं अखण्ड समूह राक्षसों को निगल जाने हेतु उसी प्रकार लपकता है, जैसे विषवमन में व्याकुल विषैले सर्पों का समूह हत्या करने वालों को डँसने के लिए अपने फणों को फैला-फैलाकर उन पर उछल कर आक्रमण करता है।।८१।।

**राजन्ते च मृणालतन्तुसदृशाः स्निग्धाः सदा बाहवो**
**हस्ताः पद्मसुमानि चाङ्गुलिदलान्यन्तर्दलानीव ते ।**
**शस्त्राणि स्फुरितानि भान्ति पवनोद्धूताः परागा यथा**
**स्वान्तःसारबहिःसुकोमलतराः शश्वज्जयन्त्यम्बिके ।।८२।।**

**अन्वयः**—हे अम्बिके, ते बाहवः मृणालसदृशाः स्निग्धाः, हस्ताः पद्मसुमानि इव, अङ्गुलिदलानि अन्तर्दलानीव तथा स्फुरितानि शस्त्राणि पवनोद्धूताः परागाः यथा भान्ति। स्वान्तःसारबहिःसुकोमलतराः ते बाहवः शश्वत् जयन्ति।

**अर्थः**—हे अम्बिके, तुम्हारी बाँहें मृणालतन्तु के समान कोमल हैं। उनके ऊपर हाथ कमल-पुष्पों के सदृश सुन्दर प्रतीत होते हैं। आपकी कोमल अङ्गुलियाँ कमल-पुष्प की पंखुड़ियों सदृश हैं तथा हाथों में चमकते चञ्चल करवाल आदि अस्त्र पवन से उड़ाये गये कमल के परागों के सदृश शोभा पा रहे हैं। हे माँ, इस प्रकार बाहर से अत्यन्त कोमल किन्तु अन्दर से अतिशय बलिष्ठ आपकी बाँहें सदा विजयिनी हो रही हैं।।८२।।

**क्रीडा यस्य गजेन्द्रमस्तकघटस्फोटो नखाग्राङ्कुशै-**
**र्लीला शोणितपानमस्ति च सदा सोऽप्युग्रवीर्योऽपि याम्।**
**सिंहो वाहनतामुपेत्य भजतेऽनिद्रोऽभिमानं विना**
**तामम्बां त्वमकिञ्चनो न भजसे ब्रूह्यन्धचेतः कथम्॥८३॥**

**अन्वयः**—यस्य क्रीडा नखाग्राङ्कुशैः गजेन्द्रमस्तकघटस्फोटः तथा लीला शोणितपानम् अस्ति। स उग्रवीर्यः सिंहः अपि अभिमानं विना वाहनताम् उपेत्य अनिद्रः भजते, ताम् अम्बां हे अन्धचेतः! ब्रूहि अकिञ्चनः त्वं कथं न भजसे।

**अर्थः**—जिसकी क्रीडा नखाग्ररूप अङ्कुशों से मदमत्त गजराजों के मस्तक-रूपी घड़ों को फोड़ना है और जिसकी लीला रुधिरपान करना है, वह भयङ्कर पराक्रमी सिंह भी अभिमानरहित होकर वाहन बनकर जिसकी सेवा करता है, रे अन्धा मन! तू अकिञ्चन होते हुए भी उस विश्वजननी अम्बा की भक्ति क्यों नहीं कर रहा है?॥८३॥

**सान्द्रानुरागरसरञ्जितनित्यभक्त्या**
**प्रीता च या परिददौ मृगराजलक्ष्मीम्।**
**सिंहाय हिंस्रपशवे सकुलाय चापि**
**तामम्बिकां न भजसे वद चित्त कस्मात्॥८४॥**

**अन्वयः**—सान्द्रानुरागरसरञ्जितनित्यभक्त्या प्रीता या सकुलाय हिंस्रपशवे अपि सिंहाय मृगराजलक्ष्मीं परिददौ, हे चित्त, वद ताम् अम्बिकां त्वं कस्मात् न भजसे?

**अर्थः**—गाढ़ प्रेमरस से रँगी हुई जिसकी नित्य भक्ति से प्रसन्न होकर जिसने हिंसा करने वाले पशु सिंह को ही नहीं, वरन् उसकी वंशपरम्परा को भी मृगराज जैसी श्रेष्ठ पदवी दे दी, उस अम्बा का तू क्यों भजन नहीं कर रहा है। हे चित्त! बताओ तो॥८४॥

**दुर्भिक्षे च जना यदान्तकमुखं संयान्ति भोज्यं विना**
**भूमिः शुष्कमहीरुहा गतरसा धत्ते च खल्वाटताम्।**
**या शाकाज्यपयोदधिप्रियरसैः स्वाद्वन्नपानादिभि-**
**र्विश्वं रक्षति तां व्रजामि शरणं शाकम्भरीं मातरम्॥८५॥**

**अन्वयः**—यदा दुर्भिक्षे जना भोज्यं विना अन्तकमुखं संयान्ति, गतरसा शुष्कमहीरुहा भूमिः खल्वाटतां धत्ते, तदा या शाकाज्यपयोदधिप्रियरसैः स्वाद्वन्न-पानादिभिः विश्वं रक्षति, तां शाकम्भरीं मातरं शरणं व्रजामि।

**अर्थः**—दुर्भिक्ष के दिनों में जब भोज्य वस्तु के अभाव के कारण लोग यमराज के मुख में जाने लगते हैं, नदी, नद एवं वृक्ष के सूख जाने से धरती खल्वाट हो जाती है, उस समय जो शाक, घी, दूध और दही आदि के द्वारा प्रिय सरस एवं स्वादिष्ट भोजन, पेय पदार्थों के द्वारा समस्त विश्व की रक्षा करती है, उस शाकम्भरी माता की शरण जा रहा हूँ।।८५।।

**मातश्चित्तं नहि मम वचः संशृणोति प्रमादात्**
**स्वच्छन्दं च भ्रमति मधुलिट् पुष्पपुष्पं यथैव ।**
**सत्यञ्चैतत्तदपि न हि मया दृश्यते तस्य दोषो**
**यस्माच्चित्ते विहितवसतिः प्रेरिका च त्वमेव ।।८६।।**

**अन्वयः**—हे मातः, चित्तं मम वचः प्रमादात् न हि संशृणोति, यथा एव मधुलिट् पुष्पपुष्पं स्वच्छन्दं भ्रमति तथैव भ्रमति। यद्यपि एतत् सत्यम् अस्ति तथापि मया तस्य दोषो न हि दृश्यते, यस्मात् चित्ते विहितवसतिः त्वमेव प्रेरिका असि।

**अर्थः**—हे माँ, मेरा चित्त प्रमाद के कारण मेरी बात नहीं सुन रहा है और जैसे भ्रमर एक पुष्प छोड़कर दूसरे पुष्पों पर मडराता है, उसी प्रकार वह भी इधर-उधर घूमता रहता है। यद्यपि यह बात सत्य है, तब भी मुझे उसका दोष नहीं मालूम होता; क्योंकि सबके हृदय में निवास करने के कारण प्रेरणा देने वाली तो तुम ही हो।।८६।।

**मातर्व्याप्ता जगति विमला कीर्तिकान्तिस्त्वदीया**
**सर्वान्तःस्था वितरसि बलं कर्म कर्तुं सदैव ।**
**शैलूषीवानुपमकलया नर्तयस्येव सर्वान्**
**कस्ते तन्त्राद् भवति च पृथग् यो नु दूष्यो मया स्यात् ।।८७।।**

**अन्वयः**—हे मातः, त्वदीया विमला कीर्तिकान्तिः जगति व्याप्ता यत् सर्वान्तःस्था कर्म कर्तुं बलं सदैव वितरसि। तथा शैलूषी इव अनुपमकलाकलया सर्वान् नर्तयसि एव। कः ते तन्त्रात् पृथग् भवति, यो नु मया दूष्यः स्यात्?

**अर्थः**—हे माँ, तुम्हारी निर्मल कीर्ति की कान्ति सारे जगत् में व्याप्त है कि सबके अन्तःकरण में स्थित रहकर सबको सदा कर्म करने की शक्ति देती रहती हो और नटी के समान अपनी अनुपम नचाने की कला से सबको नचाती ही रहती हो, तो भला बताओ कि तुम्हारे अधिकार से पृथक् कौन है, जिसे दोष दिया जाय।।८७।।

**श्रूयन्ते ते शुभगुणगणा गीयमानाः समन्तात्**
**सद्यः प्रीता भवसि कृतयाऽनन्यभक्त्यैव मातः।**
**सत्यं चेन्नो भवति सुलभाया सा कृपामन्तरा ते**
**इच्छाभावे दलमपि न चलत्यम्बिके ते यतो हि।।८८।।**

**अन्वयः**—हे मातः, ते शुभगुणगणाः समन्ताद्गीयमानाः श्रूयन्ते यत् कृतया अनन्यभक्त्या एव प्रीता भवसि। चेत् सत्यम्, सा ते कृपाम् अन्तरा सुलभा नो भवति। यतो हि हे अम्बिके, ते इच्छाभावे दलम् अपि न चलति।

**अर्थः**—हे माँ, तुम्हारे मङ्गलमय गुणगण चतुर्दिक् गाये जाते हुए सुनायी देते हैं कि की गयी केवल अनन्य भक्ति से ही तुम सद्यः प्रसन्न हो जाती हो। यद्यपि यह बात सत्य है, तथापि वह तुम्हारी अनुकम्पा के बिना सुलभ नहीं है; क्योंकि हे अम्बिके, तुम्हारी इच्छा के बिना एक पत्ता भी नहीं हिल सकता।।८८।।

**नैतन्मे घटते मनागपि मतौ भक्ता ते के प्रियाः**
**ये त्वद्भक्तिरताजविष्णुगिरिशाद्याराधनातत्पराः ।**
**तेऽपि स्युस्त्वदनन्यभक्तगणतः प्रेयांस एवाखिला**
**दृश्यन्ते हि यतः सतां प्रियतरा दासात्तु दासानुगाः ।।८९।।**

**अन्वयः**—हे अम्ब, मे मतौ एतत् मनाग् अपि न घटते यत् के ते प्रिया भक्ता न सन्ति, ये त्वद्भक्तिरताजविष्णुगिरिशाद्याराधनातत्पराः (सन्ति) ते अपि त्वदनन्यभक्तगणतः प्रेयांस एव स्युः। यतो हि (लोके) सतां दाशात् तु दासानुगाः प्रियतरा दृश्यन्ते।

**अर्थः**—हे माँ, मेरी बुद्धि में यह बात किञ्चित् मात्र भी नहीं बैठती है कि कौन भक्त आपके प्रिय नहीं हैं; क्योंकि जो आपके अतिरिक्त आपकी भक्ति में तत्पर ब्रह्मा, विष्णु एवं शङ्कर आदि देवताओं की भक्ति करते हैं, उन्हें तो आपको अपने अनन्य भक्तों से भी प्रिय समझना चाहिए; क्योंकि लोक में यही देखा जाता है कि सज्जनों को अपने भक्त से अधिक प्रिय दासों के दास ही होते हैं।।८९।।

**त्वमसि जननि वेदा वेदवेद्या च सिद्धा**
**क्रमपदघनपाठैर्ऋग्यजुःसामगानैः ।**
**उषसि मधुरकण्ठैर्गीयमाना त्वमेव**
**स्पृश मम हृदयान्तर्वल्लकीमस्तरागाम् ।।९०।।**

**अन्वयः**—हे जननि, त्वं वेदा वेदवेद्या च सिद्धा (असि) त्वम् एव मधुरकण्ठैः क्रमपदघनपाठैः ऋग्युजःसामगानैः उषसि गीयमाना असि। अस्तरागां मम हृदयान्तर्वल्लकीं स्पृश।

**अर्थः**—हे अम्ब, तुम ही वेदस्वरूप हो और वेदों से जानने योग्य भी हो। तुम्हारा ही गान प्रातः मधुर कण्ठों से क्रम, पद एवं घनपाठ सहित ऋग्वेद, यजुर्वेद एवं सामवेद के द्वारा किया जाता है। जिसका राग समाप्त हो गया है, उस मेरे हृदय की आन्तरिक वीणा का स्पर्श करो।।९०।।

**गुणाः स्पर्शं तेऽम्बाकृतिरपि न किञ्चिद्विदधते**
**स्वयञ्ज्योतिः शुद्धा महिमनि निजे चैव रमसे ।**
**तथापि त्वं लोके प्रणतजनतातापहरणं**
**विधातुं लीलाः स्वां रचयसि सदा मङ्गलमयीः ।।९१।।**

**अन्वयः**—हे अम्ब, गुणाः आकृतिः अपि ते किञ्चिद् अपि स्पर्शं न विदधते। स्वयञ्ज्योतिः शुद्धा (सती) निजे महिमनि एव रमसे। तथापि त्वं लोके प्रणतजनतातापहरणं विधातुं सदा स्वां मङ्गलमयीः लीलाः रचयसि।

**अर्थः**—हे अम्ब, यद्यपि गुण और आकृति तुम्हारा तनिक भी स्पर्श नहीं करती, तुम अपनी शुद्ध महिमा में विराजमान होकर रमण करती हो, तथापि अपने से उत्पन्न जनता का ताप हरण करने के लिए नित्य मङ्गलमयी लीला करती रहती हो।।९१।।

**यदा देवा दैत्यै रणभुवि समे चैव विजिता-**
**स्तदा तैर्दैत्यघ्नं जनयितुमलं शूरतनयम् ।**
**स्तुता त्वं स्नेहार्द्रा शिवशुभकरे न्यास्य च करं**
**चकर्थादर्शं यच्चरितमशुभं नः शमयतु ।।९२।।**

**अन्वयः**—यदा दैत्यैः रणभुवि समे देवा विजिताः, तदा तैः दैत्यघ्नम्, अलं शूरतनयं जनयितुं तत् स्तुता तदा स्नेहार्द्रा सती शिवशुभकरे करं न्यास्य यद् आदर्शचरितं चकर्थ तत् नः अशुभं शमयतु।

**अर्थः**—जब दैत्यों के द्वारा युद्धक्षेत्र में सभी देवता पराजित हो गये, तब उन्होंने उन दैत्यों का नाश करने में समर्थ अपार बलशाली वीर पुत्र उत्पन्न करने के लिए आपकी स्तुति की। उसके बाद स्नेह से द्रवित होकर भगवान् शङ्कर के हाथ में अपना हाथ रखकर पाणिग्रहण कराकर आपने जो आदर्श चरित्र किया, वह हमारे अशुभ का शमन करे।।९२।।

**अहो शीलं लीलाकृतिरथ रतिश्चाप्यनुपमा**
**मनो वश्यं याभिः कृतमपि सुखेन स्मररिपोः ।**
**पुनीता नारीणां चरिततततयो याश्च विहिता-**
**स्तदाचारात्सर्वाः प्रियपतिसुखं यान्ति सुभगाः ।।९३।।**

**अन्वयः**—हे अम्ब, अहो! ते शीलं लीला आकृतिः अथ च अनुपमा रतिः अपि अस्ति, याभिः स्मररिपोः अपि मनः वश्यं कृतम्। या च पुनीता नारीणां चरिततततयः विहिताः तदाचारात् सर्वाः सुभगाः प्रियपतिसुखं यान्ति।

**अर्थः**—हे अम्ब, तुम्हारा स्वभाव, लीला, आकृति और अनुपम प्रेम कितना आश्चर्यजनक है कि उनके द्वारा कामदेव के शत्रु भगवान् शङ्कर के मन को भी सरलता से अपने वश में कर लिया। उस समय जो-जो प्रिय पवित्र चरित्र आपके द्वारा किये गये, उनके आचरण करने से सभी सौभाग्यवती स्त्रियाँ अपने पति के सौभाग्य-सुख को प्राप्त करती हैं।।९३।।

**येनासावमरावती च विजिता सेन्द्रा सुराश्चौजसा**
**लोकान् स्वानपहाय दुर्गमवनेष्वन्तर्हितास्त्रासतः ।**
**सूत्वा त्वं खलतारकासुरममुं हन्तुं सुतं षण्मुखं**
**रक्षश्चक्रमनीनिशश्च सहसा तां त्वां न को वा भजेत् ।।९४।।**

**अन्वयः**—हे अम्ब, येन ओजसा असौ सेन्द्रा अमरावती सुराः च विजिताः, तथा ते त्रासतः स्वान् लोकान् अपहाय दुर्गमवनेषु अन्तर्हिताः। तदा त्वं अमुं खलतारकासुरं हन्तुं षण्मुखं सुतं सूत्वा सहसा रक्षश्चक्रम् अनीनिशः, तां त्वां को वा न भजेत्?

**अर्थः**—हे माँ, जिसने अपने बल से इन्द्र सहित उस अमरावती नामक इन्द्र पुरी को तथा सभी देवताओं को जीत लिया और वे उसके भय से अपने-अपने लोकों को छोड़कर दुर्गम जङ्गलों में छिप गये। उस समय उस दुष्ट तारकासुर का वध करने के लिए आपने षडानन (कार्तिकेय) पुत्र उत्पन्न कर तुरन्त समस्त राक्षसों का नाश कर दिया, ऐसी दयालु माँ की कौन भक्ति नहीं करेगा।।९४।।

**विघ्नेशो गुणिनां वरोऽपि तनयः सूतस्त्वया चाम्बिके**
**विघ्नव्यूहविनाशनाय नुतया प्रौढान्तरायाहतैः।**
**दृष्ट्वा तेऽनुपमां कृपाञ्च विहितां सर्वैर्नृदेवासुरै-**
**रादौ त्वं ससुताऽर्चिता विजयसे तां त्वां नुवामीश्वरीम् ।।९५।।**

**अन्वयः**—हे अम्बिके, प्रौढान्तरायाहतैः नुतया त्वया विघ्नव्यूहविनाशनाय गुणिनाम् अपि वरः तनयः विघ्नेशः सूतः, ते इमाम् अनुपमां विहितां कृपां दृष्ट्वा सर्वैः नृदेवासुरैः आदौ अर्चिता ससुता विजयसे। तां त्वाम् ईश्वरीम् अहम् नुवामि।

**अर्थः**—हे अम्बिके, प्रबल विघ्नों से आहत जनों के स्तुति करने पर तुमने विघ्नों के जाल को नष्ट करने के लिए गुणियों मे श्रेष्ठ पुत्र श्री विघ्नेश्वर गणेश को जन्म दिया। तुम्हारी इस अनुपम अनुकम्पा को देखकर सभी मनुष्य देवों एवं असुरों के द्वारा कार्य के आरम्भ में ही पुत्र श्री गणेश सहित तुम्हारी सदा पूजा की जाती है। तुम ही सर्वाभीष्टप्रदायिनी हो। मैं तुम्हारी स्तुति कर रहा हूँ।।९५।।

**लाभो मानवजन्मनोऽस्ति चरमो मातश्च ते दर्शनं**
**याचे त्वां तदवाप्नुयां च हि यथा देवाश्च नुत्याप्नुवन्।**
**नैवाप्तं ह्यधुनाऽपि हन्त विगताश्चाशीतिसंख्यासमा**
**नैवाद्यापि दृशोस्तृषामपनयेर्व्यर्थं भवेज्जीवनम्।।९६।।**

**अन्वयः**—मातः, ते दर्शनं मानवजन्मनः चरमः लाभोऽस्ति। त्वां तद् याचे तद् अवाप्नुयाम्, यथा देवाश्च नुत्या आप्नुवन्। परन्तु अशीतिसंख्यासमाः विगताः, तथापि अधुना अपि न एव आप्ता यदि अद्य अपि दृशोः तृषां न अपनयेः, तदा जीवनं व्यर्थं भवेत्।

**अर्थः**—हे माँ, तुम्हारा दर्शन ही मानव जन्म का अन्तिम लाभ है। उसकी मैं आपसे याचना करता हूँ कि वैसे ही वह मुझे प्राप्त हो, जैसे देवों ने स्तुति के द्वारा प्राप्त किया। परन्तु मेरे जीवन के छिहत्तर वर्ष बीत गये, तब भी आपके दर्शन नहीं प्राप्त हुए। यदि अब भी आप मेरे नेत्रों की प्यास नहीं शान्त करतीं, तो मेरा जीवन ही व्यर्थ हो जायेगा।।९६।।

**धनं दत्से धान्यं भवनमपि सौधं धवलितं**
**प्रियां भार्यां स्निग्धां मधुरवचनां सुन्दरमुखीम्।**
**सुतं वश्यं विद्याविनयलसितं साधुचरितं**
**किमस्त्यत्राम्ब त्वं प्रभवसि न यद्वै वितरितुम्।।९७।।**

**अन्वयः**—हे अम्ब, त्वं धनं धान्यं धवलितं सौधं भवनं स्निग्धां मधुरवचनां सुन्दरमुखीं प्रियां भार्यां विद्याविनयलसितं साधुचरितं वश्यं सुतम् अपि दत्से। (हे अम्ब,) अत्र किं वस्तु अस्ति यद् वितरितुं न प्रभवसि?

**अर्थः**—हे माँ तू, धन, धान्य, सुधाश्वेत भवन, प्रेममयी मधुरभाषणी सुन्दर गुण वाली प्रिया भार्या, विद्या-विनय से विभूषित सदाचारी एवं आज्ञाकारी पुत्र भी देती हो। हे माँ, इस जगत् में कौन-सी वस्तु है, जिसे तुम देने में समर्थ नहीं हो।।९७।।

**स्तुता विद्यार्थिभ्यो वितरसि च विद्या हि विविधाः**
**मुमुक्षुभ्यो मुक्तिं विषयसुखकामाय विषयान् ।**
**सुखेप्सुभ्यः सौख्यं विपुलमतुलं दुर्लभमपि**
**भविष्णुस्त्वां मातर्नहि भजति को वा स्थिरमतिः ।।९८।।**

**अनन्वयः**—हे मातः, स्तुता त्वं विद्यार्थिभ्यः विविधाः विद्याः, मुमुक्षुभ्यः मुक्तिम्, विषयसुखकामाय विषयान्, सुखेप्सुभ्यः अतुलं दुर्लभम् अपि विपुलं सौख्यं च वितरसि। (हे मातः) भविष्णुः को वा स्थिरमतिः त्वां न भजति?

**अर्थः**—हे माँ, स्तुति करने पर विद्याथियों को अनेक प्रकार की विद्यायें, मुक्ति चाहने वाले को मुक्ति एवं विषय-सुख चाहने वाले को अनुपम अपार दुर्लभ सुख भी देती हो। माँ, कौन-सा अभ्युदय चाहने वाला स्थिर बुद्धि है, जो आपका भजन नहीं करता है?।।९८।।

**स्तुतिर्वाचः शुद्धिं नतिरपि दिशत्याशु विनतिं**
**श्रुतिस्ते लीलाया हरति हृदयस्थं घनतमः ।**
**गतिः सद्यो मातस्तव च शरणं राति कुशलं**
**भवेयं ते लुब्धः पदकमलभृङ्गोऽतिचटुलः ।।९९।।**

**अन्वयः**—हे अम्ब, ते स्तुतिः वाचः शुद्धिः नतिः आशु विनतिम् अपि दिशति। ते लीलायाः श्रुतिः हृदयस्थं घनतमः हरति। तव शरणं गतिः सद्यः कुशलं राति। हे मातः, अहम् अतिचटुलः लुब्धः ते पदकमलभृङ्गः भवेयम्।

**अर्थः**—हे अम्ब, तेरी स्तुति वाणी की शुद्धि और प्रणति शीघ्र ही विनय प्रदान करती है। तेरी लीला-कथाओं का श्रवण हृदय के गहन अन्धकार का नाश करता है। अतः मैं तेरे चरणकमल पर भ्रमण करने वाला अतिलोभी भ्रमर हो जाऊँ।।९९।।

**भव्यं हर्म्यं भवति च सदा बन्धनं व्योमचुम्बि**
**सुभ्रूभङ्गप्रहितनयनापाङ्गबाणप्रहारः ।**
**देहे गेहे सुतहितधने चञ्चले चाभिमानः**
**सर्वं मोघं भवति च कृपावर्मणाच्छादिते ते ।।१००।।**

**अन्वयः**—व्योमचुम्बि भव्यं हर्म्यं च सदा बन्धनं भवति, सुभ्रू भङ्गप्रहितनयनापाङ्गबाणप्रहार: चञ्चले देहे गेहे सुतहितधने अभिमानश्च (एतत्) ते कृपावर्मणा आच्छादिते सर्वं मोघं भवति।

**अर्थः**—गगनचुम्बी सुन्दर भवन जो सदा बन्धन का हेतु होता है, सुन्दर स्त्रियों के नेत्रकोणों का कुटिल बाणप्रहार जो असह्य होता है तथा चञ्चल देह, भवन, पुत्र, मित्र और धन जो अभिमान के कारण होते हैं, वे सभी उन पर व्यर्थ हो जाते हैं, जिनके ऊपर आपकी कृपा का कवच पड़ा हुआ है।।१००।।

**ये चित्ते ते चरणसरसीजातमम्ब स्मरन्ति**
**येषां वाण्यां वसति च सदा नाम दुर्गेति रम्यम् ।**
**तेषां चित्तात्सरति च तमो भाति च ज्ञानरश्मिः**
**तस्मात्तैर्वै भवति विदितं वस्तुतो वस्तुरूपम् ।।१०१।।**

**अन्वयः**—हे अम्ब, ये चित्ते ते चरणसरसीजातं स्मरन्ति, येषां वाण्यां दुर्गा इति रम्यं नाम सदा वसति, तेषां चित्तात् तम: सरति, ज्ञानरश्मिः च भाति। तस्मात् तैः वै वस्तुत: वस्तुरूपं विदितं भवति।

**अर्थः**—हे अम्ब, जो सदा अपने मन में आपके चरणकमलों का स्मरण करते हैं और जिनकी वाणी में श्रीदुर्गा जी का पवित्र नाम सदा विद्यमान रहता है, उनके मन से अज्ञान अन्धकार दूर हो जाता है और ज्ञान की किरण फूट पड़ती है। इस कारण उन्हें सांसारिक वस्तुओं के वास्तविक स्वरूप ज्ञात होते हैं।।१०१।।

**कामिन्यास्ते स्मितमपि मुखं श्लेष्मराशिं विदन्ति**
**उत्तुङ्गं तद् घनकुचयुगं पूर्णकुम्भं विषस्य ।**
**हासे मन्देऽधरकिसलये तप्तनिस्त्रिंशधारा-**
**स्तस्मान्मेऽन्तः पदनखमणी राजतां ते सदैव ।।१०२।।**

**अन्वयः**—ते कामिन्या: स्मितं मुखम् अपि श्लेष्मराशिं विदन्ति। उत्तुङ्गं तद् घनकुचयुगं विषस्य पूर्णकुम्भं (विदन्ति) तथा मन्दे हासे अधरकिसलये च तप्तनिस्त्रिंशधारा: (विदन्ति) तस्मात् मे अन्तः ते पदनखमणि: सदैव राजताम्।

**अर्थः**—जिन्हें आपके चरणकमलों के दर्शन हुए हैं, वे कामिनियों के मुस्कराते हुए सुन्दर मुख को भी श्लेष्मा की ढ़ेर समझते हैं। उनके उत्तुङ्ग एवं सघन दोनों स्तनों को विषपूर्ण घट समझते हैं एवं उनके मन्द हास-परिहास तथा अधर पल्लव में उष्ण तलवार की धार दिखाई देती है। अत: हे माँ, मेरे अन्त:करण में आपके चरणकमलों की नखमणि सदा प्रकाशित होती रहे।।१०२।।

**पुरी श्रेष्ठा काशी तव च वदनं मुक्तिसदनं**
**त्रिशूले तिष्ठन्ती जयति च सदा खण्डपरशोः ।**
**तदीशस्त्वां भिक्षामटति च शिवो यत्र सततं**
**सदा तत्रावासो भवतु तव पादार्चनकृते ।।१०३।।**

**अन्वयः**—पुरी श्रेष्ठा काशी तव च वदनं मुक्तिसदनं सा खण्डपरशोः त्रिशूले तिष्ठन्ती सदा जयति। यत्र तदीशः शिवः त्वां सततं भिक्षाम् अटति, तत्र ते पादार्चनकृते सदा मम वासः भवतु।

**अर्थः**—सभी नगरियों में श्रेष्ठ काशी, जो आपका मुख और मुक्ति का भवन है, वह श्री शङ्कर जी के त्रिशूल पर सदा से विराजमान है एवं उसके स्वामी शिव जी जहाँ निरन्तर आपसे भिक्षा माँगते रहते हैं, वहाँ आपकी भिक्षा-प्राप्ति के लिए हमारा सदा निवास हो।।१०३।।

**सदा यस्याः पादावमरतटिनीलोललहरी-**
**कराग्रैः स्नाप्येतेऽविरलतरलैः स्निग्धसरलैः ।**
**वसद्भ्यो भक्तिं ते दिशति च विमुक्तिं मृतवते**
**वसेयं तत्राहं सह दयितया तेऽम्ब दयया ।।१०४।।**

**अन्वयः**—यस्याः पादौ अविरलतरलैः स्निग्धसरलैः अमरतटिनीलोल-लहरीकराग्रैः सदा स्नाप्येते। या वसद्भ्यः ते भक्तिं मृतवते विमुक्तिं च दिशति, हे अम्ब, तत्र अहं ते दयितया सह वसेयम्।

**अर्थः**—हे माँ, जिसके चरण निरन्तर चञ्चल, स्निग्ध एवं सरल देवनदी गङ्गा के चञ्चल तरङ्गरूपी कराग्रों से स्नान कराये जाते हैं, जो अपने क्षेत्र में निवास करने वालों को आपकी भक्ति और मरने वाले की मुक्ति प्रदान करती है, वहाँ आपकी कृपा से मैं अपनी पत्नी के साथ निवास करूँ।।१०४।।

**विजानीते लोकस्तव च शरणं मामुपगतं**
**जगद्गर्तावर्तात्पतितमपि नोद्धरसि चेत्**
**यशो व्याप्तं दिक्षु प्रणतजनसन्तापहरणं**
**न नश्येच्छङ्केयं मम जननि चेतो व्यथयति ।।१०५।।**

**अन्वयः**—हे जननि लोकः तव च शरणं माम् उपगतं विजानीते। चेद् जगद्गर्तावर्तात् पतितम् अपि मां न उद्धरसि, तर्हि ते दिक्षु व्याप्तं प्रणतजनसन्तापहरणं यशः न नश्येत्, इयं शङ्का मे चेतः व्यथयति।

**अर्थः**—हे माँ, यह संसार अच्छी प्रकार जानता है कि मैं आपके शरण में पहुँचा हुआ हूँ। ऐसी स्थिति में जब इस संसाररूप गढ़े के भवर में मैं फँसा हुआ हूँ और शरणापन्न भी हूँ, तब भी यदि आप मेरा उद्धार नही करती हैं, तो समस्त दिशाओं में शरणागत जनों के सन्तापों को नष्ट करने का जो आपका यश व्याप्त है, वह नष्ट न हो जाय, यह शङ्का मेरे हृदय को बहुत ही व्यथित कर रही है।।१०५।।

**मातर्मे स्वजनाः प्रियाः परिजनाः प्रेम्ण च ये पालिताः**
**सान्द्रस्नेहिजना वयसि मे तुर्येऽपि गर्वोद्धताः ।**
**द्रुह्यन्तीति मनस्तथापि च पुनस्तेष्वेव चासज्जते**
**आसक्तिं सुदुस्त्यजां जननि मे को वा हरेत्त्वां विना ।।१०६।।**

**अन्वयः**—हे मातः, प्रेम्णा पालिता ये स्वजनाः प्रियाः परिजनाः सान्द्र-स्नेहिजनाः च ते गर्वोद्धताः तुर्ये अपि वयसि मे द्रुह्यन्ति, तथापि मे मनः तेषु एव आसज्जते। हे जननि, तां सुदुस्त्यजां मे आसक्तिं त्वां विना कः हरेत्?

**अर्थः**—हे माँ, मैंने प्रेम से जिन स्वजनों एवं प्रियजनों का पालन-पोषण किया था, वे तथा अन्य घनिष्ठ प्रेमीजन गर्व से उद्धत होकर इस वृद्धावस्था में भी मुझसे द्रोह कर रहे हैं, तथापि मेरा मन उन्हीं में आसक्त हो रहा है, जिसका त्याग करना अत्यन्त कठिन है, मेरी उस आसक्ति को आपके विना दूसरा कौन हर सकता है?।।१०६।।

**आयुर्याति यथायथं द्रुततरं वायुर्ह्यदृष्टो यथा**
**आगच्छन्ति च दण्डबन्धनकरा याम्याश्च चण्डाश्चराः ।**
**कामा माऽऽकुलयन्त्यसाधनजनं किं वा विधेयं मया**
**नो जाने क्रियतां यथेच्छसि तथा दासोऽस्म्यहं तावकः ।।१०७।।**

**अन्वयः**—हे अम्ब, अदृष्टः वायुर्हि यथा आयुः यथायथं द्रुततरं याति दण्डबन्धनकरा याम्याः चण्डाः चराः आगच्छन्ति च तथा कामा असाधनजनं मां आकुलयन्ति। मया किं वा विधेयम् इति न जाने। त्वं यथा इच्छसि तथा क्रियताम्। अहं तावकः दासः अस्मि।

**अर्थः**—हे अम्ब, जैसे वायु चली जाती है और दिखाई नहीं देती, उसी प्रकार अदृष्ट होकर आयु भी जैसे-जैसे द्रुत गति से व्यतीत हो रही है और यमराज के चण्ड भयङ्कर दूत दण्ड और बन्धन हाथ में लेकर समीप आ रहे हैं, वैसे ही भौतिक इच्छाएँ मुझ साधनहीन जन को व्याकुल कर रही हैं। इस दयनीय स्थिति में मुझे अपने कर्तव्य का ज्ञान नहीं हो रहा है। आप जैसा चाहें, वैसा करें, मैं आपका अकिञ्चन दास हूँ।।१०७।।

**नीचग्राम्यकथाप्रवृत्तिविवशा वाणी मदीयाऽम्बिके**
**दिव्यं ते चरितामृतं रसयितुं किञ्चिन्न चाकाङ्क्षते ।**
**तद्वृत्तिं च विनाश्य तामशुभदां मे श्रेयसे प्रेयसे**
**स्वस्या नामगुणाकृतिप्रवचने रक्तां सदा तां कुरु ।।१०८।।**

**अन्वयः**—हे अम्बिके, नीचग्राम्यकथाप्रवृत्तिविवशा मदीया वाणी ते दिव्यं चरितामृतं रसयितुं किञ्चित् च न आकाङ्क्षते। ताम् अशुभदां तद्वृत्तिं विनाश्य मे प्रेयसे श्रेयसे च तां स्वस्या नामगुणाकृतिप्रवचने सदा रक्तां कुरु।

**अर्थः**—हे माँ, नीचों की ग्राम्य कथा कहने की प्रवृत्ति की वशवर्तिनी मेरी वाणी तेरे दिव्य चरितामृत का तनिक भी रसास्वादन करना नहीं चाहती। उसकी उस अमङ्गलप्रद प्रवृत्ति को नष्ट कर मेरे प्रेय एवं श्रेय के लिए सदा कल्याणकारक अपने दिव्य नाम, रूप एवं गुण का कीर्तन करने में उसे सदा अनुरक्त करो।।१०८।।

**नेत्रे मे तव भव्यविग्रहरुचेः सन्दर्शने स्तां रते**
**घ्राणौ ते चरणारविन्दसुलभं सत्सौरभं जिघ्रताम् ।**
**श्रोत्रे मे शृणुतां सदैव ललितां लीलाकथां शान्तिदां**
**हस्तौ स्तां तव पूजने स्तुतिकथालेखे च रक्तौ सदा ।।१०९।।**

**अन्वयः**—हे अम्ब, मे नेत्रे तव भव्यविग्रहरुचेः छटासन्दर्शने रते स्ताम्। घ्राणौ ते चरणारविन्दसुलभं सत्सौरभं जिघ्रताम्। मे श्रोत्रे सदैव शान्तिदां ते लीलाकथां शृणुताम्, तथा च हस्तौ स्तुतिकथालेखे च सदा रक्तौ आस्ताम्।

**अर्थः**—हे अम्ब, मेरी आँखें तुम्हारे भव्य विग्रह की शोभा के अवलोकन में तत्पर रहें। मेरे नाक आपके चरणारविन्द-सुलभ सुगन्ध का आघ्राण करें। मेरे कान सदा शान्ति देने वाली लीला-कथा का ध्यान करें तथा ये हाथ तुम्हारे पूजन एवं स्तुति, गुण कथन तथा लेखन में अनुरक्त रहें।।१०९।।

**यावन्तो हि ममायुषः क्षणलवाः शिष्यन्त एवाधुना**
**मातस्त्वच्चरणाम्बुजामृतरसास्वादोत्सुकस्तावतः ।**
**हित्वा चञ्चलतां मनोमधुकरस्त्वां सेवतां सर्वदा**
**आगच्छत्यपि मृत्युकिङ्करगणे मा ते स्मृतिः क्षीयताम् ।।११०।।**

**अन्वयः**—हे मातः, मे आयुषः यावन्तः क्षणलवाः अधुना शिष्यन्ते, तावतः मे मनोमधुकरः चञ्चलतां हित्वा ते त्वच्चरणाम्बुजामृतरसास्वादोत्सुकः सर्वदा त्वां सेवताम् । मृत्युकिङ्करगणे आगच्छति अपि ते स्मृतिः मा क्षीयताम्।

**अर्थः**—हे माँ, मेरी आयु के क्षणों के जितने भी अंश अभी शेष हैं, उनमें मेरा मनरूपी भ्रमर अपनी चञ्चलता छोड़कर निरन्तर तुम्हारे चरणारविन्द के अमृतमय रस का आस्वाद न करने में उत्सुक होकर सदा तुम्हारी सेवा करे तथा यमराज के दूतों के आने पर भी आपकी स्मृति क्षीण न हो।।११०।।

**अन्ते ते मधुरं च दुर्गतिहरं दुर्गेति नामाक्षरं**
**भूयः संसृतिनाशनं शिवमयं संव्याहरन्तोऽनिशम्।**
**रूपे तेऽतिमनोहरे प्रियमनः संयोजयन्तः प्रियाः**
**प्राणा यान्तु च सन्निधिं जननि ते सेवारसं भुञ्जताम्।।१११।।**

**अन्वयः**—हे जननि, अन्ते मधुरं दुर्गतिहरं च भूयः संसृतिनाशनं शिवमयं दुर्गेति नामाक्षरम् अनिशं संव्याहरन्तः ते अतिमनोहरे रूपे प्रियमनः संयोजयन्तः मे प्रियाः प्राणाः ते सन्निधिं यान्तु सेवारसं च भुञ्जताम्।

**अर्थः**—हे माँ, जीवन के अन्तिम क्षण में अत्यन्त मधुर, दुर्गतिनाशक तथा पुनर्जन्म का नाश करने वाले सर्वदा मङ्गलमय तुम्हारे पवित्र दुर्गा नाम का उच्चारण करते हुए तथा तेरे अतिसुन्दर रूप में प्रिय मन को संयुक्त करते हुए ये मेरे प्राण तुम्हारे सान्निध्य को प्राप्त करें और आपकी सेवा के आनन्द का उपभोग करें।।१११।।

**प्रमादादालस्याद्विषयविषमोहाकुलधियः**
**उताभावात्काव्यप्रणयनकलाया जननि ते।**
**यशः शुभ्रं गीतं प्रथमवयसीशे नहि मया-**
**पराधः क्षम्योऽयं तव च शरणं मे गतवतः।।११२।।**

**अन्वयः**—हे ईशे जननि, प्रमादात् आलस्यात् विषयविषमोहाकुलधियः उत काव्यप्रणयनकलाया अभावात् प्रथमे वयसि मया ते शुभ्रं यशः न गीतम्, तव च शरणं गतवतः मे अयम् अपराधः त्वया क्षम्यः।

**अर्थः**—हे शासन करने वाली माँ, प्रमाद से, आलस्य से, विषय-विष के मोह से बुद्धि के व्याकुल होने के कारण अथवा काव्य-रचना की कला के अभाव से अपने जीवन के प्रथम अंश में आपके शुभ्र यश का गान मैंने नहीं किया है। माँ! मेरे इस अपराध को क्षमा करने की अनुकम्पा करना; क्योंकि मैं आपकी शरण में पहुँच चुका हूँ।।११२।।

**मनसि संस्थितयैव शिवे त्वया रचयिता स्तुतिपद्यसुमालिका।**
**सविनयं चरणेषु समर्प्यते मुदितया कृपया परिगृह्यताम्।।११३।।**

**अन्वयः**—हे शिवे, मनसि संस्थितया त्वया एव स्तुतिपद्यसुमालिका रचयिता, सा ते चरणेषु सविनयं समर्प्यते, मुदितया कृपया परिगृह्यताम्।

**अर्थः**—हे शिवे, मेरे मन में स्थित होकर आपने ही इन स्तुति-श्लोकों की सुन्दर माला की रचना करायी है। यह आपके चरणों में विनयपूर्वक समर्पित की जा रही है। कृपया आप इसे प्रसन्नतापूर्वक ग्रहण करें।।११३।।

**प्रीत्यै च ते पठतु यः स्तुतिपद्यमाला-**
**मेनां समर्पयतु चेच्चरणारविन्दे ।**
**तस्मै प्रसीद जगदम्ब दयासुधाब्धे**
**दातुं सदैव च वरान् मनसोऽनुकूलान् ।।११४।।**

**अन्वयः**—हे दयासुधाब्धे जगदम्ब, ते प्रीत्यै यः एनां स्तुतिपद्यमालां पठतु ते चरणारविन्दे चेत् समर्पयतु, तस्मै मनसोऽनुकूलान् वरान् सदैव दातुं प्रसीद।

**अर्थः**—हे दयासागर जगदम्ब, तुम्हारी प्रसन्नता के लिए जो इस स्तुति-श्लोक-माला का पाठ करे और इसे आपके चरणारविन्द में अर्पित करे, उसे मनोऽनुकूल (वरदान) वर देने के लिए सदा प्रसन्न रहें।।११४।।

**।। इति कुशीनगरजनपदस्थ-नदवाविशुनपुरग्रामवास्तव्येन पण्डितश्रीऋषिराज-पाण्डेयतनयेन श्रीविद्याधरदत्तपाण्डेयेन पराम्बानुकम्पाप्रसादाद् विरचितं पराम्बास्तुतिशतकं सम्पूर्णम् ।।**



लघु-ग्रन्थमाला

[ ६१ ]

आचार्यश्रीरघुदेवभट्टाचार्यविरचितः

# आकाङ्क्षावादः

सम्पादकः

**डॉ. हरेरामत्रिपाठी**

उपाचार्यः, न्यायविभागे

श्रीलालबहादुरशास्त्रिराष्ट्रियसंस्कृतविद्यापीठस्य

नवदेहली




**सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयः**

**वि.सं. २०५८**

# भूमिका

प्रमाणं विना न पदार्थस्य ज्ञानं भवितुमर्हति। पदार्थज्ञानं विना न प्रवृत्तिसामर्थ्यम्। प्रमाणेन खलु अयं ज्ञातार्थमुपलभ्य तमर्थमभीप्सति हातुमिच्छति वा। अतः सर्वप्रथमं प्रमाणस्य किं लक्षणमिति जिज्ञासा भवति। उच्यते प्रमीयते अनेन इति प्रमाणम्। यद्वा, प्रमायाः करणं प्रमाणम्। यथार्थानुभवः प्रमा, तस्याः साधकतमं वातिशयितं करणं वा प्रमाणम्।

चार्वाकमते प्रत्यक्षमेकं प्रमाणम्। वैशेषिकमते प्रत्यक्षानुमाने द्वे प्रमाणे विद्येते। शाक्यमतेऽपि प्रत्यक्षपरोक्षभेदेन प्रमाणं द्विविधम्। अत एवोक्तम्—

**ते हि प्रमेयद्वैविध्यात् प्रमाणं द्विविधं जगुः।**
**नान्यः प्रमाणभेदस्य हेतुर्विषयभेदतः[१] ।।**

सांख्यमते प्रत्यक्षानुमानशब्दाः प्रमाणानि सन्तीति। तत्रार्थापत्त्या सह प्रत्यक्षादीनि पञ्च प्रमाणानीति **प्राभाकराः**। अभावेन सह षडिति **भाट्टाः**। प्रत्यक्षानुमानोपमानशब्दार्थापत्त्यभावसम्भवैतिह्या अष्टौ प्रमाणानीति केचिद् वदन्ति। तत्र न्यायनये प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि। अर्थापत्तिप्रमाणस्य अनुमानेऽन्तर्भावः सम्भवैतिह्ययोः प्रमाणयोश्च शब्देऽन्तर्भावः। अभावप्रमाणस्य प्रत्यक्षे चान्तर्भावः कर्तुं शक्यत इति **नैयायिका** वदन्ति। तत्र "आप्तोपदेशः[२] शब्दः"। अस्यार्थो वात्स्यायनभाष्यकारेणोच्यते—"आप्तः[३] खलु साक्षात्कृतधर्मा यथादृष्टस्यार्थस्य चिख्यापयिषया प्रयुक्त उपदेष्टा। साक्षात्करणमर्थस्याप्तिः, तया प्रवर्तत इति आप्तः"। दृष्टार्थादृष्टार्थावित्याप्तो द्विविधः। सूत्रकृतशब्दस्य लक्षणे शब्दः लक्ष्यः आप्तोपदेशः लक्षणम्। वाचस्पतिमिश्रेणोच्यते—सुदृढेन[४] प्रमाणेनावधारिताः साक्षात्कृता धर्माः पदार्था हिताहितप्राप्तिपरिहारार्था येन स आप्त

---

१. न्यायमञ्जरी, प्रमाणप्रकरणम्, पृ. ४३। (सं.सं.वि.वि. वाराणसी, संवत् २०३९)

२. न्यायसूत्रम्, वात्स्यायनभाष्यसहितम्, अ. १आ. १ सू. ८।
(चौखम्बा संस्कृत सीरिज, वाराणसी, १९७०)

३. तदेव, पृ. ४०।

४. न्यायवार्तिकतात्पर्यटीका, पृ. २०२।

इति। उपदिश्यते अनेनेति उपदेश: = वाक्यज्ञानं तदर्थज्ञानं वाभिधीयते। यद्वा उपदिश्यते अभिधानक्रिया क्रियते। श्रोत्रग्राह्यवस्तुकरणिका तदर्थ-प्रतीतिरभिधानक्रिया। श्रोत्रग्राह्यस्य वर्णराशेरेवार्थप्रतीतिकरणत्वान्न तु श्रोत्रप्रत्ययाविषयविशेष: स्फोटात्मा शब्द:। श्रोत्रेन्द्रियेण शब्दस्य ग्रहणं भवति।

अत्र जिज्ञासा भवति शब्द: गुणो वा द्रव्यमिति? वैशेषिकसूत्रकारेणोच्यते, किमपि द्रव्यमेकसमवायिकारणकं न भवति; परन्तु शब्दस्यैकमाकाशं द्रव्यमेव[1] समवायिकारणमतो न द्रव्यं शब्द:। न च कर्मपदार्थे एकमेव द्रव्यं समवायिकारणं भवति, अत एव शब्द: कर्म विद्यत इति वाच्यम्। शब्दत्वं न कर्मवृत्ति: चाक्षुषप्रत्यक्षा-[2]वृत्तिजातित्वाद् रसत्वादिवत्। इत्यनुमानेन शब्दस्य कर्मपदार्थेऽन्तर्भावो न कर्तुं शक्यते। शब्द: गुण: आकाशमात्रवृत्तित्वाद् इत्यनुमानेन शब्दस्य गुणत्वं निष्पन्नमिति।

सूत्रकारेण शब्दस्य लक्षणमुच्यते—"श्रोत्रग्रहणो योऽर्थ: स शब्द:"[3]। अस्यार्थ:—श्रोत्रं ग्रहणं ग्रहकरणं यस्य स श्रोत्रग्रहण:, अर्थ इति धर्मी इति वैशेषिकसूत्रोपस्कार:। तथा च श्रोत्रेन्द्रियेण यस्य वस्तुनो ग्रहणं भवति, अथवा श्रोत्रेन्द्रियं करणं यस्मिन् धर्मिणि भवति, स शब्द:। शब्दस्य नित्यपदार्थेन, सह वैधर्म्य[4]मुपलभ्यते, अत: शब्दो न कण्ठताल्वाद्यभिघाताद् व्यङ्ग्य:, भेरीदण्डसंयोगादिभ्यो वा। कण्ठताल्वाद्यभिघाताच्छब्द: प्रादुर्भवति। तथा चोत्पत्तिमत्त्वादनित्योऽयं शब्द:। यद्वा कारणवत्त्वादनित्य:। कारणतो विकारादनुमीयते जन्योऽयं न तु अभिव्यङ्ग्य:। भेरीदण्डसंयोगाद् वा वंशे पाट्यमाने विभागात् शब्दाच्चापि शब्दस्योत्पत्तिर्भवति।[5] यतो हि भेरीदण्डसंयोगाज्जायमानं शब्दं प्रति भेरीदण्डसंयोगोऽसमवायिकारणं भेर्याकाशसमवायिकारणञ्च भवति। एवं वंशे पाट्यमाने वंशदलद्वयविभागो निमित्तकारणं दलाकाशविभागश्चा-समवायिकारणं दलाकाशं समवायिकारणञ्च भवति। यत्र च दूरे वीणादुत्पन्न: शब्दस्तत्र सन्तानक्रमेणोत्पद्यमान: शब्द: कर्णशष्कुल्यवच्छिन्नमाकाशदेशमासादयन् गृह्यते, तेन शब्दादपि शब्दस्योत्पत्तिर्भवति।

अत्र केचिद् वदन्ति—यथा पञ्चकृत्वो रूपं पश्यतीति स्थिरस्य रूपस्याभावो दृष्ट:, तथा दशकृत्वोऽधीतोऽनुवाको विंशतिकृत्वोऽधीत इत्यभ्यास: स्थैर्ये[6]

---

१. एकद्रव्यत्वान्न द्रव्यम्। (वैशेषिकसूत्रोपस्कार:, पृ. १८३)
२. नापि कर्माऽचाक्षुषत्वात्। (तदेव, पृ. १८३)।
३. वैशेषिकसूत्रोपस्कार:, पृ. १७९।
४. नित्यवैधर्म्यात्। (अ. २ आ. २ सूत्र २७, पृ. १८५)
५. संयोगाद्विभागाच्च शब्दाच्च शब्दनिष्पत्ति:। (अ. २ आ. २ सू. ३१, पृ. १८८)
६. द्वयोस्तु प्रवृत्त्योरभावात्। (अ. २ आ. २ सू. ३३)

शब्दस्य प्रमाणम्। सिद्धे च स्थैर्ये नाशकानुपलब्धेः। तथा च शब्दो नित्यः, नाशकसामग्र्यभावत्वे सति स्थैर्य्यत्वात्। एवं ''त्रिप्रथमामन्वाह त्रिरुत्तमाम्'' इति प्रथमोत्तमयोः[1] सामिधेन्योः त्रिरुच्चारणं स्थैर्य्यं विनाऽनुपपन्नम्। तथा च शब्दो नित्यः प्रत्यभिज्ञासद्भावात्। इत्याद्यनुमानेन शब्दस्य नित्यत्वं सिद्धमिति चेत्, न, उक्तहेतवः सन्दिग्धानैकान्तिकाः[2] सन्ति। अत एव शब्दे नित्यत्वं साधयितुमसमर्थाः सन्ति। तथा च शब्दः अनित्यः, आशुतरविनाशित्वात्।

न्यायसूत्रकारेण शब्दप्रमाणस्य यल्लक्षणमुक्तं तद्वर्णितम्। वाक्यज[3]-प्रमासाधकतमः शब्द इति लक्षणमालायामुदयनाचार्येणोक्तम्। प्रयोगहेतु[4]भूतार्थतत्त्व-ज्ञानजन्यः शब्दः प्रमाणमिति गङ्गेशोपाध्यायः। अस्यार्थः—प्रयोगहेतुभूतं = प्रयोगकारणीभूतं यदर्थतत्त्वज्ञानं यद् अर्थविषयकतत्त्वज्ञानं तज्जन्यः प्रमाणं शब्द इत्यन्वयः। प्रथमतो येन केनापि प्रमाणेन वक्तुर्वाक्यार्थज्ञानं ततो वाक्यार्थज्ञानज्ञानं तदनन्तरं परस्य वाक्यार्थज्ञानं भवत्विति वाक्यार्थज्ञानेच्छा, ततो वाक्यार्थज्ञानरूपेष्टसाधनताज्ञानाद् वाक्ये इच्छा, तदनन्तरं वाक्यरूपेष्टसाधनता-ज्ञानात् कृतिसाध्यताज्ञानसहकृतात् कण्ठाभिघातादौ चिकीर्षा, ततः कण्ठाभिघातादिसाधिका कण्ठाद्युपादानकप्रवृत्तिः, ततः कण्ठादिचेष्टाविभागादिक्रमेण कण्ठाभिघाताद्युत्पत्तिः, ततो वाक्योत्पत्तिरिति प्रणाल्या प्राचां नये परम्परया वक्तृवाक्यार्थबुबोधयिषापूर्वकवाक्यत्वावच्छिन्नं प्रति वक्तृवाक्यार्थज्ञानस्य हेतुतया च सर्वत्र लक्षणं सङ्गमनीयमिति। यद्वा, प्रयोगो हेतुभूतो यस्येति व्युत्पत्त्या प्रयोगाद्धेतोः भूतमुत्पन्नमिति व्युत्पत्त्या वा प्रयोगहेतुभूतपदं शाब्दत्वरूपजाति-विशेषविशिष्टपरं, तादृशं यदर्थतत्त्वज्ञानं तदेव जन्यं यस्येति रीत्या शाब्दप्रमाकरणत्वं लक्षणमिति, अर्थपदञ्च स्वरूपकथनम्।

यद्वा, प्रयोगहेतुभूतमर्थतत्त्वज्ञानमस्येति प्रयोगहेतुभूतार्थतत्त्वज्ञानमाप्तः, तज्जन्यः शब्दः प्रमाणम्। यद्वा, अर्थविषयकं यत्तत्त्वज्ञानं तज्जन्यः शब्द इति। अर्थतत्त्वज्ञानादाप्तो भवकरणापाटवादन्यादृशो भवतीति तद्वारणाय प्रयोगहेतु-भूतेति। प्रयुज्यते अनेनेति प्रयोगः, समीचीनः प्रयत्नः, तं प्रति अर्थचिख्यापयिषा-द्वारा हेतुभूतं यत्तत्त्वज्ञानं तज्जन्य इति भ्रमप्रमादविप्रलिप्सादिव्युदासः। यद्वा, प्रयोगो वाक्यप्रयोगो हेतुभूतो लिङ्गतया ज्ञापको यस्यार्थतत्त्वज्ञानस्य तज्जन्य इत्यर्थः। यद्वा,

---

१. प्रथमा शब्दात्। (अ. २ आ. २ सू. ३४)

२. सन्दिग्धाः सति बहुत्वे। (अ. २ आ. २ सू. ३६)

३. लक्षणमाला।

४. तत्त्वचिन्तामणिः, शब्दखण्डः, भागः-१, चौखम्बा-संस्करणम्।

प्रयोगहेतुभूतो जनको यस्यार्थतत्त्वज्ञानस्य श्रोतृनिष्ठस्य तत्समानविषयको ज्ञानजन्यः शब्द इति। यद्वा, अर्थ इति वाक्यादर्थ्यमानोऽर्थः संसर्गस्तद्विषयकं यत्तत्त्वज्ञानं तज्जन्यः शब्दः प्रमाणम्। न च शब्दप्रमाणस्य प्रत्यक्षे वानुमानेऽन्तर्भावान्न पृथक् प्रमाणान्तरमिति वाच्यम्, आकाङ्क्षादिमत् पदप्रयोज्यतत्तदर्थसंसर्गावगाही यो बोधः, स नियन्त्रितार्थकत्वात्, तादृशपदोपस्थाप्यस्यैवार्थस्यावगाहित्वान्न प्रत्यक्षो नानुमितिरिति। यथोक्तं जगदीशेन—

**साकाङ्क्षशब्दैर्यो बोधस्तदर्थान्वयगोचरः।**
**सोऽयं नियन्त्रितार्थत्वान्न प्रत्यक्षं न चानुमा**[१] ।। इति ।

अस्यार्थः—प्रत्यक्षप्रमायामनुमितिप्रमायाञ्च वा शाब्दप्रमायाः अनन्तर्भावात् प्रत्यक्षानुमानभिन्नं शब्दाख्यं तृतीयं प्रमाणं विद्यते। यतो हि आकाङ्क्षासत्ति-योग्यताविशिष्टपदप्रयोज्यो यस्तत्तदर्थसंसर्गावगाही बोधोऽनुभवो जायते, स चायं बोधस्तादृशपदोपस्थाप्यस्य एवार्थस्यावगाहित्वान्न प्रत्यक्षानुमित्योरन्तर्भवितुमर्हति। शब्दप्रमाणस्य फलं शाब्दबोधप्रमा विद्यते। शब्दप्रमाणेन कथं शाब्दबोधो जायत इति जिज्ञासायां मुक्तावलीकारेणोच्यते—

**पदज्ञानं तु करणं द्वारं तत्र पदार्थधीः।**
**शाब्दबोधः फलं तत्र शक्तिधीः सहकारिणी**[२] ।।

शाब्दबोधे पदविषयकं ज्ञानं करणं, पदज्ञानजन्यं यत् पदार्थस्य ज्ञानं व्यापारो भवति। शब्दसमूहात्मकवाक्यजन्यो यो वाक्यार्थबोधः, सः फलं वा प्रमा उच्यते। पदजन्यपदार्थस्मरणात्मकव्यापारे 'एतत्पदजन्यबोधविषयतावानर्थो भवतु' 'अर्थविषयकबोधजनकतावत् पदं भवतु' एतादृशी शक्तिधीः सहकारिकारणं भवति। शाब्दबोधे आसत्तियोग्यताकाङ्क्षातात्पर्यज्ञानञ्च कारणं भवति। ययोः पदयोः परस्परमन्वयबोधजनकत्वे तात्पर्यं तयोः पदयोरव्यवधानमासत्तिः। अव्यवधानेनान्वयप्रतियोग्युपस्थितिः। अस्यार्थः—अन्वयप्रतियोगिनोः पदार्थयोर-व्यवधानेनोपस्थितिरासत्तिः। यद्वा, स्वाव्यवहितत्वसम्बन्धेन तत्तत्पदार्थोपस्थितिमती तत्तत्पदार्थोपस्थितिस्तत्पदार्थे तत्पदार्थस्यासत्तिः।

'पदार्थे तत्र तद्वत्ता योग्यता परिकीर्तिता'[३] इति कारिकावलीकारः। अर्थाद् एकपदार्थेऽपरपदार्थसम्बन्धो योग्यता इति। तत्त्वचिन्तामणिकारेण योग्यतायाः

१. शब्दशक्तिप्रकाशिका, का. सं. ३।
२. न्यायसिद्धान्तमुक्तावली, पृ. २९१।
३. तदेव।

पूर्वपक्षीयलक्षणानां[१] निरूपणमित्थं विहितम्—समभिव्याहृतपदार्थसंसर्गव्याप्यधर्मत्वम्, समभिव्याहृतपदार्थसंसर्गाभावव्याप्यधर्मशून्यत्वम्, प्रकृतसंसर्गबाधकस्याभावः, इतरपदार्थसंसर्गाभावप्रमाविषयत्वाभावोऽपरपदार्थे, बोधनीयसंसर्गाभावप्रमाविरह इति। चिन्तामणिकृतयोग्यतायाः सिद्धान्तलक्षणन्तु बाधकप्रमाविरहो योग्यता, सा चेतरपदार्थसंसर्गेऽपरपदार्थनिष्ठात्यन्ताभावप्रतियोगित्वप्रमाविशेष्यत्वाभावः, अर्थात् तदीयान्वयितावच्छेदकसम्बन्धेन तन्निष्ठात्यन्ताभावप्रतियोगित्वप्रकारकप्रमाविशेष्यत्वसामान्याभावस्तत्र तद्योग्यता इति। यद्वा, इतरपदार्थसंसर्गेऽपरपदार्थनिष्ठात्यन्ताभावप्रतियोगितावच्छेदकधर्मशून्यत्वं योग्यता इति।

वक्तुरिच्छा तु तात्पर्यमिति[२] न्यायसिद्धान्तमुक्तावलीकारः। अस्यार्थः—एतत्पदादेतदर्थो भवत्विति प्रयोक्तृसमवेता इच्छा तात्पर्यम्। "वस्तुतस्तु[३] इतरपदस्य इतरपदार्थसंसर्गज्ञानपरत्वं तात्पर्यम्। तच्च वेदे न्यायादवधार्यते लोके न्यायात् प्रकरणादेर्वा" इति चिन्तामणिकारः। तात्पर्याधीनं शब्दप्रामाण्यमित्यनेन तात्पर्यस्य महत्त्वं गङ्गेशोपाध्यायेन तत्त्वचिन्तामणौ प्रदर्शितम्।

शाब्दबोधे आकाङ्क्षायाः कारणत्वं नैयायिकाः स्वीकुर्वन्ति। शब्दशक्तिप्रकाशिकायाः मङ्गलाचरणे जगदीशेनोच्यते—

**अनुभवहेतुः सकले सद्यः समुपासिता मनुजे।**
**साकाङ्क्षाऽऽसन्ना च स्वार्थे योग्या सरस्वती देवी।।**

अन्यच्च—

**साकाङ्क्षशब्दैर्यो बोधस्तदर्थान्वयगोचरः।**
**सोऽयं नियन्त्रितार्थत्वान्न प्रत्यक्षं न चानुमा।।**
**रूढ्यर्थेऽन्यत्र वा यत्र यदाऽऽकाङ्क्षादिनिश्चयः।**
**तदैव तत्र योगार्थस्यान्वयो मणिकृन्मतः[४]।।**

अर्थात् समुदायशक्त्युपस्थापिते पदान्तरवृत्त्युपस्थापिते वा यत्र धर्मिणि अवान्तरवृत्तिलभ्यार्थस्य यदाकाङ्क्षादिनिश्चयः, तदैव तत्र तस्यान्वयबोध उत्पद्यते सम्भूतसामग्रीकत्वात्।

---

१. तत्त्वचिन्तामणिः, माथुरीसहितः, प्रथमपरिच्छेदः।
२. न्यायसिद्धान्तमुक्तावली, पृ. ३५१।
३. तत्त्वचिन्तामणौ शब्दाप्रामाण्यवादः, पृ. १७९।
४. शब्दशक्तिप्रकाशिका, का. सं. २८।

अन्यच्च—

**मिथः साकाङ्क्षशब्दस्य व्यूहो वाक्यं चतुर्विधम् ।**
**सुप्तिङन्तचयो नैवमतिव्याप्त्यादिदोषतः[१] ।।**

अर्थात् परस्पराकाङ्क्षाविशिष्टशब्दसमुदायो वाक्यम्। तच्चतुर्विधम्। प्रत्येकसमुदायाभ्यामतिव्याप्त्यादिदोषात् सुबन्ततिङन्तचयो वाक्यं न भवितुमर्हति। उपरोक्तवाक्यानामालोचनया प्रतिभाति यत् शाब्दबोधे आकाङ्क्षायाः कारणत्वं निर्विवादमिति। न्यायनये आकाङ्क्षाया अनेकानि लक्षणानि सन्ति। ''पदस्य पदान्तरव्यतिरेकप्रयुक्तान्वयाऽननुभावकत्वमाकाङ्क्षा'' इत्यन्नम्भट्टः। ''आकाङ्क्षा तावत् श्रोतरि तदुत्पाद्य संसर्गावगमप्रागभावः'' इत्युदयनाचार्याः। यत्पदं विना यस्य पदस्य नान्वयबोधजनकत्वं तयोः पदयोः पूर्वापरीभाव आकाङ्क्षा। ''एते पदार्था मिथः संसर्गवन्तः, आकाङ्क्षादिमद्भिः स्मारितत्वात्, गामभ्याजेति पदार्थसार्थवत्''। ''संसर्गावगमप्रागभावमात्रमाकाङ्क्षा। यद्वा, ''स्मारिततदाक्षिप्ताविनाभाव-विशिष्टमाकाङ्क्षा'' इति **शङ्करमिश्राः।**

**योग्यतार्थगताकाङ्क्षा शब्दनिष्ठानुभाविका ।**
**प्रत्येकं वा मिलित्वा वा नैते लिङ्गमसिद्धितः[२] ।।**

अस्यार्थः—अर्थगता बाधाभावरूपायोग्यता तथा शब्दनिष्ठान्वय-बोधानुकूलानुपूर्वीरूपाकाङ्क्षा च शाब्दबोधजनिका भवति; किन्तु प्रत्येकमेकैकशो मिलित्वा सम्भूय वैते योग्यताकाङ्क्षा स्वयमसिद्धत्वाद्धेतोर्न लिङ्गं भवितुमर्हति। अत्र जगदीशेन[३] ''शब्दनिष्ठान्वयबोधानुकूलानुपूर्वीरूपाकाङ्क्षा'' इत्याकाङ्क्षायाः स्वरूपं निरूपितम्। ''तत्तदानुपूर्वीपर्यवसिताकाङ्क्षा'' इति **रामरुद्रभट्टाचार्यः।** एकपदस्मारितधर्मिकापरपदस्मारितसंसर्गबोधेच्छारूपाकाङ्क्षा इति **कृष्णकान्त-भट्टाचार्यः।** यत्पदा[४]भावप्रयुक्तं, यत्पदस्यान्वयबोधाजनकत्वं तत्पदसमभि-व्याहृततत्पदत्वमाकाङ्क्षा इति **विश्वनाथः।** अन्ये तु एकपदार्थज्ञाने तदर्थान्वय-योग्याऽपरपदार्थस्य यज्ज्ञानं तद्विषयिणीच्छा आकाङ्क्षा इति वदन्ति। न चाविना-भावः आकाङ्क्षा, अर्थात् तत्पदार्थेन विना यो भावः सत्त्वं तदभावः। यद्वा, तत्पदार्थे तत्पदार्थाभाववद्वृत्तित्वाभावस्तत्पदार्थे तत्पदार्थाकाङ्क्षा इति वाच्यम्।

---

१. शब्दशक्तिप्रकाशिका (श्लो. १३, पृ. ६३) का.सं. २८।

२. तदेव (श्लो. ४, पृ. ११) का.सं. २८।

३. तदेव, पृ. ११।

४. न्यायसिद्धान्तमुक्तावली, पृ. ३४८ (यत्पदेन विना यस्याननुभावकता भवेद् आकाङ्क्षा)।

नीलं सरोजं, नीलो घटः, पीतो घटः, विमलं जलं नद्याः, घटकर्मत्वमित्यादावतिप्रसङ्गः। नापि प्रकृतपदसमभिव्याहृतपदस्मारिते प्रकृतपदस्मारितस्य जिज्ञासा साकाङ्क्षा, शाब्देच्छाशून्यस्यापि वाक्यार्थबोधात्। ज्ञाप्यतदितरान्वयप्रकारकजिज्ञासानुकूलपदार्थोपस्थितिजनकत्वे सत्यजनिततात्पर्यविषयान्वयबोधत्वमाकाङ्क्षा इति।

चिन्तामणिकारेण गङ्गेशेनोक्तम्—अभिधानापर्यवसानमाकाङ्क्षा,[1] यस्य येन विना न स्वार्थान्वयानुभावकत्वं तस्य तदपर्यवसानम्। अत्राभिधानपदं करणव्युत्पत्त्या शब्दोच्चारणमभिधत्ते तस्यापर्यवसानं = फलानुत्पादः। तथा च तदुच्चारणजन्यतादृशशाब्दबुद्धौ तदुच्चारणजन्यतादृशशाब्दधीप्रागभाव आकाङ्क्षा। अस्य लक्षणस्य घटः कर्मत्वमित्यादावतिव्याप्तिरित्यतश्चिन्तामणिकारेण पारिभाषिकमभिधानपर्यवसानयत्पदनिष्ठयत्पदव्यतिरेकप्रयुक्तो यादृशान्वयबोधाभावस्तत्पदस्य तत्पदवत्त्वं तादृशान्वयबोधेऽभिधानापर्यवसानम्। पदत्वमत्र शब्दत्वं, प्रयुक्तत्वञ्च कारणाभावात् कार्याभाव इति प्रतीतिसाक्षिकः स्वरूपसम्बन्धविशेषः। तत्प्रतियोगिजन्यप्रतियोगिकत्वं वा तत्प्रयुक्तत्वं, भवति चाव्यवहितपूर्ववर्तिता रूपसमभिव्याहारसम्बन्धेन घटपदनिष्ठस्यानुस्वारपदस्य व्यतिरेकप्रयुक्तो घटवत्कर्मत्वमिति भेदान्वयबुद्ध्यभाव इति तादृशान्वयबोधे घटपदस्यानुस्वारपदत्वमाकाङ्क्षा।

एवं विनिगमनाविरहादव्यवहितोत्तरवर्तितारूपसमभिव्याहारसम्बन्धेनानुस्वारपदनिष्ठस्य घटपदस्य व्यतिरेकप्रयुक्तोऽपि घटवत्कर्मत्वमिति भेदान्वयबुद्ध्यभाव इत्यनुस्वारपदस्य घटपदवत्त्वमपि तादृशान्वयबोधे आकाङ्क्षा। अन्वयबोधसमर्थत्वे सति अजनिततात्पर्यविषयान्वयबोधत्वमाकाङ्क्षा इति केचिद् वदन्ति। प्रकृतिप्रत्ययाभ्यामन्वयबोधे जनितेऽपि वाक्यैकवाक्यं तावत् क्रियाकारकपदयोरजनितान्वयबोधत्वमाकाङ्क्षा। वेदान्तिनः पदोपस्थितयोरन्वयप्रतियोग्यनुयोगिनोः परस्परजिज्ञासाविषयत्वयोग्यतैवाकाङ्क्षा।

रघुदेवतर्कालङ्कारकृताकाङ्क्षावादस्य कानिचिद् आकाङ्क्षाया लक्षणान्युच्यन्ते—

१. तद्रूपावच्छिन्नपदविषयकोपस्थितिव्यतिरेकप्रयुक्तप्रकृतान्वयबोधाभावप्रयोजकव्यतिरेकप्रतियोगिस्वावच्छिन्नपदविषयकोपस्थितिको यो धर्मस्तद्वत्त्वमेव तद्रूपावच्छिन्नपदनिरूपिताकाङ्क्षा।

२. परस्परसमभिव्याहृततत्तद्रूपावच्छिन्नपदोपस्थितव्यतिरेकप्रयुक्तान्वयबोधाभाव एव तत्पुरुषनिष्ठप्रकृतान्वयबोधे तत्तद्रूपावच्छिन्नपदयोराकाङ्क्षा।

---

१. तत्त्वचिन्तामणिः, शब्दखण्डस्य प्रथमो भागः, पृ. २०८।

३. स्वाव्यवहितत्वविशिष्टोत्तरत्वसम्बन्धेन तत्पदवत्त्वमेवाकाङ्क्षा।

४. एतत्पदज्ञानानन्तरमेतत्पदज्ञानं भवत्वित्याकारकाभिप्रायविषयत्वरूपानुपूर्व्येवाकाङ्क्षा।

५. तत्तन्नामार्थयोरन्वयबोधे समानविभक्तिकत्वं नामापदयोरानुपूर्वीविशेषाकाङ्क्षा।

६. इतरविभक्तिसहितयोरानुपूर्व्या अप्याकाङ्क्षात्वम्।

७. यादृशयादृशानुपूर्वीज्ञानादेव यादृशयादृशबोधस्तत्र तादृशानुपूर्वीविशेषस्यैवाकाङ्क्षात्वम्।

८. नव्याः प्रकृतिप्रत्ययादीनामानुपूर्वीविशेषावच्छिन्ननिष्ठाकाङ्क्षा, तत्र प्रत्ययनिष्ठ-अम्पदत्वावच्छिन्नादिरूपानुपूर्वीविशेषावच्छिन्ननिष्ठप्रकृतिनिष्ठा घटपदत्वनीलपदत्वादिरूपानुपूर्वीविशेषावच्छिन्नाव्यवहितोत्तरत्वरूपानुपूर्वीनामार्थधात्वर्थभेदोपयोग्याऽऽकाङ्क्षा।

९. यादृशं नाम पदान्तरं यादृशपदं कदाचिदपि केनचिन्नोच्चरितम्, अथ च तादृशं नाम केनचिन्मौनिना तादृशपदमव्यवधानेन लिखितं तादृशलिप्यनुमिततथाविधपदयोराकाङ्क्षाविरहादिति चेत्, न, तत्र व्यवहितोच्चरितयोस्तथाविधपदयोरव्यवधानघटिताकाङ्क्षा।

१०. आनयनाद्यंशे घटकर्मत्वाद्यन्वयबोधे चानयेत्यादिपदस्य घटमित्यादिपदोत्तरत्वं तादृशपदपूर्वत्वं वाकाङ्क्षा।

११. आख्यातान्तोपस्थाप्यपाकानुकूलकृत्यादिप्रकारकबोधे प्रथमान्तनामपदनिष्ठानुपूर्वीविशेषावच्छिन्नव्यवधानघटितपौर्वापर्यमाकाङ्क्षा। इत्यलं विस्तरेण।

**कृतज्ञताज्ञापनम्—**

कस्यापि ग्रन्थस्य सम्पादने काठिन्यमनुभवन्त्येव विद्वांसः। अतस्तत्तद् विद्यासु पारङ्गतानां गुरुवर्याणामेवादौ कार्तज्ञ्यं शिरसा वहामि। अस्मद्गुरुवराणामाचार्य**श्रीवशिष्ठत्रिपाठिमहोदयानां** साहाय्येनेदं कार्यं सम्पादितमत एतेषां गुरूणां चरणाभ्यां सनतिं कुसुमाञ्जलिं वितरामि।

पूज्यमातृपितृचरणाभ्यां सनतिं कुसुमाञ्जलिं वितरामि। परमश्रद्धेयानामाचार्यप्रवराणां **श्रीविद्यानिवासमिश्रमहोदयानां** पादपद्मयोर्भूयोभूयः सश्रद्धं प्रणतिं समर्पयामो येऽस्मासु नितरां स्निह्यन्ति। तत्कृपयैव सत्प्रेरणया चेदं कार्यं सम्पादितं मया।

अस्य हस्तलेखस्य मूलछायाप्रतिः **सरस्वतीभवनपुस्तकालयतः** प्राप्ता। एतदर्थं तद्विश्वविद्यालयस्य कुलपतयः **प्रो. राममूर्तिशर्माणः,** अधिकारिणः पुस्तकालयाध्यक्षाश्च धन्यवादार्हाः। जम्बूस्थरघुनाथमन्दिरपुस्तकालयस्य धर्मार्थट्रस्टाधिकारिणो विशेषतस्तत्पुस्तकालयाध्यक्षाः **डॉ. धनीरामशास्त्रिणो** धन्यवादार्हाः। **डॉ. ललितकुमारत्रिपाठि**नोऽपि धन्यवादार्हाः, येषां सत्प्रेरणया इदं कार्यं मया सम्पादितम्।

अतः परं सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्याङ्गीभूतस्य अनुसन्धान-संस्थानस्य निदेशकानां **डॉ. राजारामशुक्लमहोदयानाम्,** प्रकाशनसंस्थानस्य निदेशकानां **डॉ. हरिश्चन्द्रमणित्रिपाठिमहोदयानाञ्च** सत्प्रेरणया कार्यमेतत् पूर्णतामगात्। अतस्तान् प्रति कार्तज्ञ्यं शिरसा वहामि। **डॉ. ददन-उपाध्यायैः,** अन्यैः संस्थाने कार्यरतैः कर्मचारिभिश्चापि सततपरामर्शपूर्वकं मुद्रणसौविध्यं सम्पादितमतस्तान् प्रति हृदयेन कृतज्ञतां वितरामि। श्रीजीकम्प्यूटरसञ्चालकाः **श्रीअनूपकुमारनागर**महोदया धन्यवादार्हाः, यैः अस्य ग्रन्थस्य मुद्रणं शीघ्रमेव कृतम्।

अस्य ग्रन्थस्य सम्पादनं सम्पूर्णानन्दसंस्कृतविश्वविद्यालयीय**सरस्वती-भवनपुस्तकालयतः** प्राप्तां पाण्डुलिपिमाश्रित्य कृतम्। पाठनिर्धारणार्थं वा पाठान्तरार्थं **रघुनाथपुस्तकालय-जम्बूतः** एका पाण्डुलिपिर्लब्धा। यथामति पाठनिर्धारणार्थं कश्चन प्रयत्नो व्यधायि, तथापि अत्र यदि काश्चन त्रुटयः स्युः, तर्हि क्षमां याचे।

अन्ते च विश्वनाथस्वरूपं हनुमन्तं प्रणम्य विरमामि।

सुधीविधेयः

**हरेरामत्रिपाठी**

उपाचार्यः, न्यायविभागस्य

श्रीलालबहादुरशास्त्रिराष्ट्रियसंस्कृतविद्यापीठे

**नवदेहली**

शारदीयं नवरात्रम्

वि.सं. २०५८

# विषयानुक्रमणी

### आचार्यश्रीरघुदेवभट्टाचार्यविरचितः

# आकाङ्क्षावादः

ओं श्रीगणेशाय नमः। सिद्धायां शाब्दाख्यविलक्षणप्रमायां तत्करणतया शब्दज्ञानस्य स्वतन्त्रप्रमाणता। प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानीति सूत्रे शब्दपदं शब्दज्ञानपरम्। अतीतानागतशब्दानुसन्धानादपि शाब्दबोधाच्छब्दस्य तद्धेतुत्वासम्भवात् शब्दज्ञानस्य[२] शाब्दत्वावच्छिन्नं प्रति शब्दज्ञानत्वेन वर्णज्ञानत्वेन वा हेतुता। वर्णत्वञ्च ध्वनिव्यावृत्तशब्दनिष्ठो जातिविशेषः। सामान्यसामग्र्या[३] विशेषसामग्रीसमवहिताया एव कार्योत्पादकत्वान्निराकाङ्क्षादिशाब्दज्ञानान्न शाब्द[४]रूपसामान्यधर्मावच्छिन्नापत्तिः। तत्तद्[५]धर्मविषयकशाब्दत्वावच्छिन्नहेतुभूतपदज्ञानजन्य[६]तत्तदर्थोपस्थितिरूपायास्तत्तदर्थविशेष्यकतत्तत्संसर्गकतत्तदर्थप्रकारकशाब्दत्वावच्छिन्नहेतुभूततत्तदर्थोपस्थापकपदनिरूपिततत्त[७]दाकाङ्क्षादिज्ञानरूपायाश्च विशेष्यसामग्र्या विरहात्।

अथैवं विशेषसामग्रीत एव निर्वाहे कृतं सामान्यकारणतया, विशेषसामग्रीजन्यतावच्छेदककोटौ शाब्दत्वनिवेशस्यावश्यकतयैव कार्यमात्रवृत्तिधर्मस्य कार्यतावच्छेदकत्वो[८]पपत्तेः। अस्तु वा[९] लाघवाज्ज्ञानत्वेनात्मत्वेनैव वा शाब्दत्वावच्छिन्नं प्रति[१०] हेतुतेति चेत्, न, शब्दज्ञानशून्यकालीनशाब्द[११]ज्ञानसामान्यानुत्पादेऽनन्तविशेषसामग्रीविरहकूटस्य प्रयोजकत्वापेक्षया शब्दज्ञानत्वावच्छिन्नाभावस्य वर्णज्ञानत्वावच्छिन्नाभावस्य वैकस्य प्रयोजकत्वे लाघवेन सामान्यकारणताया अपि सप्रमाणकत्वात्। ईदृशलाघवानुरोधेन कारण[१२]त्वसिद्धौ स्मृतिस्वर्गादौ संस्कारा[१३]दृष्टादीनां हेतुताविलयप्रसङ्गात्। तादृशकारणसमवधानवतोऽपि पुंसः कदाचिदेव स्मृतिस्वर्गादिरूप[१४]कार्यमुत्पद्यत इत्येतादृश-

---

१. ख ग पुस्तके शाब्दबोधो सत्या इति पाठः; २. ख ग पुस्तके शब्दज्ञानस्य चेति पाठः।
३. ख ग पुस्तके शाब्दसामग्र्याश्च इति पाठः; ४. ख ग पुस्तके शाब्दत्व इति पाठः।
५. ख ग पुस्तके तत्तदर्थविषयक इति पाठः; ६. ख ग पुस्तके जन्य इति पाठः।
७. ख ग पुस्तके परस्पराकाङ्क्षाज्ञानादिरूपायाश्च विशेषसामग्र्या विरहादिति पाठः।
८. ख ग पुस्तके नियमोपपत्तेरिति पाठः; ९. ख ग पुस्तके 'वा' इत्यस्य पाठो नास्ति।
१०. ख ग पुस्तके 'प्रति' पाठो नास्ति; ११. ख ग पुस्तके 'ज्ञान'पदस्य पाठो नास्ति।
१२. ख ग पुस्तके कारणत्वासिद्धाविति पाठः; १३. ख ग पुस्तके संस्कारादृष्टविशेषादीनामिति पाठः।
१४. ख ग पुस्तके 'रूप' इत्यस्य पाठो नास्ति।

नियमनिर्वाहायाननुगतानामुद्बोधकानां कालविशेषाणाञ्च विशेषसामग्रीत्वकल्पनाया आवश्यकत्वात्तत एवोपपत्तेः। अत एव[१] यद्विशेषयोः कार्यकारणभावो बाधकं विना तत्सामान्ययोरपीति प्राचां प्रवादोऽपि सयुक्तिकः।

अथैवं पदज्ञानत्वेनैव शाब्दत्वावच्छिन्नहेतुत्व[२]कल्पनमुचितम्, न तु वर्णज्ञानत्वेन[३] निरर्थकवर्णज्ञानदशायां वर्णज्ञानत्वाद्य[४]वच्छिन्नाभावासत्त्वेन तत्कालीनशाब्दसामग्र्यनुत्पादे विशेषसामग्र्यभावानां प्रयोजकत्वकल्पने गौरवात्। न च वर्णानां निरर्थकत्व[५]मेव न सम्भवति, एकाक्षरकोशे प्रत्येकं सकलवर्णानामेव शक्तिप्रतिपादनात्। तथा च पदज्ञानाभावो वर्णज्ञानाभावनियत एवेति नोक्तगौरवावकाश इति वाच्यम्। वास्तवशक्तिमच्छ[६]ब्दज्ञानत्वादिरूपशब्द-ज्ञानत्वावच्छिन्नाभावस्य[७] वर्णज्ञानत्वावच्छिन्नाभावनियतत्वेऽपि शब्दशक्ति-विषयकज्ञानत्वावच्छिन्नाभावस्यातथात्वम्[८]। तेन रूपेण हेतुत्वे[९] लाघव-ज्ञानानपायात्[१०]। लक्षणाज्ञानाधीनशाब्दबोधप्रक्कालेऽपि शक्तिज्ञानमावश्यकमेव सर्वलाक्षणिकस्थलेऽन्वयबोधस्य प्राचीनैरनभ्युपगमात्, विशिष्टवाक्यार्थघटक-यत्किञ्चित्पदार्थे शक्तिज्ञानस्यावश्यापेक्षणीयत्वात्। शक्यसम्बन्धात्मिकाया लक्षणायाः शक्तिघटिततया लक्षणाज्ञानस्यैव[११] शक्तिज्ञानात्मकत्वाच्चेति न व्यभिचार इति चेदिष्यत एव। निरुक्तपदज्ञानत्वेनैव शाब्दबोधहेतुता निराकाङ्क्षत्वाद्घट-कर्मत्वमानयनं कृतिरिति[१२] वाक्याद् घटमानयेत्यादाविव कर्मत्वानयनकृत्यादिषु घटकर्मत्वानयनादीनामाधेयत्वनिरूपकत्वविषयिकत्वा[१३]दिसम्बन्धेनान्वयबोधानुत्पादाद् आकाङ्क्षाज्ञानस्य हेतुता स्वीक्रियते तद्रूपावच्छिन्नपदविषयिकोप[१४]स्थितिव्यतिरेक-प्रयुक्तप्रकृतान्वयबोधाभावप्रयोजकव्यतिरेकप्रतियोगिस्वावच्छिन्नपदविषयिकोप[१५]-स्थितिको यो धर्मस्तद्वत्त्वमेव तद्रूपावच्छिन्नपदनिरूपित[१६] (तद्रूपावच्छिन्नपदसमभि-व्याहृत)आकाङ्क्षा। कर्मत्वविशेष्य[१७]काधेयत्वादिसंसर्गकघटादिप्रकारकान्वयबोधे चामा[१८]दिपदेष्वेव घटपदादिनिरूपिता एतादृशा[१९]काङ्क्षा, तादृशान्वयबोधे घटपदत्वाद्य-

१. ख ग पुस्तके अत एव चेति पाठः; २. ख ग पुस्तके 'हेतुता' इति पाठः।
३. ख ग पुस्तके 'ज्ञानत्वादिना' इति पाठः; ४. ख ग पुस्तके 'घ' इत्यस्य पाठो नास्ति।
५. ख ग पुस्तके निरर्थकत्वे एव इति पाठः; ६. ख ग पुस्तके 'पद' इति पाठः।
७. ख ग पुस्तके 'पद' इति पाठः; ८. ख ग पुस्तके 'तथात्वात्' इति पाठः।
९. ख ग पुस्तके 'हेतुत्वम्' इति पाठः; १०. ख ग पुस्तके 'लाघवस्यानपायात्' इति पाठः।
११. ख ग पुस्तके 'ज्ञानत्वस्येव' इति पाठः; १२. ख ग पुस्तके 'रित्यादि' इति पाठः।
१३. ख ग पुस्तके 'विषयित्वादि' इति पाठः; १४. ख ग पुस्तके 'विषयकोपस्थिति' इति पाठः।
१५. ख ग पुस्तके 'विषयकोपस्थितिको' इति पाठः।
१६. क पुस्तके 'तत्कालीनतत्पुरुषीय' अधःपाठो विद्यते।
१७. ख ग पुस्तके विशेष्यकाधेयतादि इति पाठः; १८. ख ग पुस्तके अमादि इति पाठः।
१९. ख ग पुस्तके 'एतादृश्याकाङ्क्षा' इत्येवं पाठो विद्यते।

वच्छिन्नविषयकोपस्थितेरम्पदत्वाद्यवच्छिन्नविषयकोपस्थितेश्च[1] हेतुतया तदवच्छिन्नाभावयोः[2] प्रकृतान्वये[3] बोधाभावेऽपि कारणाभावमुद्रया प्रयोजकत्वात्। प्रयोज्यप्रयोजकभावश्च कार्याभावकारणाभावयोः स्वरूपसम्बन्धविशेषः पदार्थान्तरमेव वा।

न च तत्र मानाभावः, दण्डाभावाद्घटाभाव इत्यादेः[4] प्रतीतेरेव मानत्वात्[5]। कर्मत्वादिपदार्थोपस्थितेश्च[6] तादृशान्वयबोधहेतुताया अप्रमाणकत्वात्[7], तत्तद्व्यतिरेकः[8] तादृशान्वयबोधाभावप्रयोजक इति न कर्मत्वादिपदे घटादिपदस्य तादृशान्वयबोधोपयोगिनी आकाङ्क्षा। अयमेति पुत्रो राज्ञः पुरुषोपसार्यतामित्यादौ पुरुषविशेष्यकराजसम्बन्धप्रकारकबोधतात्पर्यस्थले तथाविधबोधोदयेन[9] राज्ञः पुरुष इत्यादिपदोपस्थितीनां हेतुताया आवश्यकत्वात्, तथाविधपदोपस्थितिव्यतिरेकाणां तादृशान्वयबोधाभावप्रयोजकत्वात्। यत्र पुत्रपदार्थान्वित[10]स्वार्थप्रतीतीच्छयैव राज्ञ इत्यादिकमुच्चरितम्, न तु[11] पुरुषपदार्थान्वित[12]स्वार्थप्रतीतीच्छया तत्र तादृशपदयोः परस्परसाकाङ्क्षावारणाय[13] द्वितीयपदे तद्रूपावच्छिन्नपदसमभिव्याहृतत्वमपि निवेशनीयम्। तत्पदसमभिव्याहारश्च तत्पदोपस्थापितार्थान्वितस्वार्थविषयक-प्रतीतिजनकत्वप्रकारकेच्छाविषयत्वं प्रकृतान्वयबोधाभावेऽपि[14] तत्कालीनत्वं[15]-तत्पुरुषीयत्वे[16] निवेशनीये, अतो न जनितान्वयबोधदशायामतिप्रसङ्गः[17]।

वस्तुतस्तु परस्परसमभिव्याहृततत्तद्रूपावच्छिन्नपदोपस्थिति[18]व्यतिरेक-प्रयुक्तान्वय[19]बोधाभाव एव तत्पुरुषनिष्ठ[20]प्रकृतान्वयबोधे तत्तद्रूपावच्छिन्न-पदयोराकाङ्क्षा। इत्थञ्च तत्कालीनत्वाप्रवेशेऽपि न क्षतिः। अत्रेदं चिन्त्यम्— इयमाकाङ्क्षा न स्वरूपसती हेतुः, अयमेति पुत्रो राज्ञः पुरुषोपसार्यतामित्यादौ

---

१. ख ग पुस्तके पदत्वावच्छिन्न इति पाठः; २. ख ग पुस्तके तदभावयोः इति पाठः।
३. ख ग पुस्तके प्रकृतान्वयबोधाभावे इति पाठः।
४. ख ग पुस्तके इत्यादिप्रतीतेरेव इति पाठः।
५. ख ग पुस्तके 'तत्र पञ्चम्यर्थस्यान्यस्य दुर्वचत्वात्' इत्यधिकः पाठो विद्यते।
६. ख ग पुस्तके कर्मत्वादिपदोपस्थितेश्च इति पाठः।
७. खादिपुस्तके 'अप्रामाणिकत्वात्' इति पाठः।
८. खादिपुस्तके ' न तद्व्यतिरेक' इति पाठः; ९. ख ग पुस्तके 'तत्र' इत्यधिकः पाठः।
१०. ख ग पुस्तके 'पुत्रादि' इति पाठः; ११. खादिपुस्तके 'ननु' इति पाठः।
१२. खादिपुस्तके पुरुषादीति पाठः; १३. खादिपुस्तके साकाङ्क्षता, इति पाठः।
१४. 'अपि' पाठो नास्ति; १५. कालीनत्वमिति पाठः।
१६. तत्कालीनत्वं तत्पुरुषीयत्वं निवेशनीयमिति पाठः।
१७. बोधता, इति पाठः; १८. पदोपस्थिते, इति पाठः।
१९. प्रयुक्तप्रकृतान्वय इति पाठः; २०. खादिपुस्तके 'तदीय' इत्यधिकः पाठः।

समभिव्याहारभ्रमेण पुरुषे [१]राजसम्बन्धबोधानुपपत्तेः। समभिव्याहारघटितनिरुक्ताकाङ्क्षायास्तत्रासत्त्वात्। एवं घटः कर्मत्वमित्यादावपि कर्मत्वादिपदेऽम्पदत्वभ्रमदशायां घटमानयेत्यादाविवान्वयबोधस्य सर्वानुभवसिद्धत्वात्तदनुपपत्तेश्च। नापि तादृशाकाङ्क्षाज्ञानं हेतुः, तथा सति कर्मत्वादिपदज्ञानं घटपदज्ञानव्यतिरेकप्रयुक्तकर्मत्वादिविशेष्यकाधेयत्वादिसंसर्गकघटप्रकारकान्वयबोधाभावप्रयोजकव्यतिरेकप्रतियोगि [२]इत्येतादृशभ्रमाद् घटपदज्ञानाभावात्। [३]कर्मत्वज्ञानाभावाच्च तथाविधबोधाभाव[४] [५]इत्येतादृशभ्रमाद्घटीयं कर्मत्वं तथाविधान्वयबोधापत्तेः।

अथ य[६]त्तु तत्त्वयोरैक्याभावाद्विशिष्या[७]ऽम्पदत्वावच्छिन्नविशेष्यक एव घटपदज्ञानव्यतिरेकप्रयुक्ततथाविधान्वयबोधाभावप्रयोजकव्यतिरेकप्रतियोगित्वप्रकारकज्ञानत्वादिना तथाविधान्वयबोधाभावविशेष्यकघटपदज्ञानव्यतिरे[८]काऽम्पदज्ञानव्यतिरेकप्रयुक्तत्वप्रकारकज्ञानत्वादिना वा तथाविधान्वयबोधहेतुता वाच्या। तथा च कर्मत्वपद[९]त्वप्रकारकज्ञानात्कदाचिदपि तादृशान्वयबोधानुदयेन[१०] कर्मत्वपदत्वाद्यवच्छिन्नविशेष्यकनिरुक्तव्यतिरेकप्रतियोगित्व[११]प्रकारकज्ञानस्य प्रकृतान्वयबोधाभावविशेष्यककर्मत्वपदत्वाद्यवच्छि[१२]न्नविषयकज्ञानव्यतिरेकप्रयुक्तत्वप्रकारकज्ञानस्य वा हेतुताया अकल्पनान्नोक्तभ्रमात्तथाविधान्व[१३]यबोधापत्तिरिति चेत्, तर्हि तादृशान्वयबोधे लाघवाद्घटपद[१४]त्वप्रकारकज्ञानत्वापेक्षया[१५] अम्पदत्वप्रकारकज्ञानत्वेनैव[१६] हेतुतास्तु तत एव घटः कर्मत्वमित्यादौ दर्शितान्वयबोधवारणसम्भवात्किं निरुक्तगुरुशराकाङ्क्षाज्ञानहेतुतया, न च कर्मत्वादिविशेष्यकाधेयत्वादिसंसर्गकबोधे [१७]घट[१८]पदज्ञानत्वाम्पदत्वादिना द्विविधकारण[१९]ताकल्पनापेक्षया निरुक्ताकाङ्क्षा[२०]ज्ञानहेतुत्वेनैकहेतुताकल्पने लाघवमिति वाच्यम्। तथाप्यम्पदविशेष्यकस्य घटपदआकाङ्क्षादिप्रकारकज्ञानस्य घटपदविशेष्यक[२१]स्याम्पदाकाङ्क्षाप्रकारकज्ञानस्य वा

---

१. खादिपुस्तके राजसम्बन्धान्वयबोधानुपपत्तेः।
२. खादिपुस्तके 'वा' इत्यधिकः पाठः;
३. खादिपुस्तके कर्मपदज्ञानाभावाच्च।
४. तथाविधान्वयः;
५. भ्रमाद्वा घटीयकर्मत्वमित्यादौ।
६. यत्वतत्त्वयोरैक्याभावात्;
७. विशिष्य अम्पदज्ञानत्वावच्छिन्न।
८. व्यतिरेकात्;
९. पदत्वादि।
१०. बोधानुदये न;
११. व्यतिरेकप्रयुक्तप्रतियोगित्व।
१२. पदत्वावच्छिन्न;
१३. तथाविधान्वयाबोधापत्तिः।
१४. पदत्वादि;
१५. ज्ञानत्वाम्पदत्व।
१६. ज्ञानत्वादिनैव;
१७. संसर्गकघटादिप्रकारकबोधे।
१८. घटादिप्रकारकबोधे घटपदज्ञानत्वाम्;
१९. विशिष्यकारणता।
२०. ज्ञानत्वेन एकहेतुताकल्पने;
२१. विशेष्यस्याम्।

हेतुत्वे विनिगमनाविरहेण कारणताद्वयस्यावश्यकत्वात्। द्वितीयकल्पेऽपि घटपदज्ञानव्यतिरेकप्रयुक्तत्वप्रकारकत्वाम्पदज्ञानव्यतिरेकप्रयुक्तत्वप्रकारयोः कारणतावच्छेदकयोर्मिथो[1] विशेषणविशेष्यभावे विनिगमकाभावेन[2] कारणतावृद्धेरावश्यकत्वात्।

अथ कर्मत्वादिविशेष्यकाधेयतासंसर्गक[3]घटादिप्रकारकबोधाम्पदत्वप्रकारकज्ञानत्वेन च हेतुत्वं कल्पयित्वा घटः कर्मत्वमित्यादौ तादृशान्वयबोधवारणसम्भवेऽपि घटमानयेत्यादौ अयमेति पुत्रो राज्ञः पुरुषोपसार्यतामित्यादौ च तत्तत्पदयोस्समभिव्याहारस्य संशये व्यतिरेकनिश्चये च तत्तत्पदयोरन्वय[4]बोधानुदयात्समभिव्याहारघटितनिरुक्ताकाङ्क्षाज्ञानहेतुत्वमावश्यकमिति चेत्[5], न, तर्हि लाघवात्तत्तत्पदार्थान्वयबोधे तत्पदसमभिव्याहार[6]ज्ञानत्वेनैव हेतुत्वकल्पनमुचितम्। न चैवमन्वयानुभवे जाते[7] पुनरन्वयबोधापत्तिः। अनुमितौ सिद्धेरिव शाब्दबोधेऽन्वयानुभवस्य प्रतिबन्धकत्वोपगमात्। न चान्वयानुभवाभावस्य समभिव्याहारस्य[8] च कारणताद्वयकल्पनापेक्षया निरुक्ताकाङ्क्षाज्ञानस्यैव हेतुताकल्पनमुचितमिति वाच्यम्। निरुक्ताकाङ्क्षाज्ञानस्य हेतुत्वेऽपि स्वरूपसतोऽन्वयानुभवाभावस्य[9] हेतुताया आवश्यकत्वात्, अन्यथान्वयानुभवे जातेऽपि शब्दादिना तदभावघटिताकाङ्क्षाज्ञानसम्भवेन शाब्दबोधापत्तितादवस्थ्यात्।

न च स्वविशेष्यकसमभिव्याहृततत्पद[10]ज्ञानव्यतिरेकप्रयुक्तान्वयानुभवाभाववत्ताज्ञानस्यैव हेतुत्वं वाच्यम्। तादृशं च ज्ञानमन्वयानुभवकाले शब्दादितोऽपि न सम्भवति। आत्मविशेषगुणस्थले स्वरूपसत एव प्रतियोगिनो विपरीतज्ञानविरोधित्वादिति वाच्यम्। स्वत्वाननुगमेन तत्तत्पुरुषीयान्वयबोधं [11]प्रति तत्तत्पुरुषविशेष्यकनिरुक्तान्वयानुभववत्ताज्ञानत्वेनैव[12] हेतुताया वक्तव्यतया तत्तत्पुरुषभेदेनाऽनन्तकारणताप्रसङ्गात्[13]। [14]अस्मन्मतेऽन्वयानुभवाभावस्यात्मनिष्ठप्रत्यासत्त्या कारणत्वेनैवातिप्रसङ्गभङ्गात् पुरुषभेदेन तद्धेतुताभेदाभावात्।

न च मयापि तत्तत्पुरुषीयत्वमप्यनन्तर्भाव्य समवायसम्बन्धेनान्वयबोधं प्रति समवायविशिष्टविशेष्यताप्रत्यासत्त्यैव निरुक्तान्वयानुभवाभावरूपाकाङ्क्षाज्ञानस्यैव हेतुत्वं कल्पनीयमिति नातिप्रसङ्गो न वा पुरुषभेदेन कारणताभेद इति वाच्यम्।

---

१. कारणतावच्छेदकघटकयोर्मिथो विशेष्यविशेषणभावे।
२. विनिगमकविरहेण;
३. आधेयतादि।
४. पदार्थयोरन्वय;
५. चेत्तर्हि।
६. तत्तत्समभिव्याहार;
७. जातेऽपि।
८. समभिव्याहारज्ञानस्य;
९. खादिपुस्तके अन्वयाभावाभावस्य इति पाठः।
१०. तत्तत्पद;
११. 'प्रति' इति न पाठः।
१२. निरुक्तान्वयानुभवाभाववत्ता;
१३. अनन्तपुरुषकारणताप्रसङ्गात्।
१४. अस्मन्नये।

विशेष्यताविशिष्टसमवायस्यापि प्रत्यासत्तितामादाय [1]विनिगमनाविरहात्। एवमन्वयानुभवाभावज्ञानस्य हेतुत्वे विनश्यदवस्थान्वयानुभवाभावस्य ज्ञानादन्वयबोधात्[2] प्राक्क्षणोत्पन्नद्वितीयक्षणेऽन्वयबोधान्तरोत्पत्तिर्वज्रलेपायितैव।[3]

न च विषयिताविशिष्टसामानाधिकरण्यसम्बन्धेन निरुक्तान्वयानुभावाभवविशिष्टज्ञानत्वेनैव वाकाङ्क्षाज्ञानस्य हेतुता कल्प्यते[4]। अन्वयानुभवदशायां च न तादृशसम्बन्धेनाऽन्वयानुभवाभावविशिष्टतज्ज्ञानमस्तीति नातिप्रसङ्ग इति वाच्यम्। सामानाधिकरण्यविशिष्टविषयितासम्बन्धेनान्वयानुभवाभावविशिष्ट[5]निवेशमादाय विनिगमनाविरहप्रसङ्गात्। एवं यत्र घटमानयेत्याद्यानुपूर्वीविशेषावच्छिन्नपदज्ञानं पदार्थोपस्थित्यादिकमन्यथानुभवाभावश्च स्वरूपसद् विद्यते। न तु पदज्ञानान्वयानुभवाभावयोर्ज्ञानम्, न तु पदज्ञानविरहान्वयानुभवाभावयो: प्रयोज्यप्रयोजकभावज्ञानम्, तत्रापि शाब्दबोधस्यानुभविकतया नोक्ताकाङ्क्षाज्ञानस्य शाब्दधीहेतुत्वसम्भवात्[6]। यत्त्वाकाङ्क्षाज्ञानं[7] साकाङ्क्षत्वव्यवहार एवोपयुज्यते, शाब्दबोधे तु तद्घटकसमभिव्याहारांशमात्रस्य ज्ञानं स्वरूपसदन्वयानुभवाभावश्च हेतु:।

न च समभिव्याहारज्ञानस्य हेतुतायां मानाभाव:। अयमेति पुत्रो राज्ञ: पुरुषोपसार्यतां विमलं जलं नद्या: कच्छे महिषश्चलतीत्यादौ[8] राजसम्बन्धिपुरुषयोर्नदीसम्बन्धिकच्छयोश्चान्वये वक्तुस्तात्पर्याभावात् तात्पर्यज्ञानरूपकारणविरहेणैव तदन्वयबोधानुत्पादोपपत्तेस्तात्पर्यभ्रमसत्त्वे तथाविधान्वयबोधस्येष्टत्वादिति वाच्यम्। तात्पर्यज्ञानं हि राजपदमितरान्वितराजपरमित्याकारकं सामान्यत एकैकपदार्थविशेष्यकापरपदार्थमवगाहमानं शाब्दबोधहेतु:[9], न तु राजपदं पुरुषान्वितराजपरमित्याकारकं विशेषत: पदार्थद्वयविषयकम्, तथा सति राजादिरूपैकैकार्थमन्तर्भाव्यैव पुरुषादिरूपसहस्रार्थभेदेन राजपदधर्मिकतात्पर्यज्ञानस्य सहस्रकारणताप्रसङ्गात्[10]। मन्मते एकैकपदधर्मिकतात्पर्यज्ञानस्यैकैकस्यार्थमन्तर्भाव्यैकैककारणताकल्पनेनैवोपपत्ते:[11]।

एवञ्च यत्र राज्ञ: पुत्रेणैव पुरुषस्यापसारणेनैवान्वयबोध:, तत्राप्यावश्यकाभ्यां राजपदमितरान्वितराजपरं पुरुषपदमितरान्वितपुरुषपरमित्याकारकतात्पर्यज्ञानाभ्यां राजपुरुषयोरन्वयबोधप्रसङ्गो दुर्वार एवेति, राजपद[12]पुरुषपदार्थयोरन्वयबोधे राजपदं पुरुषपदोपस्थापितार्थान्वितस्वार्थप्रतीतिजनकत्वाभिप्राय[13]कमित्याकारकसमभिव्या-

१. विनिगमनाविरहप्रसङ्गात्।
२. अन्वयबोध इति पाठ:;
३. प्राक्क्षणोत्पन्नात्।
४. हेतुता कल्पते;
५. विशिष्टत्व।
६. हेतुतासम्भव:;
७. यत्तु निरुक्ताकाङ्क्षाज्ञानम्।
८. चरतीत्यादौ;
९. शाब्दबोधे।
१०. कारणताकल्पनप्रसङ्गात्;
११. एकैकस्वार्थमन्तर्भाव्यैकैक।
१२. खादिपुस्तके 'पद' इत्यस्य पाठो नास्ति;
१३. जनकत्वाभिप्रायविषय इत्याद्याकारक।

हारज्ञानस्य हेतुत्वमावश्यकमेव। न चैवं राजाद्येकैकपदधर्मिकसमभिव्याहारज्ञानस्य पुरुषाद्यपरसहस्रपदार्थमन्तर्भाव्य सहस्रकारणताया अर्थतात्पर्यज्ञानकारणत्वान्तरस्य च कल्पनापेक्षयाऽर्थतत्त्व[1]ज्ञानस्यैव विशिष्ट[2]पदार्थविषयकत्वमन्तर्भाव्य कारणता-कल्पनमुचितमिति वाच्यम्। यतो विशिष्य पदार्थद्वयविषयकत्व-मन्तर्भाव्याऽर्थतत्त्व[3]ज्ञानस्य हेतुत्वोपगमे शक्त्या लक्षणया च राजपदोप-स्थापितनृपहेमकाराद्यर्थसहस्रस्यैकैकमन्तर्भाव्यपुरुषादिरूपसहस्रार्थभेदेन कारणाता-सहस्रस्य कल्पनीयतया राजपदधर्मिकस्यैव[4] तात्पर्यज्ञानस्य सहस्रगुणितसहस्र-कारणताकल्पनम्। अस्माकन्तु राजपदस्य सार्धसहस्रभेदेन तद्धर्मिकार्थतात्पर्यज्ञानस्य कारणतासहस्रं समभिव्याहारज्ञानहेतुतायां विशिष्य पदार्थान्तर्भावेन राजपदधर्मिकस्य सहस्रापर[5]भेदेन कारणतासहस्रं कल्पनीयमिति स्फुटतरं लाघवमिति।

अथैवमप्यनुभवाभावरूप[6]स्याकाङ्क्षाघटकभावस्य[7] शाब्दबोधहेतुत्वं विचारासहं शाब्दत्वावच्छिन्नं प्रति शाब्दत्वेन तद्विषयिक[8]शाब्दत्वावच्छिन्नं प्रति तद्विषयकशाब्दत्वेन प्रतिबन्धकत्वे सैन्धवमानयेत्यादौ लवणादिरूपैकार्थ-विषयकशाब्दबोधसत्त्वे आवृत्त्यापि घोटकादिरूपार्थान्तरविषयकान्वयबोधानुपपत्ते-र्घटकर्मत्वादिरूपार्थान्तर[9]वाक्यार्थबोधानन्तरं घटकर्मकानयनरूपमहावाक्यार्थ-ज्ञानानुदयप्रसङ्गाच्च। न च पदानुसन्धानव्यक्तिस्तत्तद्व्यक्तित्वेनोपादाय तत्तत्पदानुसन्धानजन्यशाब्दत्वेन प्रतिबन्धकत्वान्न दोषः, अवान्तरवाक्यार्थबोधानन्तरं पुनस्तत्पदानुसन्धानान्तरमभ्युपगम्यैव महावाक्यार्थबोधोपगमादिति वाच्यम्। एवं सति जनितान्वयबोधकपदानुसन्धानादनुसन्धानान्तरं विनैव शाब्दसामान्यापत्तेः।

न च विशेषसामग्रीसमवहिताया एव सामान्यसामग्र्याः फलजनकत्वात्तदनुसन्धानजन्यशाब्दबोधाभावरूपविशेषसामग्रीविरहान्नोक्तापत्तिः। अथवा तत्तदर्थविषयकशाब्दबोधत्वा[10]वच्छिन्नं प्रति सामान्यतस्तत्तदर्थ-विषयकशाब्दबोधत्वेनैव प्रतिबन्धकताऽनुसन्धानान्तरव्यक्तीनामुत्तेजकत्वोपगमात्र महावाक्यार्थबोधादेव अख[11]ण्डवाक्यार्थबोधानन्तरमनुप[12]पत्तिः। उदीचा[13]नु-सन्धानव्यक्तीनां च स्वजन्यबोधप्रागभावविशिष्टत्वेनैवोत्तेजकता वाच्या। अतो न

---

१. अर्थतात्पर्यज्ञानस्यैव।
२. विशेष्यपदार्थविषयकत्वमन्तर्भाव्य;
३. तात्पर्य।
४. स्वार्थ;
५. सहस्रापरपदभेदेन।
६. रूपाकाङ्क्षा;
७. भागस्य।
८. तद्विषयक;
९. रूपावान्तर।
१०. शाब्दबुद्धित्वावच्छिन्नं;
११. खण्डवाक्यार्थ।
१२. बोधानन्तरमनुपपत्तेः;
१३. उदीच्यानुसन्धान।

तादृशानुसन्धानजन्यबोधानन्तरं तादृशानुसन्धानव्यक्तित्वानं[१]नुसन्धानान्तरं विनैवान्वयबोधप्रसङ्ग इति वाच्यम्, गौरवात्। अयमेति पुत्रो राज्ञः पुरुषोपसार्यतामित्यादौ राजपुत्रान्वयबोधोत्पत्तिक्षणे च राजपुरुषान्वयबोधोत्पादप्रयोजकतात्पर्यज्ञानाभावात्तथाविधसमभिव्याहारज्ञानाभावादेव वा तदुत्तरमपि तादृशान्वयबोधानुत्पादसम्भवाद् अन्वयबोधं प्रत्यन्वयबोधस्य प्रतिबन्धकत्वे मानाभावात्।

न च समानाकारा[२]वगाहिशाब्दबोधापत्तिवारणायान्वयानुभवाभावस्य हेतुत्वमावश्यकमिति वाच्यम्। प्रथमशाब्दबोधक्षणे[३] च तज्जनकपदज्ञानजन्यपदार्थोपस्थित्यादीनां विनाशात्तादृशकारणविरहेणैवाऽविरलक्रि[४]योत्पन्नशाब्दबोधधाराया आयत्यसम्भवात्। अन्तरापदज्ञानतज्जन्यपदार्थोपस्थित्युत्पादस्थले पूर्वान्वयबोधस्य तादृशपदार्थोपस्थितिकाले विनाशात्तदुत्तरमन्वयबोधानन्तरस्य[५] भवतोऽप्यावश्यकत्वात्। यत्र प्रथमशाब्दबोधजनकपदार्थोपस्थितेरेवाकाङ्क्षायोग्यताऽऽसत्तितात्पर्यविषयिणी तत्र विनश्यदवस्थतादृशसमूहालम्बनपदार्थोपस्थितितस्तादृशबोधद्वितीयक्षणे पुनस्तादृशबोध[६] इष्यत इति चेत्, न, अन्वयानुभवस्य[७] प्रतिबन्धकत्वे उक्तस्थले उत्पन्नाया एव शाब्दबोधव्यक्तेरनन्तरक्षणे पुनरुत्पादवारणाय तत्तद्व्यक्तिप्राग्भावस्य हेतुतानामनन्तानां कल्पनप्रसङ्गात्[८]। मन्मते सामान्यसामग्रीविरहादेव तादृशापत्तिवारणासम्भवाद् अन्वयानुभवस्य प्रतिबन्धकता[९]कल्पनमावश्यकम्।

न च तच्छाब्दबोधव्यक्तौ तज्जनकपदार्थोपस्थितिपदज्ञानव्यक्तेः सत्त्वेन हेतुत्वं तत्समानविषयकशाब्दबोधोत्पत्त्यधिकरणकालान्तरे तद्व्यक्तेरुत्पादवारणायोभयमत एव कल्पनीयम्, तथा च तादृशपदज्ञानव्यक्तेः प्रथमशाब्दबोधोत्पत्ति[१०]-विनाशात्तद्द्वितीयक्षणे तत्त[११]द्व्यक्त्यापादनासम्भवादिति वाच्यम्। पदज्ञानस्य पदजन्यपदार्थोपस्थितिद्वारैव हेतुतया तन्नाशेऽपि तज्जन्यपदार्थोपस्थितिसत्त्वेनापत्तिसम्भवात् कर्मत्वत्वाद्यवच्छिन्नविशेष्यकघटत्वाद्यवच्छिन्नप्रकारकशाब्दबोधस्य कर्मत्वत्वाद्यवच्छिन्नमुख्यविशेष्यकघटत्वाद्यवच्छिन्नप्रकारकशाब्दबोधत्व[१२]मेव प्रतिबध्यतावच्छेदकं वाच्यम्। अतो घटकर्मत्वादिरूपखण्डवाक्यार्थबोधानन्तरं घटकर्मकानयनादिरूपमहावाक्यार्थबोधस्य नानुपपत्तिः। एवं

१. व्यक्तितः अनुसन्धानान्तरं विनैवान्वयबोधप्रसङ्ग इति वाच्यम्।
२. न च समानाकारधारावाहिक।
३. तद् द्वितीयक्षणे वा;
४. क्रमोत्पन्न।
५. बोधान्तरस्य;
६. बोधस्त्विष्यत एवेति चेन्न।
७. अन्वयानुभवस्या;
८. कल्पनाप्रसङ्गात्।
९. प्रतिबन्धकत्वमावश्यकं;
१०. काल एव विनाशात्तद्द्वितीयक्षणे।
११. तत्तद्व्यक्त्यान्यापादनसम्भव इति वाच्यम्;
१२. शाब्दत्वमेव प्रतिबध्यतावच्छेदकं वाच्यम्।

घटत्वावच्छिन्नविशेष्यकनीलादिप्रकारकशाब्दबोधस्य घटत्वाद्यवच्छिन्नमुख्यविशेष्यतानिरूपितधर्मितावच्छेदकतान्यनीलादिप्रकारताशालिशब्दत्वम्। अतो घटो नील इत्याद्यवान्तरवाक्यार्थज्ञानपूर्वक-नीलो घटः सुन्दरो नीलघटमानयेत्यादिवाक्यजन्यमहावाक्यार्थबोधस्य नानुपपत्तिः। एवमन्यत्राप्यूह्यम्।

अत्र च बोधद्वयतात्पर्यज्ञानसत्त्वे क्रमिकान्वयबोधद्वयोत्पादात्तादृशज्ञानस्योत्तेजकत्वं स्वीकरणीयम्। तत्र प्राथमिकव्यक्तिद्वितीयक्षणे उत्पादवारणायाऽगत्या प्रकारान्तरमास्थेयमिति, तदप्यसत्, तथा हि राजपदं [1]पुरुषपदार्थान्वितराजपरमित्याकारकस्य [2]हेतुत्वे यत्र विशेषतः पदार्थविषयकस्यैव[3] तात्पर्यज्ञानस्य शाब्दबोधहेतुत्वमावश्यकं सामान्यत इतरपदार्थविषयकस्यैव तस्य हेतुत्वे यत्र लक्षणया पुरुषपदोपस्थापितेनार्थान्तरेण राज्ञोऽन्वयबोधे राजपदोपस्थापितार्थान्तरे पुरुषस्यान्वयबोधे [4]च वक्तुस्तात्पर्यं न तु राजपुरुषयोरन्वयंबोधे, तत्र राजपदं पुरुषपदो[5]पस्थापितार्थान्तरान्वितस्वार्थप्रतीतिजनकत्वाभिप्रायविषय इत्येतादृशसमभिव्याहारज्ञानस्य राजपदमितरान्वितराजपरं पुरुषपदमितरान्वितपुरुषपरमित्याकारकार्थतात्पर्यज्ञानयोः 'राज्ञः पुरुषः' इति पदोपस्थापितार्थान्तरस्य च राजपदमितरान्वितराजपरं पुरुषपदमितरान्वितपुरुषपरमित्याकारकार्थतात्पर्यज्ञानयोः राज्ञः[6] पुरुषपदो[7]पस्थापितार्थान्तरस्य च पुरुषेण राजपदोपस्थाप्यार्थान्तरस्यान्वयबोधानुरोधेनावश्यकतया तद्बलाद् राजपुरुषयोरन्वयबोधप्रसङ्गात्। तथा चैकवाक्यताभिप्रायेण विषयित्वरूपसमभिव्याहारज्ञानस्य हेतुत्वे मानाभावः। उक्तस्थले तथाविधतात्पर्यज्ञानविरहे[8]ऽपि वाऽतिप्रसङ्गविरहात्।

न च यत्र राजपदं पुरुषान्वितराजपरमित्येतादृशतात्पर्यग्रहो वर्तते, अपि च राजपदं पुरुषपदसहकारेण यत्पदार्थान्वितस्वार्थबोधकत्वं तदभिप्रायविषयो न वेत्याकारकसमभिव्याहारसंशयस्तद्व्यतिरेकनिश्चयो वा वर्तते, तत्र राजपुरुषपदाभ्यां राजपुरु[9]षपदार्थबोधापत्तिवारणाय तादृशपदद्वयजन्यशाब्दबोधे तादृशाभिप्रायविषयित्वज्ञानहेतुत्वमावश्यकमिति वाच्यम्। उक्ततात्पर्यज्ञानसत्त्वे तथाविधसंशयादिसत्त्वेऽपि तादृशशाब्दबोधस्येष्टत्वात्। अस्तु वा राजपदं पुरुषपदसहकारेण यत्पुरुषान्वितराजबोधकत्वं तदभिप्रायविषय इत्याकारकमेवार्थतात्पर्यज्ञानं हेतुः, तावतैवोक्तातिप्रसङ्गवारणसम्भवात्, एवमन्वयानुभवाभावस्य हेतुत्वेऽपि मानाभावाद् उक्तस्थले शाब्दबोधोत्पत्तिद्वितीयक्षणे तद्व्यक्तिपुनरुत्पादकस्यापादकविरहाद् यतस्साम[10]ग्र्यव्यव-

---

१. पुरुषान्वितराजपरम्;
२. 'हेतुत्वे यत्र' इत्यस्य पाठो नास्ति।
३. 'पदार्थद्वयविषयकस्यैव' इति पाठः;
४. ख ग पुस्तके चेत्यस्य स्थाने वेति पाठः।
५. पदोपस्थाप्यार्थान्वितस्वार्थप्रतीति;
६. राज्ञा।
७. पुरुषपदोपस्थाप्यार्थान्तरस्य;
८. विरहादेवातिप्रसङ्गविरहात्।
९. राजपुरुषार्थ;
१०. सामग्र्यव्यवहितोत्तरक्षणस्य।

हितोत्तरत्वस्य कार्याधिकरणत्वव्याप्यतयैवावगम्यते[1], न तु कार्योत्पादव्याप्यतापीति स्वोत्पत्तिद्वितीयक्षणस्य स्वाधिकरणत्वं पुनरिष्टमेव तृतीयक्षणे च न तदधिकरणत्वस्याप्यापत्तिसम्भवात्[2]।

द्वितीयक्षणे[3] तद्व्यक्तिं प्रति तद्व्यक्तित्वेनावश्यकल्पनीयहेतुताकतत्पदार्थोपस्थितिव्यक्तीनामभावादिति। अत्र नव्याः प्रकृतिप्रत्ययादीनामानुपूर्वीविशेषावच्छिन्ननिष्ठाकाङ्क्षा[4] तत्र प्रत्ययनिष्ठाम्पदत्वावच्छिन्नादिरूपानुपूर्वीविशेषावच्छिन्ननिष्ठप्रकृतिनिष्ठा घटपदत्वनीलपदत्वादिरूपानुपूर्वीविशेषावच्छिन्नाव्यवहितोत्तरत्वरूपानुपूर्वीनामार्थधात्वर्थभेदोपयोग्याऽऽकाङ्क्षा[6], अतो घटः कर्मत्वमानयनं कृतिरित्यादौ कर्मत्वादिपदस्य भेदान्वयबोधेनैव घटादिपदसाकाङ्क्षताऽव्यवधानप्रवेशात् घटरूपं[7] पश्येत्यादौ रूपादिपदोत्तराऽम्पदादिना[8] घटादिपदसाकाङ्क्षताप्रसङ्गः।

न चैवं[9] घटरूपे पश्येत्यादिद्वन्द्वसमासस्थलेऽमादिपदस्य रूपादिपदाव्यवहितोत्तरत्वस्याप्याकाङ्क्षत्वात्[10] तादृशनानाविधाकाङ्क्षाज्ञानानामेकैकविधान्वयबोधं प्रति हेतुत्वव्यभिचारस्याग्रे वारणीयत्वात्, यत्तु[11] घटप्रत्ययानुत्तरत्वरूपमव्यवधानमेवाकाङ्क्षाघटकं वाच्यम्, घटरूपे पश्येत्यादावपि तादृशविशिष्टाभावात्मकमव्यवधानमक्षतमेवेति। तदसत्। तथा सति प्रत्ययाद्यनुपस्थितिदशायां तादृशाव्यवधानस्य दुर्ज्ञेयतया शाब्दबोधानुपपत्तेः। यावत्प्रत्ययसाधारणस्य प्रत्ययत्वस्य दुर्वचत्वाच्च। अथ द्वन्द्वस्थलानुरोधेन घटपदाव्यवहितोत्तररूपादिपदाव्यवहितोत्तरत्वस्यामादिपदनिष्ठस्य कर्मत्वादौ घटान्वयबोधौपयिकाकाङ्क्षातो[12] घटरूपमित्यादितत्पुरुषस्थलेऽपि कर्मत्वादौ घटाद्यन्वयबोधप्रसङ्ग इति चेत्, न, तत्पुरुषस्थलीय[13]-पूर्वपदस्य विभिन्नपदार्थविशिष्टपरतयोक्तस्थले[14] घटपदत्वाभावेन[15] कर्मत्वे घटान्वयापत्तिविरहात्।

न च घटपदार्थस्य घटसम्बन्धित्वावच्छिन्नस्यैव कर्मत्वान्वयबोधप्रसङ्गः, अभेदेन घटसम्बन्धित्वावच्छिन्नान्वितरूपत्वावच्छिन्नस्यैव तत्र कर्मत्वावच्छिन्नतयेष्टापत्तिसम्भवादिति वाच्यम्। तत्पुरुषस्थले तादृशान्वयबोधतात्पर्यविरहेणैव तदापत्त्यभावात्[16], यत्र रूपांशे कर्मत्वांशे च घटपदार्थस्य विशेषणतयान्वयबोधे

---

१. व्याप्यतैवोपगम्यते; २. आपत्तिसम्भवः।
३. द्वितीयक्षण; ४. विशेष एवाकाङ्क्षा।
५. पदत्वरूपानुपूर्वी; ६. धात्वर्थयोः प्रत्यर्थे भेदान्वयबोधोपयोग्याकाङ्क्षा।
७. घटस्य रूपं; ८. पदादेर्न; ९. 'सति' इत्यधिकः पाठः।
१०. रूपादिपदव्यवहिततया घटादिपदसाकाङ्क्षतानुपपत्त्या कर्मत्वादौ घटाद्यन्वयानुपपत्तिरिति वाच्यम्, अम्पदत्वावच्छिन्ननिष्ठस्य घटादिपदाव्यवहितोत्तर।
११. घटादिपदोत्तरप्रत्ययानुत्तरत्व; १२. बोधौपयिकाकाङ्क्षात्वोपगमे; १३. स्थले।
१४. विभक्त्यन्तार्थ; १५. घटपदस्य; १६. तदापत्त्यसम्भवात्।

तात्पर्येणैव घटरूपं पश्येत्याद्युच्चरितं तत्र तात्पर्यज्ञानवतां द्विविधबोध एवेष्यते। अन्यथा पुनरगत्या घटरूपमित्याद्यानुपूर्वीज्ञानजन्यकर्मत्वादिविशेष्यकघटादिसम्बन्धिप्रकारकान्वयबोधे घटादिपदधर्मिकस्य कर्मत्वेतरविशेषणतया स्वार्थान्वयबोधपरत्वग्रहस्य प्रतिबन्धकत्वं वाच्यम्। अथवा घटपदं[१] कर्मत्वान्वितस्वार्थपरमित्येतादृशतात्पर्यग्रहहेतुतायां धर्मिणि[२] कर्मत्वेतरान्वितस्वार्थपरतया गृह्यमाणत्वं विशेषणं देयम्। किं वा विशेषता[३]सम्बन्धावच्छिन्नतादृशस्वार्थपरत्वग्रहाभावस्य स्वाश्रयविशेष्यकत्वसम्बन्धेन वैशिष्ट्यं तादृशतात्पर्यग्रह एव निवेशनीयम्।[४] अत एव द्वन्द्वार्थतत्पुरुषार्थपरतादृशवाक्यद्वय[५]वतः पुंस उभयतात्पर्यज्ञान[६]युगपदुभयबोधोपपत्तिः।

अथ[७] तात्पर्यज्ञाने तदा[८] निरुक्तविशेषणेन विशेषिते घट[९] इत्येतादृशानुपूर्वी घटपदं यत्र विशेषणतया कर्मत्वतदितरान्वितस्वार्थपरत्वग्रहः। तत्र कर्मत्वविशेष्यकघटान्वयबोधानुपपत्तिरिति वाच्यम्। तत्र तादृशबोधस्यानुभविकत्वे तदा[१०] विशेषणमनन्तर्भाव्य तात्पर्यज्ञानहेतुत्वान्तरस्य कल्पनीयत्वात्तादृशकारणतावच्छेदकावच्छिन्नस्य[११] घटमित्यानुपूर्वीज्ञानरूपसहकारिसमवहितस्यैव फलोपधायकत्वोपगमात्तद्बलाद्, घटरूपं पश्येत्यादावतिप्रसङ्गः, उत्तरत्वनिवेशाद् रूपं घटस्य पश्येत्यादावमादिपदस्य कर्मत्वादिविशेष्यकघटादिबोधेन[१२] साकाङ्क्षता एकघटपदाव्यवधानस्यान्यघटपदोत्तरस्य[१३] च ज्ञानात्तथाविधशाब्दबोधापत्तिवारणाय विशिष्य तत्तत्पदाव्यवहितत्वे सति तत्तत्पदोपात्तस्यैव[१४] ज्ञानं शाब्दबोधजनकं वाच्यम्।

वस्तुतः स्वाव्यवहितत्वविशिष्टोत्तरत्वसम्बन्धेन घटादिपदवत्त्वमेवाकाङ्क्षाविघटकं[१५] रूपं घटस्येत्यादावमादिपदस्य तादृशसम्बन्धेन घटपदवत्त्वम्, अन्यदीयाव्यवधानस्यान्यदीयोत्तरत्वस्या[१६]न्यदीयसम्बन्धत्वाभावात् तादृशविशिष्टसम्बन्धेन कस्यचिदपि घटादिपदस्य तत्रासत्त्वात्। अतः पदव्यक्तिभेदेन कार्यकारणभाव[१७]विरहेऽपि नातिप्रसङ्गः। अथ यादृशनाम[१८]पदान्तरं यादृश[१९]पदं कदाचिदपि

---

१. घटपदं विशेषणतया; २. धर्मिणि विशेषणतया; ३. विशेष्यता।

४. 'पूर्वोक्तप्रकारद्वयेऽस्य रसं प्रकाशयति' इति ख ग पुस्तके अधिकः पाठः।

५. वाक्यद्वयज्ञानवतः; ६. ज्ञानाद्युगपदुभयबोधोपपत्तिः।

७. 'अथ' इत्यस्य स्थाने 'न च' इति पाठः।

८. तद्विशेष्यपदे वा; ९. घटमित्येतादृशानुपूर्वीघटकघटपदे।

१०. ख ग पुस्तके तदा इत्यस्य स्थाने तथा इति पाठः।

११. 'च' इत्यधिकः पाठः; १२. घटाद्यन्वयबोधेन।

१३. पदोत्तरत्वस्य; १४. तत्तत्पदोत्तरत्वस्यैव।

१५. घटकं रूपं; १६. चान्यदीय।

१७. भेदे विरहेऽपि; १८. पदाद्यन्तरं; १९. यादृशप्रत्ययपदम्।

केनचिन्नोच्चरितम्, अथ च तादृशं नाम[1] केनचिन्मौनिना तादृशप्रत्ययपदव्यवधाने[2] न लिखितं तादृशलिप्यनुमिततथाविधपदयोराकाङ्क्षाविरहात्तदनुसन्धानान्वयबोधा-[3]नुपपत्तिरिति चेत्, न, तत्र व्यवहितोच्चरितयोस्तथाविधपदयोरव्यवधानमपि[4] तादृशाकाङ्क्षाभ्रमादेव शाब्दबोधोपगमात् यच्च लेखकाभिप्रायविषयतथाविध-पदयोर्व्यवधानमेव प्रतिसन्धत्ते। तावदयं[5] लेखक एतत्पदार्थान्वितैतत्पदार्थज्ञानवान् एतत्पद[6]व्यञ्जकलिपिकर्तृत्वादित्यादिक्रमेण वाक्यार्थमनुमिनोत्येव न तु शाब्द[7] इति।

अस्तु वा, एतत्पदज्ञानानन्तरमेतत्पदज्ञानं भवत्वित्याकारकाभिप्रायविषयत्व-रूपानुपूर्व्येवाकाङ्क्षा। इत्थञ्च शब्दस्य[8] ज्ञानतो मीमांसकस्य शब्दे व्यवहित[9]-घटपदप्रयुक्ताम्पदव्यवहितसर्वत्वमपि विनिगमनाविरहेणाकाङ्क्षा तज्ज्ञानयोश्च वैकल्पिकहेतुत्वं प्रत्येकं ज्ञानादपि शाब्दबोधस्यानुभविकत्वात् समुच्चितस्यैवोभय-विधाकाङ्क्षाज्ञानस्य फलोपधायकत्वे सामग्रीप्रतिबन्धकतायामुभयज्ञानस्यैव निवेशनीयतापत्त्या विशेषणविशेष्यभावे विनिगमनाविरहेण प्रतिबन्धकताबाहुल्या-पत्तेः। परस्परजन्यबोधे परस्परव्यभिचारवारणं चाग्रे दर्शयिष्यते। आनयनाद्यंशे घटकर्मत्वाद्यन्वयबोधे चानयेत्यादिपदस्य घटमित्यादिपदोत्तरत्वं तादृशपदपूर्वत्वं [10]वाऽऽकाङ्क्षा, घटमानयनघटमित्येतादृशद्विविधानुपूर्वीज्ञानादेव घटकर्मकानयन-बोधात्।

न चाऽवान्तरबोधजनकाभ्यां घटमित्येतादृशानयेत्येतादृशानुपूर्वीज्ञानाभ्यां घटकर्मकानयनरूपविशिष्टवाक्यार्थतात्पर्यज्ञानसहकृताभ्यामेव विशिष्ट-वाक्यार्थोपपत्तये[11] तत्र घटमानयेत्याद्यानुपूर्वीज्ञानस्य हेतुत्वमप्रामाणिकमिति वाच्यम्। आनय घटमित्याद्यानुपूर्वीज्ञानाद् घटमानयेत्यत्रेव घटकर्मतोद्देश्यकानयनविधेयक-बोधस्य वारणाय तादृशबोधं प्रति आनयपदे घटमिति पदोत्तरत्वज्ञानस्य घटमिति पदे वाऽऽनयपदपूर्वत्वज्ञानस्य [12]घटमानयेत्येतादृशज्ञानादानयनघटमित्यत्रा-नयनोद्देश्यकघटकर्मताविधेयकबोधवारणाय तादृशान्वयबोधे[13] घटमिति पदे आनयपदोत्तरत्वज्ञानस्यानयपदे वा घटमिति पदपूर्वत्वज्ञानस्य हेतुताया

---

१. नामपदं लिखित्वा;
२. पदमव्यवधानेन।
३. पदयोरव्यवधानघटकाकाङ्क्षाविरहात् तदनुसन्धानादन्वय इति पाठः।
४. घटिताकाङ्क्षा;
५. सत्तावदयं।
६. एतत्पदव्यञ्जकाव्यवहितैतत्पदव्यञ्जक।
७. शाब्दयति;
८. शब्दस्य नित्यत्वं।
९. अव्यवहितोत्तरत्वज्ञानासम्भवेऽपि न तस्य शाब्दबोधानुपपत्तिः, प्रत्ययनिष्ठप्रकृत्यव्यवहितोत्तरत्वमिव प्रकृतिनिष्ठं प्रत्ययाव्यवहितपूर्वत्वमपि।
१०. चाकाङ्क्षा;
११. वाक्यार्थोपपत्तेः।
१२. एवं घटमानयेत्येतादृशानुपूर्वी;
१३. बोधं प्रति।

आवश्यकत्वात् शाब्दबोधे प्राङ्निर्दिष्टस्यैवोद्देश्यतया [१] चरमनिर्दिष्टस्यैव पदार्थस्य च विधेयतया तत्र [२] तथाविध[३]बोधोत्पत्ताविष्टापत्त्यसम्भवात्, अत एव न्यक्कारो ह्ययमेवेत्यादौ विधेयपरस्य न्यक्कारादिपदस्यायमित्यादिपदोत्तरत्वाभावादभिमतोद्देश्यविधेयभावेन शाब्दबोधस्यानुपपत्तेः। आलङ्कारिका विधेयाविमर्शदोषमुदाहरन्ति। एवमाख्यातान्तोपस्थाप्यपाकानुकूलकृत्यादिप्रकारकबोधे प्रथमान्तनामपदनिष्ठानुपूर्वीविशेषावच्छिन्नाव्यव[४]धानघटितपौर्वापर्यमाकाङ्क्षा, अत एव सत्यपि तात्पर्यविशेषादिज्ञाने काष्ठेन तण्डुलं पचतीत्यादौ काष्ठतण्डुलाद्यंशेन पाकभावनान्वयः। अपि च प्रथमा[५]न्तपदोपस्थाप्ये सङ्ख्याप्रकारकबोधेऽपि तादृशाकाङ्क्षैव नियामिका, अत एव भावनान्वयस्थले न सङ्ख्यान्वयः। एवं तत्तन्नामार्थयोरन्वयबोधे समानविभक्तिकत्वं नामपदयोरानुपूर्वीविशेषाकाङ्क्षा। नीलस्य [६] घटमित्यादाविव एतस्य घट इत्यादाविदंपद[७]घटादिपदयोरभेदान्वयबोधानुदयाद् धान्येन धनवानित्यादौ चाभेदसम्बन्धेन [८] धनादौ धान्यस्यान्वयः; अपि तु [९] तृतीयार्थभेदे धान्यादेस्तादृशाभेदस्य धनादावन्वयः कर्मधारया[१०]नुरोधेनेतरविभक्तिसहितयोरानुपूर्व्या अप्याकाङ्क्षात्वं स्वीकरणीयम्। एवं सर्वत्र यादृशानुपूर्वीज्ञानादेव यादृशयादृशबोधः [११], तत्र तादृशानुपूर्वीविशेषस्यैवाकाङ्क्षात्वमूहनीयम्।

अथ कर्मत्वादिविशेष्यकघटादिप्रकारकशाब्दबोधेऽम्पदत्वावच्छिन्नविशेष्यकघटपदाव्यवहितोत्तरत्वज्ञानत्वेन हेतुता न सम्भवति, घटावानय घटस्यानयनं कुम्भ[१२]मानयेत्याद्यानुपूर्वीज्ञानजन्यशाब्दबोधे व्यभिचारात्। न च कर्मत्वोपस्थापकविभक्तिविशेष्यकघटोपस्थापकपदाव्यवहितोत्तरत्वज्ञानत्वेन दर्शितसकलानुपूर्वीज्ञानसाधारणेन हेतुत्वान्न व्यभिचार इति वाच्यम्। घटीयकर्मत्व-

---

१. चरमनिर्दिष्टपदार्थस्यैव।
२. तत्र तत्र।
३. तथाविधोत्पादे इष्टापत्त्यसम्भवात्।
४. ख्यातान्तधातुनिष्ठानुपूर्वीविशेषावच्छिन्नयोरव्यवधानघटितपौर्वापर्यमाकाङ्क्षा।
५. प्रथमान्तपदोपस्थाप्यांश एव एवमाख्यातोपस्थाप्य....।
६. अयं घट इत्यादाविवास्य घट....।
७. पदघटादिपदार्थयोरभेदान्वय।
८. सम्बन्धेन धान्यस्य धनादौ न साक्षादन्वयः।
९. अपि तु तत्र।
१०. कर्मधारयानुरोधेनान्तरा विभक्तिरहितयोर्नाम्नोरव्यवधानघटितानुपूर्व्याकाङ्क्षात्वं स्वीकरणीयम्।
११. वाक्यार्थबोधः।
१२. कुम्भस्यानयनं कुम्भमानयेत्याद्या....।

परतदादिपदघटिततत्तदस्तीत्यादिवाक्यजन्यकर्मत्वविशेष्यकघटप्रकारके ज्ञाने व्यभिचारस्यैव तावताप्यनुद्धाराद् घटोद्देश्यककर्मताविधेयकशाब्दत्वं निरुक्ताकाङ्क्षाज्ञानजन्यतावच्छेदकं वाच्यम्। तदादिपदोपस्थापितघटविशेषितकर्मत्वबोधस्तु घटांशेन [१]कर्मत्वबोध: पूर्वानुपस्थितपदार्थस्यैव विधेयतया एकपदोपस्थाप्ययोरुद्देश्यविधेयभावविरहादिति नायं व्यभिचार इति चेत्, अस्त्वेवम्, तथाप्युक्तानुगतरूपेण हेतुत्वं न सम्भवति। तथा सति [२]घटस्थकर्मत्वमित्यादौ कर्मत्वादिपदस्यैव घटादिपदाव्यवहि[३]तोत्तराम्पदत्वेन ज्ञानं तत्र कर्मत्वादावाधेयतासम्बन्धेन घटादिप्रकारकबोधोऽनु[३]पपन्न:। यत्र वा घटमित्यादावमादिपदे कर्मत्वादिपदत्वादिपदत्वभ्रम:, तदा[४] तु तेन रूपेण घटादिपदाव्यवहितोत्तरत्वज्ञानादपि तादृशान्वयबोधापत्ते:।

न च वास्तवविभक्तिविशेष्यकज्ञानत्वेन हेतुत्वोपगम एव दर्शितदोषप्रसक्ति:[५]। न तु विभक्तित्वावच्छिन्नविशेष्यताकज्ञानत्वेन हेतुत्वोपगमे कर्मत्वपदस्याम्पदत्वभ्रमदशायां विभक्तित्वेन तत्र घटपदाद्यव्यवहितोत्तरत्वज्ञानसम्भवात्तादृशबोधोपपत्ते:, अम्पदे [६]कर्मपदत्वभ्रमदशायां विभक्तित्वेन तज्ज्ञाना[७]सम्भवे तादृशान्वयबोधासम्भवाच्चेति वाच्यम्। विभक्तित्वाद्यनुपस्थितदशायामप्यम्पदत्वादिप्रकारकज्ञानाच्छाब्दबोधोदयाद् अमादिपदस्य विभक्तित्व[८]ग्रहदशायामप्यम्पदत्वादिरूपानुपूर्वीविशेषपुरस्कारेण ज्ञानं विना तथाविधशाब्दबोधानुदयाच्च नानाविधानुपूर्वीज्ञानजन्यतावच्छेदकजातीनां समूहालम्बनानुपूर्वीविषयकज्ञानजन्यशाब्दबोधे सङ्करप्रसङ्गे न व्यभिचारवारणायानुपूर्वीजन्यतावच्छेदकतया जाति[९]कल्पनमावश्यकमिति। मैवम्। तत्तल्लिङ्गपरामर्शजन्यतावच्छेदककोटौ स्वसामानाधिकरण्यावच्छिन्नस्वाव्यवहितोत्तरक्षणोत्पत्तिकत्वसम्बन्धेन तद्वैशिष्ट्यं निवेश्य व्यभिचारवारणवदत्रापि तादृशसम्बन्धेन तत्तदानुपूर्वीज्ञानवैशिष्ट्यं तज्जन्यतावच्छेदककोटौ निवेश्य व्यभिचारस्य वारणीयत्वात्।

अथ कर्मत्वादिविशेष्यकाधेयतासंसर्गकघटादिप्रकारकशाब्दबोधे घटमित्याद्यानुपूर्वीज्ञानस्येव घट: कर्मत्वमित्याद्यानुपूर्वीज्ञानस्याहेतुत्वं वक्तव्यम्। घट: कर्मत्वमानयनं कृतिरित्यादिप्रयोजकवाक्यं श्रुत्वा घटमानयेति वाक्यं स्मरत: प्रयोज्यवृद्धस्य घटकर्मकानयनप्रवृत्तिमुपलभ्य घट: कर्मत्वमित्यादिवाक्य एव व्युत्पन्नस्य पुनस्तादृशवाक्यज्ञानादपि घटकर्मकानयनादिबोधात्। तथा च तादृशवाक्यादपि तथाविधस्यापि पुंसस्तथाविधशाब्दबोधापत्तिर्दुर्वारैवेति चेत्, न,

---

१. कर्मत्वविधेयक:; २. यत्र घट: कर्मत्व...; ३. बोधानुपपत्ते:।
४. तत्र इति पाठ:; ५. दोषद्वयप्रसक्ति:; ६. कर्मत्वभ्रमदशायां।
७. तज्ज्ञानासम्भवेन तादृशशाब्दबोधापत्त्यसम्भवाच्चेति वाच्यम्।
८. विभक्तित्वाग्रहदशायां; ९. जातिकल्पनमप्यशक्यमिति।

विपरीतव्युत्पन्नस्य पुंसस्तादृश[1]वाक्यार्थपदार्थोपस्थित्यादिमूलकमानसवाक्यार्थ-बोधस्यैवोपगमात्। यदि च तादृशवाक्याधीनविपरीतव्युत्पन्नस्य व्युत्पन्नपुरुषीय-वाक्यार्थबोधे शाब्दत्वमनुभवसिद्धम्। अन्यथा घटमानये[2]त्यादिवाक्याधीनघट-कर्मकानयनबोधेऽपि मानसत्वोपगमसम्भवेन शाब्दप्रामाण्यविलयापत्तिरिति विभाव्यते, तदास्तु तादृशानुपूर्वीज्ञानस्यापि तथाविधशाब्दधीहेतुता। तथाविधानु-पूर्व्यवच्छिन्नधर्मिकतादृशवाक्यार्थबोधस्वरूपयोग्यत्वग्रहव्युत्पत्तेरपि तत्सहकारित्व-मुपगम्य दर्शितातिप्रसङ्गो वारणीय:।

एवं[3] तादृशवाक्य एव व्युत्पन्नस्य पुंसो घटमानयेत्यादिवाक्यात्तादृशबोधस्य तुल्यफलानुत्पादेन घटमित्याद्यानुपूर्वीज्ञानेऽपि व्युत्पत्तिविशेषस्य सहकारित्वमुप-गन्तव्यम्। अथ कर्मत्वादावगृहीतघटामादिपदशक्तिकस्यापि पुंसो घटमित्याद्यानुपूर्वी-ज्ञानदशायां कुम्भ: कर्मत्वमित्यादिनिराकाङ्क्षा[4]काङ्क्षघटकपदज्ञानाधीनपदार्थोप-स्थितिसत्त्वे घटकर्मत्वा[5]द्यभेदान्वयबोधवारणाय तादृशान्वयबोधे घटपदज्ञान-जन्यघटोपस्थितित्वाम्पदज्ञानजन्यकर्मत्वोपस्थितित्वादिना हेतुत्वमवश्यमेव स्वीकरणीयम्। तथा च तादृशानुपूर्वीज्ञानस्य तादृशानुपूर्वीघटकतत्तत्पदज्ञानजन्य-तत्तत्पदार्थोपस्थितेश्च पृथक्कारणत्वकल्पनापेक्षया लाघवात्तादृशानुपूर्वीप्रकारकज्ञान-जन्यतत्तत्पदार्थोपस्थित्यादिनैकैकहेतुताकल्पनमुचितमिति शाब्दबोधेनाकाङ्क्षाज्ञानं हेतु:; अपि तु हेतुतावच्छेदकम्।

न च विनिगमनाविरहा[6]त्तत्तत्पदार्थोपस्थापकानुपूर्वीज्ञानत्वेन हेतुत्वं निष्प्रत्यूहैवेति वाच्यम्। तत्तत्पदार्थोपस्थापकानुपूर्वीज्ञा[7]नत्वेन हेतुत्वोपगम आनुपूर्वीज्ञानजन्यपदार्थोपस्थित्युत्पादक्षण एव शाब्दबोधापत्ते:, आनुपूर्वीज्ञान-रूपकारणस्य प्राक्सत्त्वात्। न च कारणतावच्छेदकविशिष्टस्य प्राक्तत्ताया: कार्योत्पादप्रयोजकतया पदार्थोपस्थिते: प्राक्क्षणे आनुपूर्वीज्ञानसत्त्वेऽपि तदुपधायकतासम्बन्धेन पदार्थोपस्थितिविशिष्टस्य तस्याऽसत्त्वान्नातिप्रसङ्ग इति वाच्यम्। विशिष्टसत्ताया: कार्योत्पादप्रयोजकत्वोपगमे विशेष्यसत्ताया इव विशेषणसत्ताया:[8] कल्पनेन गौरवात्।

वस्तुस्तु पदार्थोपस्थापकानुपूर्वीज्ञानत्वेन शाब्दबोधहेतुत्वस्य पदार्थोपस्थिति-पूर्ववृत्तित्वमगृहीत्वा ग्रहीतुमशक्यत्वेन तादृशधर्मस्यान्यथासिद्धिनिरूपकत्वमन्यकार्यं प्रति पूर्ववृत्तित्वं गृहीत्वैव यद्धर्मावच्छिन्नस्य प्रकृतकार्यपूर्ववर्तिताग्रहस्तद्धर्मा-वच्छिन्नस्यान्यथासिद्धत्वात्, अत एव परामर्शजन्यत्वे[9] व्याप्तिज्ञानस्यानुमिति-

---

१. तादृशवाक्याधीन;
२. शब्दप्रामाण्यविलयापत्तेरिति।
३. युक्त्यानुत्पादेन;
४. निराकाङ्क्षाकाङ्क्षवाक्य।
५. घटकर्मत्वाद्यो:;
६. विरहादानुपूर्वीविशेषज्ञानजन्यतत्तत्पादार्थोपस्थितित्वेन।
७. शाब्दबोधापत्ति:;
८. कल्पनाधिक्येन।
९. परामर्शजनकत्वेन व्याप्तिज्ञानस्य भ्रम्यादिजनकतया न च दण्डस्य घटहेतुत्वं प्रत्याख्यातं दीधितिकारेण।

हेतुत्वं भ्रमिजनकत्वेन दण्डस्य घटजनकत्वं प्रत्याख्यातं दीधितिकारेण, तथा च नोपदर्शितविनिगमनाविरहावकाश:। एतेन[१] विशिष्टस्य प्राक्तत्वं यदि पूर्वकाले विशेष्यविशेषणोभयसत्तारूपं तथैवोक्तक्रमेण विशिष्टस्य प्राक्तत्ताया: कार्योत्पत्ति-प्रयोजकत्वे[२] गौरवं तदेव न; अपि तु विशेषणवैशिष्ट्यावच्छिन्ननिरूपित-विलक्षणाधिकरणत्वमेव विशिष्टसत्त्वं तच्च विशेष्यविशेषणोभयाधिकरणत्वं नियतं[३] तस्य तत्कार्यप्रयोजकत्वेन[४] किञ्चिद्गौरवमिति दुर्वार एवोक्तविनिगमनाविरह इति परास्तम्।

न च यत्रानुपूर्वीज्ञानविशेषावच्छिन्नपदज्ञानजन्यपदार्थोपस्थितिर्वर्त्तते। तत्र[५] तादृशपदज्ञानं च नष्टं[६] शाब्दबोधापत्तिवारणायानुपूर्वीविशेषप्रकारकज्ञानस्यापि शाब्दधीहेतुत्वमावश्यकमिति वाच्यम्। तत्र शाब्दबुद्धेरिष्टत्वात्, अस्तु[७] वा कारणतावच्छेदकविशिष्टप्राक्तत्वमेव कार्योपधाने तन्त्रम्। यच्चानुपूर्वीविशेषा-वच्छिन्नपदज्ञानजन्यपदार्थोपस्थितित्वापेक्षया लाघवात्पदार्थोपस्थितिमत्पदज्ञानत्वेनैव[८] हेतुत्वमुचितम्। आनुपूर्वीविशेषघटकपदेऽप्यव्युत्पन्नस्य पुंसो निराकाङ्क्षापद-ज्ञानजन्यपदार्थोपस्थितिसत्त्वेऽपि न शाब्दबोधापत्ति:। आकाङ्क्षापदज्ञानस्य[९] व्यापार-विरहाद् व्यापारसत्त्वे आकाङ्क्षाज्ञाननाशेऽपि कार्योत्पत्तिरिष्टैव।

न च [१०]तत्पदोपस्थितेर्व्यापारतानिर्वाहाय तस्यापि स्वातन्त्र्येण हेतुताया अवश्यकल्पनीयतया[११] तदपेक्षया तथाविधगुरुधर्मपुरस्कारेण साकाङ्क्षपदजन्य-पदार्थोपस्थितेर्हेतुताकल्पनमेव[१२] न्याय्यमिति वाच्यम्। घटकर्मत्वान्वयबोधे घटं कुम्भमित्याद्यानुपूर्वीप्रकारकज्ञानजन्यघटोपस्थितित्वादिना हेतुत्वे पदभेदेनानन्तकारण-तायामवच्छेदकगौरवात् तदपेक्षया तत्तत्स्थले तत्तदानुपूर्वीज्ञानत्वेनैव हेतुतानां पदार्थोपस्थितेश्च सामान्यतो घटोपस्थितित्वकर्मत्वोपस्थितित्वाभ्यां हेतुताद्वयस्य न्याय्यत्वात् पदार्थोपस्थितिनिष्ठजनकतायामानुपूर्वीज्ञान[१३]जन्यतातत्तदानुपूर्वीज्ञान-जन्यतावच्छेदकत्वे पदार्थोपस्थितित्वे न सम्मतस्य विशेषणविशेष्यभावे विनिगमना-विरहापाताच्चेति। तदसत्, पदार्थोपस्थिते: सामान्यतो घटोपस्थितित्वादिना हेतुत्वे उक्तातिप्रसङ्गस्यैव वारणसम्भवात्,[१४] तथा ह्यव्यवहितप्राक्क्षणावच्छिन्न-सामग्र्यादिकारणताया:[१५] कार्योत्पत्तिव्याप्यत्वे किञ्चिद्द्वारककारणतावच्छेदका-

१. स्यात्तदैवोक्तक्रमेण; २. प्रयोजकत्वोपगमे।
३. नियतमात्रं; ४. तस्य कार्योत्पादप्रयोजकत्वे च न किञ्चिदपि।
५. 'तत्र' इत्यस्य पाठ एव नास्ति; ६. विनष्टं तत्र; ७. यत्तु।
८. पदार्थोपस्थितिद्वारा तादृशपदज्ञानत्वेनैव हेतुत्वकल्पनमुचितम्।
९. साकाङ्क्षपदज्ञानस्य; १०. तत्पदार्थोपस्थिते:; ११. कल्पनीयत्वात्।
१२. पदार्थोपस्थितेरेक; १३. जन्यत्वस्यावच्छेदकत्वे पदार्थोपस्थितित्वेन सम्मतस्य।
१४. वारणासम्भवात्; १५. सामग्र्यधिकरणताया:।

वच्छिन्नस्तोम एव सामग्रीशब्देन विवक्षणीय:। अन्यथा स्मृतिस्वर्गाव्यवहितपूर्वक्षणे[१] निश्चयत्वे भागत्वावच्छिन्नसत्त्वेन[२] तद्घटितसामग्र्यसत्त्वात्तदुत्पादसामग्र्य-नियम्यत्वापत्ते:।

एवञ्चोक्तस्थले साकाङ्क्षपदज्ञानस्य स्वव्यापारकस्यासत्त्वेऽपि साक्षाज्जनकतावच्छेदकीभूततत्पदार्थोपस्थितित्वावच्छिन्नघटितसामग्र्यक्षतैवेति[३]। न च सामग्रीव्याप्तौ साक्षात्कारणतावच्छेदकावच्छिन्नानामिव व्यापारघटितकारणता-वच्छेदकावच्छिन्नीयव्यापारस्य सामग्रीशरीरेऽन्तर्भावनीयतया प्रकृतस्थले निराकाङ्क्षपदाधीनोपस्थितेराकाङ्क्षाज्ञानजन्यत्वाभावात्, आकाङ्क्षाज्ञानजन्य-व्यापारस्यासत्त्वान्न सामग्रीसमवहित इति वाच्यम्। उक्तस्थल एव साकाङ्क्ष-पदयो:[४] समूहालम्बनमेकं ज्ञानं तत्रार्थोपस्थितेर्वस्तुगत्याऽऽकाङ्क्षाविशिष्टपद-विषयकं यज्ज्ञानं तज्जन्यत्वेन तद्व्यापारसम्भवात्।

न च द्वारककारणतावच्छेदको यो धर्मस्तदवच्छिन्नजनकतारूपव्यापार-सत्त्वमेव कार्योत्पादप्रयोजकं वक्तव्यम्। प्रकृते च समूहालम्बनोपस्थितेर्[५]वास्तवा-काङ्क्षाविशिष्टपदज्ञानजन्यत्वेऽपि तं प्रत्याकाङ्क्षाविशिष्टपदज्ञानत्वेनाहेतुत्वात्[६], प्रकृतस्थले[७] तादृशव्यापारस्यैव दुर्लभत्वात्। न च तत्तदानुपूर्वीविशेषज्ञानजन्य-पदार्थोपस्थितित्वेन हेतुत्वमतेऽप्युक्तसमूहालम्बनानुपूर्वीज्ञानजन्यपदार्थोपस्थितिबलाद् घटकर्मत्वयोर्भेदान्वयबोधो दुर्वार इति वाच्यम्। घटमित्याद्यानुपूर्वीज्ञाननष्ट-घटपदज्ञानत्वावच्छिन्नजनकताकोपस्थितित्वेन हेतुत्वाभ्युपगमात् तादृशसमूहा[८]-लम्बनस्य च गृहीतवृत्तिककुम्भादिपदज्ञानत्वेनैव तादृशोपस्थितिजनकत्वात्, यत्तु स्वजन्यपदार्थोपस्थितिसम्बन्धेनाकाङ्क्षाज्ञानस्य साक्षादेव शाब्दबोधहेतुत्वं स्वीकरणीयम्। जन्यता च तत्तदानुपूर्वीविशेष[९]ज्ञानविषयाकाङ्क्षाघटक-तत्तत्पद[१०]त्वावच्छिन्ननिरूपिता ग्राह्या, आकाङ्क्षाविशिष्टपदज्ञानजन्योपस्थितित्वेन हेतुत्वेऽप्युक्तस्थलीयसमूहालम्बनजन्योपस्थिति(त)वारणाय तादृशजन्यतानिवेश-स्यावश्यकत्वात्।

एवञ्च दर्शितस्थले आकाङ्क्षा[११]जनकतावच्छेदकसम्बन्धात्मक-तादृशोपस्थितिविरहान्न शाब्दबोधापत्तिरिति, तदपि न सम्यक्। स्वजन्यपदार्थो-

---

१. प्राक्क्षणे; २. यागृत्वावच्छिन्न।
३. अक्षतत्वमेवेति; ४. यत्र साकाङ्क्षनिराकाङ्क्षपदयो:।
५. समूहालम्बनजन्योपस्थिते:; ६. जनकत्वात्।
७. तत्समवधानमकिञ्चित्करमेवेति वाच्यम्, तत्तत्पदार्थोपस्थितिं प्रति तत्तत्पदज्ञानत्वेनैव हेतुत्वात् क्वचिदप्युपस्थितौ आकाङ्क्षाविशिष्टपदज्ञानत्वेनाहेतुत्वात्।
८. समूहालम्बनज्ञानस्य; ९. विशेषात्मकाकाङ्क्षाघटक।
१०. तत्तत्पदज्ञानत्वावच्छिन्न; ११. आकाङ्क्षाज्ञान।

पस्थितिसम्बन्धेन शाब्दबोधवृत्तित्वस्य[1] स्वस्मिन् पदार्थोपस्थितिम[2]गृहीत्वा-ग्रहीतुमशक्यत्वेन तेन सम्बन्धेनाकाङ्क्षाज्ञानस्यान्यथासिद्धत्वात् तादृशोपस्थितित्वेन हेतुतायां[3] मानाभावाच्चेति[4]।

अत्रोच्यते—घटमित्याद्यानुपूर्वीज्ञानजन्यघटाद्युपस्थितित्वेन शाब्दबोधहेतुत्वे शक्यलाक्षणिकघटपटादिरूपानन्तार्थभेदभिन्नासु घटपदजन्यपदार्थोपस्थितिहेतुतास्व-वच्छेदककोटौ घटपदाव्यवहितोत्तरत्वा[5]वच्छिन्नावगाहित्वस्य निवेशाधिक्येनानन्तस्थले कारणतावच्छेदक[6]गौरवात्, तत्त[7]द्घटपद[8]प्रकारकजन्यतत्तदर्थोपस्थितित्वेन हेतुताया[9] घटमित्येतादृशानुपूर्वीज्ञानस्य चार्थविशेषमनिवेश्य तादृशानुपूर्वीज्ञानविशिष्टशाब्दत्वा-वच्छिन्नं प्रति तादृशानुपूर्वीज्ञानत्वेन हेतुतायाश्च कल्पने लाघवादाकाङ्क्षाज्ञान-हेतुतासिद्धि:। न चानुपूर्वीज्ञानविशिष्टशाब्दत्वावच्छिन्नं प्रति तादृशानुपूर्वीज्ञान-विशेषज्ञानजन्यतावच्छेदककोटौ विषयि[10]तानिवेशघटपदादिपदज्ञानजन्यघटाद्युपस्थिति-त्वावच्छिन्नजन्यतावच्छेदकघटकघटकारणत्वादिशाब्दबोधसाधारणतादृशो-पस्थितिविशिष्टशाब्दत्वेन समं लक्षणया घटपदार्थघटककर्मत्वबोधसाधारणस्य घटमित्येतादृशानुपूर्वीज्ञानजन्यतावच्छेदकस्य व्याप्यव्यापकभावासम्भवे न तयो: परस्परसहकारित्वं न सम्भवतीति वाच्यम्। कार्यतावच्छेदकसामानाधिकरण्यमात्रस्य परस्परसहकारितायां नियामकत्वात्।

न चाम्पदस्य सुब्विभक्तित्वेन लाक्षणिकत्वविरहात् कर्मत्वमेवार्थ:। तथा चाम्पदज्ञानजन्योपस्थितेर्नार्थभेदेन कारणताभेद इत्यमत्वावच्छिन्न[11]विषयिक-ज्ञानजन्योपस्थितित्वेनावश्यकल्पनीयतया हेतुतायामवच्छेदककोटौ अम्पदज्ञानांशे घटपदाव्यवहितोत्तरत्वावगाहित्वेन निवेशनमुचितम्, अम्पदत्वावच्छिन्नविशेष्य-घटपदाव्यवहितोत्तरत्वज्ञानत्वेन हेतुत्वान्तरकल्पनापेक्षया क्लृप्तायामेकहेतु-तायामेवा[12]वच्छेदकगौरवताया न्याय्यत्वादिति वाच्यम्। अमादिपदस्यापि शक्तिभ्रमेण कारणत्वादिबोधकत्वात् तज्ज्ञानस्याप्यर्थभेदेन कारणताबाहुल्यात्। एवं सुब्विभक्ते-र्लक्ष्यार्थेऽनादितात्पर्यमात्रं न कल्प्यते, न तु तस्यार्थान्तरे[13] लक्षणाया

---

१. पूर्ववर्तित्वस्य; २. पूर्ववर्तित्वमगृहीत्वा।

३. सम्बन्धतायाम्।

४. अन्यथा स्वाश्रयज्ञानजन्यपदार्थोपस्थितिसम्बन्धेनाकाङ्क्षाविषयकत्वादेरपि हेतुतापाताच्चेति।

५. घटपदाव्यवहितोत्तरत्वाम्पदत्वावच्छिन्नावगाहित्वस्य।

६. कारणतावच्छेदककोटौ; ७. तत्र तत्र।

८. पदत्वप्रकारकज्ञानजन्य; ९. हेतुतानाम्।

१०. विषयानिवेशे; ११. अम्पदत्वावच्छिन्न।

१२. हेतुतायामवच्छेदकगौरवसहिष्णुताया न्याय्यत्वादिति वाच्यम्।

१३. लक्षणया।

आधुनिकतात्पर्यस्य च ज्ञानसत्त्वेऽर्थान्तरशाब्दबोध एव[१] ज्ञायते। तथा च लक्षणयाप्यमाद्यर्थान्तरबोधकत्वमेवेत्यवधेयम्[२]। इदमत्राभिधेयम्[३]—आकाङ्क्षाज्ञानस्य शाब्दबोधहेतुतामते यत्र क्षणे घटमित्येतादृशानुपूर्वीज्ञानजन्यपदार्थोपस्थितिर्विद्यते तादृशज्ञानं विनष्टं तदुत्तरक्षणे शाब्दबोधानुदयात्। तदानीं समानानुमित्याद्युपपत्तये तत्र शाब्दसामग्रीप्रतिबन्धकतायां घटपदज्ञानजन्यघटोपस्थित्यम्पदज्ञानजन्य-कर्मत्वोपस्थितिस्तादृशी, तादृशानुपूर्वीज्ञानमपि निवेशनीयम्। तथा च तेषां त्रयाणामन्योन्ये न योग्यताज्ञानादिरूपकारणेन समं विशेषणविशेष्यभावे विनिगमनाविरहेण सामग्रीप्रतिबन्धकताबाहुल्यप्रसङ्गात्। आकाङ्क्षाज्ञान-जन्याकाङ्क्षाज्ञाननाशेऽपि[४] तज्जन्यपदार्थोपस्थितिसत्त्वेन शाब्दबोधस्यैवोत्पत्त्या समानविषयिकानुमित्युत्पादाभावेन तथाविधानुपूर्वीज्ञानजन्ये घटकर्मत्वोपस्थितिरेव निवेशनीये। तथा च तयोर्द्वयोरेव परस्पर[५]विशेषणविशेष्यभावे विनिगमनाविरहेण प्रतिबन्धकताबाहुल्यादेतन्मतापेक्षया तन्मते प्रतिबन्धकताधिक्यं स्फुटम्।

न चानुपूर्वी विशेषज्ञानशाब्दबोधहेतुतामतेऽम्पदं घटपदाव्यवहितोत्तरत्वा-भाववदिति हि मानसं प्रति तादृशेच्छाविरहविशिष्टाया घटपदज्ञानजन्यघटोप-स्थित्यम्पदज्ञानजन्यकर्मत्वोपस्थितिघटितशाब्दबोधसामग्र्याः प्रतिबन्धकत्वाकल्पनेन लाघवं तादृशसामग्रीक्षणेऽम्पदधर्मिकघटपदाव्यवहितोत्तरत्वनिर्णयस्यावश्यकतया तथाविधविपरीतनिश्चयवशादेव तादृशमानसानुत्पादानिर्वाह[६] इति वाच्यम्। यादृशज्ञाने विपरीतनिश्चयविधया तथाविधानुपूर्वीज्ञानविरोधि तथाविधकतिपयज्ञानेषु तादृशसामग्र्याः प्रतिबन्धकत्वं[७] कतिपयप्रतिबन्धकत्वाद् घटादावपि समानविषयिकानुमितौ घटपदादिविषयिकानन्तविधमानसादौ च तथाविधसामग्री-प्रतिबन्धकताया उपदर्शितविनिगमनाविरहेण प्रतिबन्धकताधिक्यप्रयुक्तगौरव-स्याशक्यसमाधानत्वात्। न चाकाङ्क्षाज्ञानस्य शाब्दबोधहेतुतामतेऽपि[८] सामग्रीप्रतिबन्धकतायां निवेशनीयम्; किन्तु जन्यतासम्बन्धेन घटमित्येतादृशानुपूर्वीज्ञानविशिष्टे घटकर्मत्वोप[९]स्थितिरेव, तथा च नोक्तगौरवावकाशः। न[१०] च तादृशानुपूर्वीज्ञाननाशे[११] तज्जन्यपदार्थोपस्थितिसत्त्वे

---

१. एव न जायते;
२. बोधकत्वमस्येवेत्यवधेयम्।
३. इदमत्र चिन्तनीयम्।
४. पदार्थोपस्थितित्वेन हेतुत्वमते उक्तस्थले आकाङ्क्षाज्ञाननाशेऽपि।
५. परस्परमपरेण च कारणेन समं विशेष्यविशेषणभावे।
६. निर्वाहादिति;
७. कतिपयप्रतिबन्धकतात्रुटावपि।
८. नोक्तत्रयं स्वातन्त्र्येण;
९. घटकर्मत्वोपस्थिती।
१०. न वा इति पाठः;
११. तादृशानुपूर्वीनाशे।

समानविषयिकानुमित्यनुपपत्तेर्विशेषणाभावेन[1] विशिष्टघटितसामग्र्यभावस्याक्षतत्वादिति वाच्यम्। तथा सति यत्र घटपदत्वाम्पदत्वप्रकारकज्ञानादर्थोपस्थितिस्तदानीमेवानुपूर्वीज्ञानं[2] तत्रापि भवन्मते शाब्दबोधोदयेन तत्र समानविषयिकानुमित्याद्यापत्तेः। जन्यतासम्बन्धेनानुपूर्वीज्ञान[3]विशिष्टपदार्थोपस्थितेरभावाद् जनकतासम्बन्धेन पदार्थोपस्थितिविशिष्टानुपूर्वीज्ञानस्य[4] निवेशमादाय विनिगमनाविरहस्य दुर्वारत्वाच्च। उपस्थितौ तद्विशेषणीभूततादृशज्ञाने वा कारणान्तरवैशिष्ट्यं निवेश्यत इत्यत्र विनिगमक[5]दानस्यावश्यकत्वाच्च।

अत्रेदं समाधीयते—आकाङ्क्षाज्ञानस्य स्वातन्त्र्येण हेतुता[6]मतेऽपि तन्नाशानन्तरं तज्जन्यपदार्थोपस्थितिबलाच्छाब्दबोधस्स्वीक्रियते। पदार्थोपस्थितेस्तद्व्यापारत्वोपगमाच्छाब्दबोधाव्यवहितपूर्वक्षणे[7] तदसत्त्वेऽपि न तस्य कारणत्वानुपपत्तिः। एवञ्च भवन्मत इवैतन्मतेऽप्यानुपूर्वीविशेषज्ञानजन्यपदार्थोपस्थितिरेव सामग्रीप्रतिबन्धकतायां निवेशनीये, न तु स्वातन्त्र्येणानुपूर्वीविशेषज्ञानस्य[8] निवेशमादाय विनिगमनाविरहस्य दुर्वारत्वाच्च। उपस्थितौ तद्विशेषणीभूततादृशज्ञाने वा वैशिष्ट्यं निवेश्यत इत्यत्र विनिगमकदानस्यावश्यकत्वाच्च नोक्तगौरवावकाशः। घटा[9]दिपदेऽप्यव्युत्पन्नस्य कुम्भादिपदेषु व्युत्पन्नस्य घटं कुम्भं कर्मत्वमित्येतादृशनानाविषयकसमूहालम्बनस्य घटकर्मत्वाद्युपस्थित्यनन्तरं शाब्दबोधापत्तेश्च घटपदज्ञानत्वावच्छिन्नकारणतावदर्थोपस्थितिरूपकारणविरहेणैव न सम्भवति यत्राम्पद इत्येतादृ[10]शविपरीतानुपूर्वीज्ञानजन्यघटकर्मत्वोपस्थितिर्वर्तते। तत्र घटमित्येतादृशज्ञानजन्यव्यापारविरहादेव न शाब्दबोधापत्तिः। अव्यवहितपूर्व[11]क्षणे करणव्यापारसमवधानस्यापि कार्योत्पत्तावपेक्षित इति यत्र तादृशस्थल एव घटमित्याद्यानुपूर्वीज्ञान[12]ध्वंससंस्कारादिकं वर्तते तत्रापि नाति(व्याप्ति)प्रसङ्गः, ध्वंससंस्कारादेवानुपूर्वीज्ञानजन्यत्वेऽपि घटकर्मत्वान्वयबोधजनकताविरहेण व्यापारताविरहात्, तज्जन्यत्वे सति प्रकृतकार्यासाधारणकारणस्यैव[13] तद्व्यापारत्वात्। न च तादृशस्थल एव घटमित्याद्यानुपूर्वीज्ञान-

---

१. विषयकानुमित्यनुपपत्तिः; २. विशेषज्ञानम्।
३. विशेषज्ञान; ४. विशेषज्ञानस्य।
५. विनिगमकदानस्याशक्यत्वाच्च; ६. शाब्दबोधहेतुतामतेऽपि।
७. प्राक् क्षणे; ८. विशेषज्ञानमपीति नोक्तगौरवावकाशः।
९. घटादिपदेष्वव्युत्पन्नस्य कुम्भादिपदे च व्युत्पन्नस्य पुंसो घटं कुम्भः कर्मत्वमित्येतादृशनानापदविषयकसमूहालम्बनजन्यघटकर्मत्वाद्युपस्थित्यनन्तरं शाब्दबोधापत्तिश्च घटपदज्ञानत्वावच्छिन्नजनकताकपदार्थोपस्थितिरूपकारणविरहेणैव न सम्भवतीति पाठः।
१०. घटमित्येतादृशानुपूर्वीज्ञानव्यापारविरहादेव शाब्दबोधापत्तिः।
११. प्राक्क्षणे; १२. ज्ञानजन्यध्वंस; १३. जनकस्यैव।

जन्यतादृशानुपूर्वीघटकयत्किञ्चिद्विषयिणी प्रकृतशाब्दबोधौपयिकयोग्यतादि-विषयिणी स्मृतिर्दैववशेनोत्पन्ना तत्र तादृशस्मृतेस्तथाविधानुपूर्वीज्ञानजन्यत्वेन प्रकृत-शाब्दबोधजनकत्वेन च व्यापारत्वसम्भवाच्छाब्दबोधापत्तिर्दुर्वारैवेति वाच्यम्। करण-जन्यतावच्छेदकीभूतो य: प्रकृतकार्यजन्यतावच्छेदकीभूतो यो धर्मस्तदवच्छिन्नस्यैव प्रकृतव्यापारपदेन विवक्षणात् प्रकृतशाब्दबोधजनकतावच्छेदकयोग्यताज्ञान-घटमित्येतादृशानुपूर्वीज्ञानजन्यतावच्छेदकत्वविरहेण तादृशस्मृतेरतथात्वात्।

न चैवं घटाद्युपस्थितेरपि व्यापारत्वासम्भव: घटपदज्ञानत्वाव-च्छिन्नजनकताकघटोपस्थित्यादेर्घटपदज्ञानादिजन्यतावच्छेदकत्वादिति वाच्यम्। तादृशधर्मस्याश्रयभिया पदज्ञानजन्यतावच्छेदकत्वेऽपि[1] यादृशानतिप्रसक्तरूपो धर्मस्तज्जन्यतावच्छेदकस्तेनैव[2] शाब्दबोधहेतुतायास्स्वीकरणीयतयाऽनुपपत्ति-विरहात्। यत्र करणजन्यतावच्छेदके फलजनकतावच्छेदकत्वं सम्भवति, तत्रैवेयं रीति:। अन्यत्र साक्षात्कारजनकतावच्छेदकावच्छिन्नसमवधानमेव कार्योत्पत्ति-प्रयोजकमुपेयं कलशमित्याद्यानुपूर्वीज्ञानजन्यशाब्दबोधे घटमित्याद्यानुपूर्वी-ज्ञानजन्यशाब्दबोधे घटमित्याद्यानुपूर्वीज्ञानस्य व्यभिचारवारणाय च स्वाव्यहितोत्तरोप-स्थित्यव्यवहितोत्तरत्वसम्बन्धेन तत्तदानुपूर्वीज्ञानविशिष्टत्वं तत्तदानुपूर्वीज्ञान-जन्यतावच्छेदकमुपेयमत आनुपूर्वीज्ञाननाशानन्तरोत्पन्नतज्जन्योपस्थितिजन्य-शाब्दबोधस्य नासङ्ग्रह इति दिक्।

यत्त्वाकाङ्क्षासंशयाच्छाब्दबोधानुत्पत्त्याकाङ्क्षानिश्चयत्वेनैव शाब्दबोधहेतुता वाच्या[3], तदपेक्षया लाघवान्निराकाङ्क्षज्ञानत्वेन प्रतिबन्धकत्वमेवोचितम्।

न च कर्मत्वपदं घटपदनिराकाङ्क्षमित्येतादृशज्ञानदशायां घटमित्याद्यानु-पूर्वीज्ञानादपि शाब्दबोधानुपपत्ति:। तत्पदद्वयज्ञानजन्यशाब्दबोधे तद्धर्मिकापर[4]-पदार्थाकाङ्क्षाविरहज्ञानत्वेन प्रतिबन्धकत्वं न सम्भवति। घटपदकर्मत्वपदज्ञानजन्य-घटकर्मत्वभेदान्वयबोधरूपप्रतिबध्यस्याप्रसिद्धे:[5] घटपदाम्पदज्ञानजन्ये घटकर्मत्वयो-र्भेदान्वयबोधेऽम्पदधर्मिकघटपदाकाङ्क्षाविरहज्ञानस्य प्रतिबन्धकतया च घट: कर्मत्वमित्यादिवाक्याच्छाब्दबोधापत्तिर्दुर्वारैवेति वाच्यम्। यतो घट: कर्मत्वमित्यादि-पदज्ञानाद्घटकर्मत्वयोर्भेदान्वयबोधवारणाय निराकाङ्क्षत्वज्ञानस्य प्रतिबन्धकता न कल्प्यते। तत्र घटपदत्वाम्पदयो:[6] प्रकारकज्ञानजन्यघटकर्मत्वोपस्थितिरूपकारण-

---

१. जन्यतानवच्छेदकत्वेऽपि।
२. तेन रूपेणैव। साक्षात्कारणतावच्छेदकावच्छिन्न।
३. वाच्या, तथा च।
४. तदेकतरधर्मिकापरपदाकाङ्क्षाविरहज्ञानत्वेन प्रतिबन्धकत्वञ्च न सम्भवति।
५. स्वघटकर्मत्वयोर्भेदान्वयबोधरूपप्रतिबध्यस्याप्रसिद्धे:।
६. अम्पदत्वादि।

विरहेणैव तादृशान्वयबोधवारणासम्भवात्। भवन्मते पदार्थोपस्थितीनां तादृशरूपेण कारणताया आवश्यकत्वेन[१] प्रागेव दर्शितत्वाद् अपि तु अम्पद इत्येतादृशविपरीतानुपूर्वीकपदज्ञानात्तादृशान्वयबोधापत्तिवारणैव[२] तथा चाम्पदत्वप्रकारकज्ञानेऽपि न ज्ञानजन्यशाब्दबोधेऽम्पदत्वावच्छिन्नधर्मिकघटपदाव्यवहितोत्तरत्वाभावप्रकारकज्ञानत्वेनैव प्रतिबन्धकत्वं कल्प्यते, तत्र च नानुपपत्तिलेशोऽपि।

न च यत्राम्पदे घटपदाव्यवहितोत्तरत्वाभावज्ञानं वर्त्तते[३], कलशमित्याकारकानुपूर्वीज्ञानं च तत्र शाब्दबोधे व्यभिचारः, तथाविधनिराकाङ्क्षज्ञानपदत्वस्यैव तदभावजन्यतावच्छेदकत्वोपगमात् तत्तत्पदत्वप्रकारेण निराकाङ्क्षत्वाभावज्ञानस्य तत्तत्पदत्वप्रकारकज्ञानजन्यपदार्थोपस्थितीनां भाने चान्यसहकारेणैव[४] फलोपधायकत्वोपगमान्नातिप्रसङ्गः। तत्र चाम्पदं धर्मितावच्छेदकीकृत्य न घटपदाव्यवहितोत्तरत्वज्ञानं न वा तदभावज्ञानं तत्राप्यम्पदत्वादिप्रकारकज्ञानादिनैवान्वयबोध इति, तदसत्। संशयसाधारणस्याकाङ्क्षाविरहज्ञानस्य प्रतिबन्धकत्वेऽप्रामाण्यनिश्चयत्वावच्छिन्नाभावस्यैव निवेशनीयतया गौरवाद् आकाङ्क्षानिश्चयत्वावच्छिन्नहेतुतायामप्रामाण्यज्ञानत्वावच्छिन्नाभावस्यैव निवेशनीयत्वात्।

एवं निराकाङ्क्षज्ञानस्य प्रतिबन्धकत्वे घटपदत्वाम्पदत्वप्रकारकज्ञानजन्यपदार्थोपस्थितिघटितानुमितिसामग्रीप्रतिबन्धकतायामेकत्रैवाम्पदत्वावच्छिन्नधर्मिकघटपदाकाङ्क्षाभावघटपदत्वावच्छिन्नधर्मिकाम्पदत्वाकाङ्क्षाभावग्रहाभावौ निवेशनीयौ, तथाविधैकतरज्ञानसत्त्व एव शाब्दबोधानुदयेन समानविषयिकानुमितेरुत्पत्तिरिति तयोर्मिथो विशेषणविशेष्यभावे विनिगमनाविरहेण गौरवम्। अस्मिन्[५] मते चाम्पदत्वावच्छिन्नधर्मिकघटपदसाकाङ्क्षत्वग्रहयोरेकतरसत्त्व[६] एव कार्योत्पत्त्या तादृशज्ञानयोरेकतरत्वं[७] निवेश्य पृथक्कारणत्वस्य[८] कल्पनात् तयोर्विशेषणविशेष्यभावे न विनिगमनाविरहस्याप्रसक्तिः। एवं निराकाङ्क्षताज्ञानस्य प्रतिबन्धकतामतेऽम्पदत्वादिसामानाधिकरण्येन घटपदोत्तराम्पदे घटपदाव्यवहितोत्तराभावग्रहस्यैव[९]

---

१. आवश्यकत्वस्याप्रागेव दर्शित्वात्।

२. वारणायैव।

३. निराकाङ्क्षत्वज्ञानाभावस्य।

४. चान्योन्यसहकारेणैव।

५. अस्मन्मते।

६. ग्रहघटपदत्वावच्छिन्नधर्मिकाम्पदसाकाङ्क्षत्वग्रहयोरेकतरसत्त्व इति पाठः।

७. ज्ञानयोरेकैकमिति पाठः।

८. पृथक्-पृथक्कारणत्वयोः कल्पना तयोर्विशेष्यविशेषणभावे विनिगमनाविरहस्याप्रसक्तेः।

९. व्यवहितोत्तरत्वाभावग्रहे घटमित्याद्यानुपूर्वीज्ञानाच्छाब्दबोधानुदयप्रसङ्गः। न च तत्तदम्पदत्वावच्छेदेन घटपदाव्यवहितोत्तरत्वभावग्रहस्यैव प्रतिबन्धकताया उपगन्तव्यतया नायं दोष इति वाच्यम्। तथा सति पदव्यक्तिभेदेनानन्तप्रतिबन्धकतापातात्।

प्रतिबन्धकतया उपगन्तव्यतया नायं दोष इति वाच्यम्, तथा सति पदव्यक्तिभेदे-नानन्तप्रतिबन्धकतापातात्।

न चाकाङ्क्षाज्ञानस्यापि पदव्यक्तिभेद[1] आवश्यकः। एकपद[2]धर्मिकाकाङ्क्षाज्ञानदशायां समानानुपूर्वीकपदव्यक्त्यन्तरमात्रधर्मिकतत्तदर्थपरत्वग्रहसत्त्वे शाब्दबोधापत्तिवारणाय तत्तत्पदधर्मिकाकाङ्क्षाज्ञानत्वतथाविधतात्पर्यज्ञानत्वाभ्यां शाब्दबोधहेतुतामभ्युपेत्य तादृशाकाङ्क्षाज्ञानतात्पर्यज्ञानयोः परस्परसहकारस्या-वश्यकत्वा[3]दिति वाच्यम्। घटपदाव्यवहितोत्तराम्पदं घटकर्मत्वपदमित्याकारकस्यानुपूर्वीविशेषधर्मितावच्छेदकतात्पर्यज्ञानस्यैव शाब्दबोधहेतुत्वोपगमे-नोक्तातिप्रसङ्ग[4]निरासात्। न चैवमाकाङ्क्षाज्ञानस्य शाब्दबोधहेतुत्वमकिञ्चित्करं घटः कर्मत्वमित्यादौ तादृशतात्पर्यज्ञानविरहेणैव शाब्दबोधानुत्पादसम्भवादिति वाच्यम्, तादृशतात्पर्यज्ञानस्यैवाकाङ्क्षाज्ञानतया तद्धेतुतयैवाकाङ्क्षाज्ञानहेतुतासिद्धेः। आनुपूर्वीविशेषधर्मितावच्छेदकतात्पर्यज्ञा[5]नस्य तात्पर्यधर्मितावच्छेदकानुपूर्वी-विशेषज्ञानस्य[6] हेतुत्वमित्यत्र विनिगमनाविरहेण कारणताद्वयस्य प्रसक्तावपि पदव्यक्तिभेदेन कारणताकल्पनापेक्षया लाघवस्याक्षतत्वात्। न च भव[7]न्मते विशेष्यतासम्बन्धावच्छिन्नप्रतियोगिताकनिराकाङ्क्षत्वज्ञानाभावविशिष्टविशेष्यकतात्पर्य-ज्ञानत्वेन हेतुत्वोपगमान्नोक्तदोष इति वाच्यम्। निराकाङ्क्षत्वज्ञाने त[8]त्पुरुषीयत्व-निवेशेन गौरवात्।

............. मिते विक्रमादित्यवसरे चैत्रशुक्लाष्टमीचन्दवारेऽलेखि मया।

**मुदा बालगोपालविदुषाऽऽकाङ्क्षावादो मतिप्रदः ।**
**स्वार्थपरार्थं चैतेन तुष्यतां श्रीगुरुः सदा ।।**

**।। इति श्रीरघुदेवभट्टाचार्यविरचित आकाङ्क्षावादः ।।**



---

१. भेदेन कारणताभेद आवश्यकः।
२. पद इति पाठो नास्ति।
३. आवश्यकत्वात्तदिति वाच्यम्।
४. प्रसङ्गविरहेणैव शाब्दबोधानुत्पादसम्भवादिति वाच्यम्।
५. ग्रहस्य।
६. वा इत्यधिकः पाठः।
७. मन्मते इति पाठः।
८. तत्तत्पुरुषीयत्वनिवेशेन गौरवादिति। इति श्रीरघुदेवभट्टाचार्यकृत आकाङ्क्षाविचारः समाप्तः। इति पाठः उपलभ्यते।

## परिशिष्टम्-क

# ग्रन्थे समुद्धृतानां केषाञ्चन नियमविशेषाणां कार्यकारणभावानाञ्च सूची

१. शब्दज्ञानस्य शाब्दत्वावच्छिन्नं प्रति शब्दज्ञानत्वेन वर्णज्ञानत्वेन वा हेतुता। (पृ.१)

२. ज्ञानत्वेन आत्मत्वेनैव वा शाब्दत्वावच्छिन्नं प्रति हेतुता। (पृ.१)

३. पदज्ञानत्वेनैव शब्दत्वावच्छिन्नहेतुत्वकल्पनम्। (पृ.२)

४. लक्षणाज्ञानाधीनशाब्दबोधप्राक्कालेऽपि शक्तिज्ञानमावश्यकम्। (पृ.२)

५. तद्रूपावच्छिन्नपदविषयकोपस्थितिव्यतिरेकप्रयुक्तप्रकृतान्वयबोधाभावप्रयोजकाभावप्रतियोगिस्वावच्छिन्नविषयकोपस्थितिको यो धर्मस्तद्वत्त्वमेवैतद्रूपावच्छिन्नपदनिरूपिताकाङ्क्षा, कर्मत्वविशेष्यकाधेयत्वादिसंसर्गकघटादिप्रकारकान्वयबोधे चामादिपदेष्वेव घटपदादिनिरूपिता एतादृशाकाङ्क्षा, तादृशान्वयबोधे घटपदत्वावच्छिन्नविषयकोपस्थितेरम्पदत्वावच्छिन्नविषयकोपस्थितेश्च हेतुता। (पृ.२-३)

६. घटपदज्ञानव्यतिरेकप्रयुक्ततथाविधान्वयबोधाभावप्रयोजकव्यतिरेकप्रतियोगित्वप्रकारकज्ञानत्वादिना तथाविधान्वयबोधाभावविशेष्यकघटपदज्ञानव्यतिरेकाम्पदज्ञानव्यतिरेकप्रयुक्तत्वप्रकारकज्ञानत्वादिना वा तथाविधान्वयबोधहेतुता वाच्या। (पृ.४)

७. घटपदत्वप्रकारकज्ञानत्वाम्पदत्वप्रकारकज्ञानत्वेनैव हेतुता। (पृ.४)

८. तत्तत्पदार्थान्वयबोधे तत्तत्पदसमभिव्याहारज्ञानत्वेनैव हेतुत्वम्। (पृ.५)

९. स्वविशेष्यकसमभिव्याहृततत्पदज्ञानव्यतिरेकप्रयुक्तान्वयानुभवाभाववत्ताज्ञानस्यैव हेतुत्वम्। (पृ.५)

१०. तत्तत्पुरुषीयान्वयबोधे तत्तत्पुरुषविशेष्यकप्रयुक्तान्वयानुभवाभाववत्ताज्ञानत्वेनैव हेतुता। (पृ.५)

११. समवायसम्बन्धेनान्वयबोधं प्रति समवायविशिष्टविशेष्यताप्रत्यासत्यैव निरुक्तान्वयानुभवाभावरूपाकाङ्क्षाज्ञानस्यैव हेतुत्वम्। (पृ. ५)

१२. विषयिताविशिष्टसामानाधिकरण्यसम्बन्धेन निरुक्तान्वयानुभवाभावविशिष्ट-ज्ञानत्वेनैव वाकाङ्क्षाज्ञानस्य हेतुता। (पृ.६)

१३. राजपदपुरुषपदार्थयोरन्वयबोधे राजपदं पुरुषपदोपस्थापितार्थान्वितस्वार्थ-प्रतीतिजनकत्वाभिप्रायकमित्याकारकसमभिव्याहारज्ञानस्य हेतुत्वमावश्यकम्। (पृ.६)

१४. पदज्ञानस्य पदजन्यपदार्थोपस्थितिद्वारैव हेतुता। (पृ.८)

१५. तादृशपदद्वयजन्यशाब्दबोधे तादृशाभिप्रायविषयत्वज्ञानहेतुत्वम्। (पृ.९)

१६. विशिष्य तत्तत्पदाव्यवहितत्वे सति तत्तत्पदोपात्तस्यैव ज्ञानं शाब्दबोधजनकम्। (पृ.११)

१७. प्रथमान्तपदोपस्थाप्ये संख्याप्रकारकबोधेऽपि तादृशाकाङ्क्षैव नियामिका। (पृ.१३)

१८. तादृशान्वयबोधे घटपदज्ञानजन्यघटोपस्थितित्वाम्पदज्ञानजन्यकर्मत्वोपस्थिति-त्वादिना हेतुत्वम्। (पृ.१५)

१९. विशेषणवैशिष्ट्यावच्छिन्ननिरूपितविलक्षणाधिकरणत्वमेव विशिष्टसत्त्वं तच्च विशेष्यविशेषणोभयाधिकरणत्वं नियतम्। (पृ.१६)

२०. यत्तु स्वजन्यपदार्थोपस्थितिसम्बन्धेनाकाङ्क्षाज्ञानस्य साक्षादेव शाब्दबोध-हेतुत्वम्। (पृ.१९)



# परिशिष्टम्-ख

# प्रकीर्णानि

## (क) ग्रन्थे समुद्धृतानां दोषाणां सूची

| दोषाः | पृष्ठ-संख्या |
|---|---|
| १. व्यभिचारः | २,१३,१४,१४,२० |
| २. अतिप्रसङ्गः | १५,२२ |
| ३. सङ्करप्रसङ्गः | १४ |
| ४. विधेयाविमर्शः | १३ |

## (ख) ग्रन्थे चर्चिता केचन ग्रन्थकाराः, विचारकाः वा, तेषां वाक्यानि

१. आलङ्कारिकाः — पृ.सं. १३

न्यक्कारो ह्ययमेव मे यदरयस्तत्राप्यसौ तापसः
सोऽप्यत्रैव निहन्ति राक्षसकुलं जीवत्यहो रावणः ।
धिक्धिक् शक्रजितं प्रबोधितवता किं कुम्भकर्णेन वा
स्वर्गग्रामटिकाविलुण्ठनवृथोच्छूनैः किमेभिर्भुजैः ।।
साहित्यदर्पणः (सविमर्श-हिन्दी-व्याख्यासहितः)
पृ. सं. ६, चौखम्बा विद्याभवन, वाराणसी १९८८।

| | |
|---|---|
| २. दीधितिकारः | पृ. सं. १६ |
| ३. एकाक्षरकोशः | पृ. सं. १६ |
| ४. यत्तु | पृ. सं. ३ |
| ५. लेखकः | पृ. सं. १२ |
| ६. मीमांसकः | पृ. सं. १२ |
| ७. प्राचां | पृ. सं. १ |
| ८. नव्याः | पृ. सं. १० |
| ९. मौनिः | पृ. सं. १२ |

●

पञ्जीकरणसंख्या—६९८१/५७

# सुसङ्ग्राह्याणि अभिनवप्रकाशनानि

१. **कातन्त्रव्याकरणम्** : आचार्यशर्ववर्मप्रणीतो व्याकरणशास्त्रस्यापूर्वोऽयं ग्रन्थः श्रीदुर्गसिंहकृताभ्यां **कातन्त्र-वृत्ति-टीकाभ्यां**, श्रीमत्रिलोचनदासकृतया **'कातन्त्रवृत्तिपञ्जिका'**टीकया, कविराजसुषेणशर्मकृतया **'कलापचन्द्र'**टीकया, अथ च डॉ. जानकीप्रसादद्विवेदिकृतया **समीक्षया**, विवरणात्मिकया भूमिकया, अनुसन्धानात्मक-परिशिष्टैश्च सनाथीकृत्य सुसम्पाद्य प्रकाशितः — प्रथमो भागः ३५०.००
द्वितीयो भागः खण्डम्-१ ५००.००
द्वितीयो भागः खण्डम्-२ ६००.००

२. **परशुरामकल्पसूत्रम्** : तन्त्रशास्त्रस्य सूत्रात्मकोऽयं ग्रन्थस्तन्त्रसिद्धान्तैः सह सर्वासामुपासनानां प्रतिपादकोऽस्ति। श्रीरामेश्वरवृत्तेर्मुख्यांशेन समलङ्कृतो **नीरक्षीरविवेका**भिधेन **भाषाभाष्येण** संवलितः प्रो. विद्यानिवासमिश्रैः, डॉ. परमहंसमिश्रैश्च सुसम्पाद्य प्रकाशितः — २८०.००

३. **सौभाग्यरत्नाकरः** : तन्त्रशास्त्रस्य समृद्धोऽयं ग्रन्थः श्रीविद्यानन्दनाथविरचितः सौभाग्यसंवर्द्धनस्य सदुद्देश्येन तरङ्गायितः श्रीविद्यायाः सम्प्रदायसिद्धानां राद्धान्तानां समुपासनपद्धतीनाञ्च प्रतिपादको रत्नाकरसदृशो विराजते। स्वात्मविमर्शाख्यया भूमिकया विभूष्य डॉ. परमहंसमिश्रैः सम्पाद्य प्रकाशितः— ३५०.००

४. **प्राणतोषिणी** : श्रीरामतोषणभट्टाचार्येण प्रणीतस्तन्त्रशास्त्रस्य महनीयोऽयं ग्रन्थः। अस्य प्रथमभागस्य विषयवस्तु सर्ग-धर्म-अर्थेति काण्डत्रयेण विभज्य प्रस्तुतम्। ग्रन्थोऽयं सुविस्तृतया भूमिकया समलङ्कृत्य डॉ. हरिवंशकुमारपाण्डेयेन सुसम्पाद्य प्रकाशितः— प्रथमो भागः ४५०.००

५. **जैमिनीयं सामगानम्** : जैमिनिमुनिना प्रणीतं ग्रन्थरत्नमिदं द्वितीयसंस्करणात्मकं प्रकाशतामानीतम्। ग्रन्थेऽस्मिन् सामगानस्यानेकेषां छन्दसामुपबृंहणमस्ति। ग्रन्थोऽयं श्रीरामनाथदीक्षितस्य विस्तृतया भूमिकया सुशोभितोऽस्ति— २००.००

६. **केदारखण्डः** : स्कन्दपुराणीयमाहेश्वरखण्डान्तर्गतकेदारखण्डस्य प्रकाशनं प्रो. वाचस्पतिद्विवेदिनो **हिन्दी-भाषानुवादेन** सह कृतमस्ति। पौराणिककथानकैः सत्कर्मणो भगवत आशुतोषस्य भक्तिभावनायाः सततं प्रेरणाप्रदाने पूर्णरूपेण सक्षमोऽयं ग्रन्थः। प्रो. द्विवेदिनो विस्तृतया भूमिकया सनाथितोऽयं प्रकाशितः— प्रथमो भागः ४६०.००

७. **सात्वतसंहिता** : वैष्णवतन्त्रस्य मूर्धन्यतमोऽयं ग्रन्थः अलशिङ्गभट्टस्य व्याख्यया सनाथितः प्रकाशतामानीतः। श्रीव्रजवल्लभद्विवेदिना सम्पादितस्य सभाष्यस्य ग्रन्थस्यास्य द्वितीयं संस्करणं प्रस्तूयते— ३६०.००

८. **श्रीमालिनीविजयोत्तरतन्त्रम्** : तन्त्रशास्त्रस्य ग्रन्थोऽयं डॉ. परमहंसमिश्रस्य **'नीरक्षीरविवेक'**भाषाभाष्येण समलङ्कृत्य प्रकाशतामानीतः। ग्रन्थोऽयं सम्पूर्णाध्वावर्गोपरि स्वकीयां स्वतन्त्रां दृष्टिं प्रस्तौति। स्वात्म-विमर्शात्मिकया भूमिकया विभूष्य डॉ. परमहंसमिश्रैः सम्पादितोऽयं ग्रन्थः प्रकाशितः— २४०.००

९. **बौद्धदर्शन और मार्क्सवाद** (परिसंवाद-६) : विश्वविद्यालयस्यास्य श्रमणविद्यासङ्कायेन समायोजितायां सङ्गोष्ठ्यां विश्रुतैर्विद्वद्भिः पठितानां विशिष्टनिबन्धानां सङ्कलनं विहितम्। संस्कृत-हिन्दी-आङ्ग्ल-भाषामयान् निबन्धान् सङ्कलय्य डॉ. रमेशकुमारद्विवेदिना सम्पादितोऽयं ग्रन्थः प्रकाशितः— ३६०.००

१०. **मैत्र्युपनिषद्** : श्रीरामतीर्थविरचितया **'दीपिका'**ख्यसंस्कृतव्याख्यया, प्रो. ओमप्रकाशपाण्डेयेन सनाथितया **हिन्दीव्याख्यया** विस्तृतया भूमिकया सम्भूष्य सम्पाद्य च प्रकाशितोऽयं ग्रन्थः— १८०.००

११. **श्रीमद्भागवत में सांख्ययोग के तत्त्व : एक परिशीलन** : श्रीमद्भागवतस्य दार्शनिकविश्लेषणात्मकोऽयं ग्रन्थः प्रो. विमलाकर्नाटकमहोदयाभिर्हिन्दीभाषायां प्रणीतः। दर्शनेतिहासाख्यपटलद्वयेन विभक्तोऽयं ग्रन्थो विस्तृतया भूमिकया परिशिष्टादिभिश्च सम्भूष्य सम्पाद्य च प्रकाशितः— ४००.००

१२. **तत्त्वबिन्दुः** : श्रीवाचस्पतिमिश्रप्रणीतोऽयं ग्रन्थः सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य विश्वविश्रुतस्य सरस्वतीभवन-पुस्तकालयस्य हस्तलिखितपाण्डुलिपिमाधारीकृत्य डॉ. रजनीशकुमारशुक्लेन सम्पादितः प्रकाशतामानीतः— १२०.००

१३. **शिवलीलार्णवः** : महाकविना श्रीनीलकण्ठदीक्षितेन प्रणीतं द्वाविंशसर्गात्मकं महाकाव्यमिदं भगवतः शिवस्य चतुष्षष्टिलीलानां लालित्यपूर्णं वर्णनं प्रस्तौति। सुविस्तृतया भूमिकया विविधैः परिशिष्टैश्च सम्भूष्य डॉ. ददन-उपाध्यायेन सम्पादितमिदं महाकाव्यं प्रकाशितम्— २००.००

---

*पत्रव्यवहारसङ्केतः*— **निदेशकः**, प्रकाशनसंस्थानस्य, सम्पूर्णानन्दसंस्कृतविश्वविद्यालये, वाराणसी-२२१००२